*Parimal Sanskrit Series No. 19.*

# KĀVYAPRAKĀŚA

OF

## MAMMAṬĀCĀRYA

WITH '*ĀDARŚA*' SANSKRIT
COMMENTARY OF
MAHESWARĀCĀRYA

WITH AN INTRODUCTION
IN HINDI

*By*

**PT. T. C. UPRAITI**

## Vol. 2.

**1985**

**PARIMAL PUBLICATIONS**

**DELHI** * **INDIA**

*Published by* :
Parimal Publications
27/28 Shakti Nagar
DELHI-110007
INDIA





*Edition* 1985

(The text portion with commentary has been taken from the edition, published under Calcutta Sanskrit Series 1936)

*Price* : Rs. 250.00 (Two Vols.)

*Printed at* : Laxmi Composing Agency Babarpur main Road Delhi & Kwality offset Printing Press, Indira Market Naraina, New Delhi-110028.

परिमल संस्कृत ग्रन्थमाला संख्या-१६

श्रीमम्मटाचार्यप्रणीतः

# काव्यप्रकाशः

श्रीमन्महामाहेश्वराचार्यकृत
'आदर्शाख्यसंस्कृतव्याख्यया'
समुद्भासितः

भूमिकालेखकः
पं० थानेशचन्द्र उप्रैती, साहित्याचार्य

द्वितीयो भागः

१९८५
परिमल पब्लिकेशन्स
दिल्ली भारत

प्रकाशक :

परिमल पब्लिकेशन्स

२७/२८ शक्ति नगर

दिल्ली-११०००७

(भारत)





संस्करण १९८५

मूल्य : २५०.०० (२ भाग)

(ग्रन्थ का मूल भाग एवं संस्कृत व्याख्या कलकत्ता संस्कृत सीरिज के अन्तर्गत पूर्व प्रकाशित ग्रन्थ से साभार गृहीत है)

मुद्रक : भूमिकाभाग—लक्ष्मी कम्पोजिंग एजेन्सी बाबरपुर मेन रोड दिल्ली तथा मूलग्रन्थ—क्वालिटी आफसेट प्रिंटिंग प्रेस, इन्दिरा मार्केट, नरायणा नई दिल्ली ११००२८.

# षष्ठ उल्लासः

(७०) शब्दार्थचित्रं यत्पूर्वं काव्यद्वयमुदाहृतम् ।
गुणप्राधान्यतस्तत्र स्थितिः शब्दार्थचित्रयोः(A) ॥ ४८ ॥

न तु शब्दचित्रेऽर्थस्याचित्रत्वम् अर्थचित्रे वा शब्दस्य ।

तथा चोक्तम्—

(B)रूपकादिरलङ्कारस्तस्यान्यैर्बहुधोदितः ।
न कान्तमपि निर्भूषं विभाति वनिताननम् ॥

---

कैश्चित् शब्दचित्रमेवालङ्कार उच्यते नार्थचित्रम्, कैश्चित्तु अर्थचित्रमेवालङ्कार उच्यते न शब्दचित्रमिति तन्निराकरणेन उभयोरप्यलङ्कारत्वं स्वीकर्त्तुमाह—शब्दार्थेति। 'यत् पूर्व'मिति 'शब्दचित्रं वाच्यचित्र'मित्यादिनेत्यर्थः। 'गुणप्राधान्यतः' इत्युपलक्षणम्, तुल्यप्राधान्यत इत्यपि बोध्यम्, [1]एकतराभ्युपगमनिरासमात्रे तात्पर्यात्[1]*। न तु शब्दचित्र इति, अभ्युपगम्यत इति शेषः।

रूपकादिरिति। 'बहुधा' बहुविधः, रूपकाद्यलङ्कारः, 'तस्य' काव्यस्य,

---

(A) षष्ठोल्लासारम्भे प्रदीपकाराणामाशयस्तु—'एवं गुणीभूतव्यङ्गे निर्णीते चित्रभेदं निरूपयितुमवसरः। तत्र यद्यपि शब्दार्थचित्ररूपभेदद्वयं प्रथमोल्लास एव प्रदर्शितम्, तत्प्रभेदाश्चालङ्कारप्रभेददर्शनेनैव प्रदर्शिता भविष्यन्तीति न किञ्चिदस्ति तत्र प्रदर्शनीयम्, तथाऽपि प्रदर्शितभेदद्वयमेव तावदनुपपन्नं शब्दार्थालङ्कारयोरन्योन्यनैरपेक्ष्येणानुपलम्भात्; उपलम्भेऽपि चोभयसद्भावे तृतीयभेदप्रसङ्गादिति तदुपपादयति—शब्दार्थचित्रम् इति। शब्दार्थालङ्कारयोरेकैकमात्रावस्थानपुरस्कारेण न विभागः, किन्तु प्राधान्यपुरस्कारेण, तथाच न काचिदनुपपत्तिरिति। अत्र प्राधान्यम् आसमाप्ति कविसंरम्भविषयत्वमित्युद्द्योतः। उक्तरूपेण विभागमनभ्युपगच्छन्तोऽन्ये तु उभयसद्भावस्थले तृतीयमपि चित्रकाव्यस्य भेदमिच्छन्तीति बोध्यम्।

(B) रूपकादिरिति। श्लोकत्रयं व्याख्यातमुद्द्योते—"विभाति आह्लादाय पर्याप्यते। 'बाह्यम्' आस्वादोत्पत्तिपरवर्त्तिनम्, प्रथमतः शब्दालङ्कारेण चित्तापकर्षः, अर्थप्रतीत्युत्तरकालं तु

---

1. 'एकतरानभ्युपगमस्यैव विरामे तात्पर्यात्' क, 'एकतरानभ्युपगमस्यैव निरस्यत्वात्' ख'

रूपकादिमलङ्कारं बाह्यमाचक्षते परे ।
सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम् ॥
तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी ।
शब्दाभिधेयालङ्कारभेदादिष्टं द्वयं तु नः ॥ इति ।

( भामहकृतालङ्कारसूत्रम्, १म अ० १३-१५ श्लो० )

शब्दचित्रं यथा—

प्रथममरुणच्छायस्तावत्ततः कनकप्रभ-
स्तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः ।
उदयति ततो ध्वान्तध्वंसक्षमः क्षणदामुखे
सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥ १३९ ॥

---

अन्यैरुदित इत्यर्थः । 'विभाति' विशेषेण भाति । शब्दालङ्कारमात्राभ्युपगन्तृमतमाह—रूपकादिमिति । 'बाह्यम्' अनुपादेयम् । 'सुपां' सुबन्तानाम्, 'तिङां' तिङन्तानाम् । 'व्युत्पत्तिं' विशेषेण विन्यासम् । सुपां तिङाञ्च वाचामित्यन्वयः । तद्वाञ्छने हेतुमाह—तदेतदिति । 'सौशब्द्यं' सुशब्दत्वम् । (A)स्वमतमाह—शब्दाभिधेयेति । 'अभिधेयः' अर्थः ।

शब्दचित्रं यथेति, प्रधानमिति शेषः । प्रथममिति, उदयतश्चन्द्रस्य क्रमशो वर्णप्राप्तिवर्णनमिदम् । 'कनकम्' ईषत्ताम्रम् । उत्ताम्यदिति वर्त्तमाननिर्द्देशात् उत्ताम्युत्—(उत्तान्त्युत् ?)पत्तिदशालाभेन ईषत्पाण्डुत्वम् । सरसबिसिनीत्यादिविशेषणविशिष्टः सन् ध्वान्तध्वंसक्षमः प्रभवतीत्यन्वयः । सरसत्वेन अत्यन्तपाण्डुत्वम् । अत्र अनुप्रासस्य शब्दालङ्कारस्य प्राधान्यं समस्तपद्यव्यापकत्वात्, तन्वीकपोलेत्याद्युपमानां प्रादे-

---

अर्थालङ्कारप्रतीतिरिति तेषां बाह्यत्वमिति भावः । 'सुपां तिङां' तदन्तानाम् । 'व्युत्पत्तिम्' अनुप्रासादिना विशिष्टामुत्पत्तिम् । तदेतदाहुरिति, स्वत एव शब्दालङ्काराणां चमत्कारित्वम्, अर्थव्युत्पत्तिरर्थालङ्कारो नेदृशी न शब्दवत् स्वतश्चमत्कारिका, अपि तु विभावाद्युत्कर्षमुखेणैवेत्यर्थः । 'अभिधेयः' प्रतिपाद्यः, तेन लक्ष्यव्यङ्ग्ययोरपि संग्रहः" इति ।

(A) स्वमतमिति, स्वस्य उक्तकारिकाकर्तुर्भामहाचार्यस्य मतम्, तदेव स्वस्यापि काव्यप्रकाशकर्त्तुर्मतमिति भावः ।

अर्थचित्रं यथा—

ते दृष्टिमात्रपतिता अपि कस्य नात्र
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च ।
नीचाः सदैव सविलासमलीकलग्ना
ये कालतां कुटिलतामिव न त्यजन्ति(A) ॥ १४० ॥

यद्यपि सर्वत्र काव्येऽन्ततो विभावादिरूपतया पर्यवसानम्, तथाऽपि स्फुटस्य रसस्यानुपलम्भादव्यङ्ग्यमेतत्काव्यद्वयमुक्तम् । अत्र च शब्दार्थालङ्कारभेदाद् बहवो भेदाः, ते चालङ्कारनिर्णये निर्णेष्यन्ते ।

इति काव्यप्रकाशे शब्दार्थचित्रनिरूपणं नाम षष्ठ उल्लासः ॥ ६ ॥

---

शिकत्वात् तदपेक्षया गुणत्वम् । अर्थचित्रप्राधान्यमुदाहरति—**अर्थचित्रं यथेति** । पक्ष्मलदृशाम् उत्तमपक्ष्मयुक्त[1]लोचनानां ते अलकाः खलाश्च दृष्टिमात्रपतिता अपि दृष्टा अपि अत्र लोके कस्य क्षोभाय न भवन्तीत्यर्थः । एकत्र कामाद् अन्यत्र भयात् क्षोभः । अलकपक्षे दृष्टिपर्यन्तपतिता अपीत्यर्थोऽपि बोध्यः, खर्वत्वात् प्रमाणे मात्रट् । नीचाः खर्वाः निकृष्टाश्च । सविलासं सशोभम् । अलीके ललाटे लग्नाः, 'अलिकमलीकञ्चेति' ललाटे द्विरूपकोषात् । पक्षे अलीके मिथ्याकथायां सविलासं सकौतुकं लग्नाः । कालतां कृष्णतां यमस्वरूपताञ्च । कुटिलतां [2]वक्रतां कपटताञ्च । अत्र प्रकृताप्रकृतानामलकखलानां क्षोभाद्येकधर्मान्वयरूपदीपकालङ्कारः समस्तपद्यव्यापकत्वात् प्रधानम्, अलीकादिशब्दश्लेषोऽप्रधानम् ।

ननु 'शब्दचित्रं वाच्यचित्रमव्यङ्ग्य'मिति प्रागुक्तम्, अत्र च व्यङ्ग्यमस्ती[3]त्यतः कथं चित्रमित्याशङ्कमान[3]* आह—**यद्यपीति** । **विभावादिरूपतयेति** वर्णितार्थस्य चन्द्रादे[4]रन्ततो विभावादिरूपतया ततो रसपर्यवसानमित्यर्थः । 'अव्यङ्ग्य' स्फुटव्यङ्ग्यरहितम् ।

इति श्रीमहेश्वरन्यायालङ्कारभट्टाचार्यकृते काव्यप्रकाशादर्शे
चित्रनिरूपणस्य षष्ठः प्रतिबिम्बः ।

---

(A) ते दृष्टीति । अत्र समुच्चयोऽर्थालङ्कार इति प्रदीपकृतः । व्याख्यातमिदमुद्योते—"पक्ष्मलेति भूम्नि मत्वर्थीयो लः । क्षोभो धैर्यविघातः अस्वस्थता च । नीचाः अधोगामिनोऽनुच्चाशयाश्च कृत्रिमविनयान्नीचतां गता वा । अलीकं ललाटं मिथ्यावचनं च । कालता श्यामता परपीडकत्वोद्यमता च ( परपीडनोद्यममालिन्यं च ) । कुटिलता वक्रता कचपक्षे, खलपक्षे अस्फुटं परापकारेच्छा । कुटिलतामिवेति सहोपमा, तदङ्गाश्च समुच्चयः" इति ।

---

1. '-नयनानां नायिकानां' ख । 2. 'भङ्गुरतां' ख-ग । 3. '-स्तीत्याशङ्कमानः' क, '-स्तीत्यतः शङ्कते' ख । 4. 'स्पन्दयतो' क ।

# सप्तम उल्लासः

(A)काव्यस्वरूपं निरूप्य दोषाणां सामान्यलक्षणमाह—

**(७१) मुख्यार्थहतिर्दोषो (B)रसश्च मुख्यस्तदाश्रयाद्वाच्यः ।**
**उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि सः ॥४६॥**

---

काव्यस्वरूपमिति, अदोषावित्युक्तत्वादिति भावः । यद्यपि तत्र दोषविशेषाभावस्यैव [1]प्रवेशात् तन्निरूपण एवाकाङ्क्षा उदेति[1]* तथाऽपि दोषसामान्यनिरूपणाकाङ्क्षाया अपि तयैवोत्थापितत्वात् [2]तन्निरूपणमिति भावः ।

मुख्यार्थेति । 'मुख्यार्थस्य' प्रधानस्यार्थस्य, 'हतिः' अपकर्षो यस्मात्, स दोष इत्यर्थः । प्रधानप्रयोजनं सुखं दुःखाभावश्च । तथाच वैषयिकसुखादिहतिकारके अन्यत्रापि लक्षणमिदमतिव्यापकं स्यादतो रसाद्यात्मकसुखरूपमुख्यार्थपरतया मुख्यार्थपदं स्वयमेव व्याचष्टे—रसश्चेति । 'मुख्यः' मुख्यार्थः । रसपद-

---

(A) अदोषावित्याद्युक्तं काव्यलक्षणमुपपादयितुमुपोद्घातसङ्गत्या दोषाभावे निरूपणीये अभावनिरूपणस्य प्रतियोगिनिरूपणाधीनत्वाद् दोषनिरूपणं प्रतिजानीते—काव्यस्वरूपं निरूप्येत्यादिना । तत्र निरूप्येत्यन्तेन सङ्गतिसामान्यलक्षणघटकानन्तर्यलाभः । दोषाणां सामान्यलक्षणमिति । यद्यपि टीकाकृदुक्तदिशा दोषविशेषाणामभावस्यैव काव्यलक्षणे प्रवेशनीयतया तत्तद्दोषा एव निरूपयितुमुचितास्तथाऽपि 'अनुकरणे तु सर्वेषाम्' इत्यादिवक्ष्यमाणरीत्या प्रतिप्रसूतानां तत्तद्दोषाणां सत्त्वेऽपि तत्र तत्र काव्यलक्षणाव्याप्तिभयेन दोषत्वेनैव च्युतसंस्कृत्यादितत्तद्दोषाणामभावः काव्यलक्षणघटको वक्तव्य इति न दोषसामान्यनिरूपणं निराकाङ्क्षमिति ध्येयम् ।

(B) ननु व्यञ्जनाधीनप्रतीतिविषयतामापन्न एव स्थायिभावो रसः, स च स्वप्रकाशानन्दस्वरूपो लोकोत्तरो ब्रह्मप्रख्यः यन्मात्रया यदाकारेण च यदोत्पन्नस्तदा न तस्य वेद्यान्तरसम्पर्कः, तथाच पूर्वभाविभिः दोषैः सम्बन्धविरहेण कथं तयोर्घात्यघातकभाव इति चेत् अत्रोच्यते—

---

1. 'प्रवेशाद् दोषविशेषनिरूपणस्यैवाकाङ्क्षा' ख, 'प्रविष्टत्वाद्दोषविशेषनिरूपणमेवोचितं' ग । 2. 'तस्यापि निरूपणम्' ख-ग ।

श्चात्र असंलक्ष्यक्रमपरं भावादिसाधारणम्। तथाच दर्शयिष्यमाणोदाहरणेषु कचिद् रसस्य कचिद् वर्णितार्थविषयभावादेरपकर्षो बोध्यः। एवञ्च रसादिहतिर्दोष इत्येव लक्षणम्। रसादेर्मुख्यप्रयोजनत्व[1]लाभायैवेत्थमुक्तिः। नन्वेवम् अर्थवृत्तेरर्थदोषस्य शब्दवृत्तेः शब्ददोषस्य च [2]रसादिना समं प्रत्यासत्त्यभावात् कथं ताभ्यां तद्धतिरित्यतो दोषाश्रयेष्वर्थशब्दादिषु रसत्वमुपपादयितुमाह[2]*—**तदाश्रयात्** इति। [3]अत्र च तदाश्रयादिति पञ्चम्यन्ततया बहवो व्याचख्युः, तन्न; साध्यं विना तादृशहेतूक्त्यनुपपत्तेः। न च वाच्योऽपि मुख्य इति मुख्यत्वं साध्यमनुषञ्जनीयमिति वाच्यं निष्फलत्वात्, वाच्यस्य मुख्यत्वोपचाराभावेऽपि रसव्यञ्जकत्वरूपरसाश्रयणेन रससम्बन्धित्वोपपादने तावतैव अर्थवृत्तिना दोषेण स्वप्रत्यासन्नतद्धत्युपपत्तेः, "तेन तेष्वपी"त्युपसंहारेणैव तदाश्रयणस्य हेतुत्वलाभादत्र पञ्चम्यनुपपत्तेश्च ; उभयोप-

---

यथा देहादिसङ्घात आत्मा, तस्य च अङ्गुलि-हस्त-समग्रशरीरेन्द्रियात्मकोपाधिगताभ्यां गुणदोषाभ्यां गुणदोषवत्ताव्यवहारस्तदधीनावुत्कर्षापकर्षौ च व्यवह्रियेते तथा पदैकदेश-पद-वाक्यार्थगतैर्दोषैः काव्यात्मभूतस्य रसस्य पदाद्युपाधिद्वारेण सम्बन्धः कल्पनीय इति पदैकदेशादिगतैर्दोषैस्तस्य दोषव्यवहारमात्रम्, न तु साक्षात तस्य क्वचिदपि दोषेण सम्बन्धस्तदधीनः पूर्वसिद्धशरीरस्य औत्तरकालिकाङ्गुलिच्छेदादिनेव वा अपकर्षः। तथाच निर्दोषकाव्यसमुत्थितानन्दापेक्षया सदोषकाव्यादनुभूयमानस्यानन्दस्य मात्राल्पत्वं वा वैजात्यं वा प्रकाशस्य ईषत्त्वं वा तस्य हतिः, तज्जनकत्वं च घातकत्वम्। एवं यथा जीवत्वेन व्यवह्रियमाणस्य चित्प्रतिबिम्बस्य स्वतो निर्दोषता अन्तःकरणगतदोषाच्च तस्य दोष इव लक्ष्यते प्रतिबिम्बस्योपाधिपक्षपातित्वात् तथा भावादेः स्वशब्दवाच्यत्वादयोऽपि साक्षात् स्थायिभावादिवस्त्वन्तरगता एव कल्पितसम्बन्धेन रसगता इत्युच्यन्ते प्रतिबिम्बे अन्तःकरणवृत्तेरिव रसे तेषामात्यन्तिकं सन्निधानमेव रसदोषत्वव्यवहारे बीजम्। पुरुषपक्षे कुरूप-काणत्वाद्यपेक्षया कौटिल्यविश्वासघातकत्वादेरिव अनयैव रीत्या दोषाणामुत्तरोत्तरमनुभवसिद्धं गुरुत्वमप्युपपद्यते इति।

---

1. '-ज्ञापनायैवे-' ख, '-ज्ञापनमात्रार्थमि-' ग। 2. 'रसादिना समं कया प्रत्यासत्त्या तद्धतिकारित्वमत आह' क, 'तेन रसेन समं प्रत्यासत्त्यभावात् कथं तयोरसहतिकारकत्वमतस्तयोरपि रसेन समं प्रत्यासत्तिमुपपादयितुमाह' ग। 3. 'अत्र तदाश्रयादिति पञ्चम्यन्तं बहव आहुः, तदा च वाच्योऽपि तदाश्रयान्मुख्य इत्यनुषङ्गेणैव तदुपपत्तिः, तच्च न युक्तम्, वाच्यस्य मुख्यत्वाभावेऽपि रसव्यञ्जनरूपरसाश्रय(त्व) सम्बन्धेन तत्र रससत्त्वस्य 'तेन तेष्वपि सः' इत्यनेनोपपादयिष्यमाणत्वात् तावतैव रसस्य दोषप्रत्यासन्नत्वोपपत्तेः। न च तेन तेष्वपि स दोषः' इत्यत्र तदर्थः, न (सः) रस इति तदर्थ इति वाच्यम् साक्षादेवार्थवृत्तेः शब्दवृत्तेश्च दोषस्य परम्परासम्बन्धेनोपपादनानौचित्यात्, दोषस्यार्थादिवृत्तित्वे रस त्वापकत्वाभावात्; उभयोपयोगिन इतावापि पञ्चम्युपपादनप्रसङ्गाच्च। तस्मात् तदाश्रयणं तद्व्यञ्जनरूपं तत्सम्बन्धित्वम् अतति प्राप्नोतीति' ग।

हतिरपकर्षः। शब्दाद्या इत्याद्यग्रहणाद् वर्णरचने।

**विशेषलक्षणमाह—**

**(७२) दुष्टं पदं [१]श्रुतिकटु [२]च्युतसंस्कृत्य[३]प्रयुक्तम[४]समर्थम्।**

**[५]निहतार्थम[६]नुचितार्थं [७]निरर्थकम[८]वाचकं [९]त्रिधाऽश्लीलम्॥५०॥**

---

योगिनः स्युरित्यत्रापि पञ्चम्युपादानापत्तेश्च। न च 'तेन तेष्वपि 'स' रसः' इति नार्थः किन्तु 'स दोषः' इत्येवार्थः, तथाच तेन तेष्वपीत्युक्त्या न तदाश्रयादिति पञ्चम्यनुपपत्तिरिति वाच्यं साक्षादेवार्थवृत्तीनामपुष्टार्थत्वश्रुतिकटुत्वादिदोषाणां "तेन तेष्वपि सः" इत्यनेन परम्परया तद्वृत्तित्वकथनानुपपत्तेः। तस्मात् "तदाश्रया"दिति न पञ्चम्यन्तं किन्तु प्रथमान्तमेव ; तथा हि तदाश्रयणं तदाश्रयः व्यञ्जकत्वम्, तम् अतति प्राप्नोतीति[3]* 'अत सातत्यगमने' इत्यस्य क्विबन्तस्य रूपम्, यथा शाखाच्छाखान्तरं गत इति। तथाच वाच्यस्तदाश्रयणगामीत्यर्थः। **उभयेति** रसाद्यर्थोपयोगिन इत्यर्थः, उपयोगश्च बोधकता। अर्थोपयोगिताकथनञ्च तद्द्वारा रसोपयोगिताकथनार्थमिति बोध्यम्। इत्थमर्थशब्दादीनां रसादिसम्बन्धित्वे कथिते तत्फलमाह—**तेन तेष्वपी**ति। 'तेन' रसादिसम्बन्धित्वेन हेतुना, 'तेष्वपि' अर्थशब्दादिष्वपि, 'सः' रस इत्यर्थः। तेन अर्थशब्दवृत्तीनां दोषाणां रसादिसामानाधिकरण्यरूपप्रत्यासत्तिरुपपादिता। **हतिरपकर्ष** इति, 'स च त्रिविधो भवति, तत्प्रतीतिप्रतिबन्धः, तत्प्रकर्षप्रतिबन्धः, तत्प्रतीतिविलम्बनञ्च। तच्च दोषविशेषोदाहरणेष्ववधेयम्। त्रितयसाधारणं तु—झटिति प्रकृष्टरसबोधप्रतिबन्धकत्वमेव बोध्यम्[1]*। 'रचना' सन्धिसमासौ।

**विशेषलक्षणमाहे**ति, लक्ष्यकथनादेव लक्षणमूह्यमिति भावः। श्रुतिकट्वादिपदं दुष्टमित्यन्वयः। तथाच श्रुतिकटुत्वादिकं दोष इति बोध्यम्। क्लिष्टत्वादिदोषत्रयस्य अनेकपदनिर्वाह्यत्वेन तादृशपदानां समासवशादेकपदत्व एव पददोषत्वम्, अन्यथा तु वाक्यदोषत्वम् ; अतः अथशब्देन पृथक् कृत्वा तत्त्रितयस्य

---

1. 'अपकर्षश्च शीघ्रप्रकृष्टरसबोधप्रतिबन्धः, स च विशिष्टप्रतिबन्धरूपत्वेन त्रिविधः, रसबोधप्रतिबन्धं तत्प्रकर्षबोधप्रतिबन्धं तद्बोधशैघ्र्यप्रतिबन्धं च बोध्यः' ख, 'अपकर्षश्च तत्प्रतीतिप्रतिबन्धकस्तत्प्रकर्षप्रतीतिप्रतिबन्धकस्तद्बोधविलम्बनञ्च। तच्च दोषविशेषकथन एव तत्रावधेयम्। त्रितयानुगमस्तु झटिति प्रकृष्टरसबोधप्रतिबन्धकत्वेनेति बोध्य'म् ग।

सन्दिग्धम्[१०] अप्रतीतं[११] ग्राम्यं[१२] नेयार्थम्[१३] अथ भवेत् क्लिष्टम्[१४]।

अविमृष्टविधेयांशं[१५] विरुद्धमतिकृत्[१६] समासगतमेव[(A)] ॥ ५१ ॥

(१) श्रुतिकटु परुषवर्णरूपं दुष्टम्। यथा—

अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः।
आलिङ्गितः स तन्वङ्ग्या कार्तार्थ्यं लभते कदा ॥ १४१ ॥

अत्र कार्तार्थ्यमिति।

(२) च्युतसंस्कृति व्याकरणलक्षणहीनम्। यथा—

एतन्मन्दविपक्वतिन्दुकफलश्यामोदरापाण्डर-
प्रान्तं हन्त पुलिन्दसुन्दरकरस्पर्शक्षमं लक्ष्यते।

---

समासगतत्व एव पददोषत्वं नियमयति—अथ भवेदिति। समासपदमत्र युक्तार्थमात्रपरम्, तेन 'वपुर्विरूपाक्ष'मित्यादावलक्ष्यजन्मतेत्यत्र तद्धिते समासाभावेऽपि युक्तार्थमात्रे अविमृष्टविधेयांशत्वदोष उपपत्स्यते।

(१) परुषवर्णरूपमिति, श्रुतिदुःखदाय्यनेकवर्णमित्यर्थः, [1]'रूपपदस्य प्रायार्थकत्वेन वर्णानेकत्वलाभात्, तेन एकवर्णकटुत्वस्यादोषत्वमिति भावः'[1]*। इदञ्च [2]'वीर-रौद्र-बीभत्स-रसान् विहायैवेत्यग्रे'[2]* व्यक्तीभविष्यति। अत्रापि पद्यैकदेशस्य एवायं दोषः, समस्तपद्यव्यापकत्वे तु वक्ष्यमाणः प्रतिकूलवर्णत्वदोष एव बोध्यः। (B)अस्य कष्टत्वपरिभाषाऽपीत्याह—कष्टमिति। अनङ्गेति। अनङ्गस्य मङ्गलगृहं या अपाङ्गस्य भङ्गिः तस्याः तरङ्गितैः तरङ्गवदुत्तरोत्तराविच्छिन्नचालनैः द्वारीभूतैः तन्वङ्ग्या आलिङ्गितः स युवा कदा कार्तार्थ्यं कृतार्थत्वं लभते लप्स्यते, कदाशब्दयोगे भविष्यदर्थे वर्त्तमाना। कटाक्षेणालिङ्गितः कृतार्थो भविष्यतीत्यर्थः। अत्रेति श्रृङ्गार इत्यर्थः। अत्र रेफयुक्तवर्णद्वयकं पदं कटु। अत्र पदसम्बन्धित्वेन प्रत्यासन्नस्य रसस्य पदगतेन दोषेण प्रकर्षबोधप्रतिबन्धः। एवं सर्वत्र दोषे बोध्यम्।

---

(A) एषु च्युतसंस्कृत्यसमर्थानुचितार्थावाचकाश्लीलसन्दिग्धाप्रतीतक्लिष्टाविमृष्टविधेयांशविरुद्धमतिकृतां काव्याकाव्यसाधारणता बोध्येति प्रदीपोद्द्योतयोः स्पष्टम्।

(B) अत्र वृत्तौ कष्टमिति नोपलभ्यते तद्घटितं वाक्यं कालवशाल्लुप्तमथवा दुष्टमित्यत्रैव कष्टमिति टीकाकृतामभिमतः पाठ इत्यनुसन्धेयम्।

---

1. चिह्नितांशो ग-पुस्तके नास्ति। 2. 'रौद्रवीरबीभत्सरसातिरिक्तरसादिकाव्येष्वेवेतायं' क।

तत् पल्लीपतिपुत्रि ! कुञ्जरकुलं कुम्भाभयाभ्यर्थना-
दीनं त्वामनुनाथते कुचयुगं पत्रावृतं मा कृथाः ॥ १४२ ॥

अत्रानुनाथते इति "सर्पिषो नाथते" इत्यादाविव आशिष्येव नाथतेरात्मनेपदं विहितम् 'आशिषि नाथ' इति। अत्र तु याचनमर्थः। तस्मात् 'अनुनाथति स्तनयुग'मिति पठनीयम्।

---

(२) च्युतेति। "लक्षणं" व्युत्पत्तिः। एतन्मन्देति। पल्लीपतिपुत्र्या अनावृतस्तनं दिदृक्षोः कस्यचिदुक्तिरियम्। पल्ली म्लेच्छग्रामः, हे तत्पतिपुत्रि, कुञ्जरकुलं कुम्भाभयाभ्यर्थनया दीनं सत् त्वाम् अनुनाथते याचते अर्थात् कुम्भाभयम्। कुत इत्याह—एतदिति। तव एतत् कुचयुगं मन्दविपक्वतिन्दुकफलवत् श्यामम् उदरं मध्यभागः आपाण्डरः प्रान्तश्च यस्य तादृशं लक्ष्यते। 'तिन्दुकः केन्दुक इति'[1] * प्रसिद्धः। अनेन वर्णप्रकर्षसौभाग्यं दर्शितम्। सुखस्पर्शसौभाग्यमपि दर्शयति—हन्तेति। हन्त हर्षे। पुलिन्दसुन्दरस्य करस्पर्शक्षमं सुखस्पर्शम्, अनेन सौकुमार्यमुक्तम्। अतः कृष्णवर्णस्य कर्कशस्य च स्तनप्रतिद्वन्द्विनः कुम्भस्य पराजयभयम्। तत् तस्मात् स्तनयुगं पत्रावृतं परिधानपत्रेण हस्तस्थपत्रेण वा आवृतं मा कृथाः। आवरणे तु स्तनादर्शनात् कुम्भस्य भयाभावेन करिभिर्याचनसौभाग्यं तव न स्यादिति भावः। यद्वा पत्रावृतं पत्रावल्यावृतं मा कृथाः तथा करणे शोभातिशयवृद्ध्या पराजयध्रौव्येण पत्रावल्यां कवचभ्रमेण युद्धोद्युक्तत्वज्ञानेन वा करिकुलस्य अतिवैकल्यं स्यात्, अतस्तथा मा कृथा इत्यर्थः। तथाच करिषु कृपालोरुक्तिरियम्। चक्रवर्त्ती तु—हस्ति-मारकाः पुलिन्दा अनावृतस्तनदर्शनाद्व्यग्रदृशो हस्तिमारणार्थं न यास्यन्तीत्यतः कुम्भाभयप्रार्थनेति व्याचष्टे, तन्न; तदा हस्तिनामेवाभयप्रार्थनौचित्यात्[2] अचेतनस्य कुम्भस्य वस्तुतो भयाभावात्। यत्तु कुम्भावच्छेदेन पुलिन्दैः शरपातनात् कुम्भाभयप्रार्थने-त्याहुः, तदपि मन्दम्, तदाऽपि हस्तिनामेव भयात् नावच्छेदकस्य कुम्भस्य(A)। अस्मद्व्याख्याने तु स्तनप्रतिद्वन्द्वितया चेतनत्वेन वक्त्रा अध्यासितस्य कुम्भस्य सम्भव-त्येव भयम्। आशिष्येवेति। न च आशिषि नाथतेरात्मनेपदमेव न तूभयपद-मिति नियमात् अत्रोभयपदं स्यादिति वाच्यम्, गणे आत्मनेपदिनो नाथतेरुभयपदप्रसक्ते-

---

(A) कुम्भस्येति भयं सम्भवतीति शेषः।

---

1. '-तिन्दुकः केन्दुरिति' ख, '-तिन्दुकफलं कालिद्रुमफलम्' ग। 2. अतः परं 'न कुम्भाभयस्य' इत्यधिकं क-ख-पुस्तकयोर्दृश्यते।

( ३ ) अप्रयुक्तं तथा आम्नातमपि कविभिर्नादृतम्। यथा—

यथाऽयं दारुणाचारः सर्वदैव विभाव्यते।

तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथ वा ॥ १४३ ॥

अत्र दैवतशब्दो 'दैवतानि पुंसि वा' इति पुंस्याम्नातोऽपि न केनचित् प्रयुज्यते।

( ४ ) असमर्थं यत्तदर्थं पठ्यते, न च तत्रास्य शक्तिः यथा—

तीर्थान्तरेषु स्नानेन समुपार्जितसत्कृतिः।

सुरस्रोत[1]स्वतीमेष हन्ति सम्प्रति सादरम् ॥ १४४ ॥

अत्र हन्तीति गमनार्थम्।

---

रेवाभावात्। याचनमर्थ इति। ननु याचनाशिषोः को भेदः इष्टप्राप्तीच्छारूपत्वादुभयोः। न च स्वगतत्वेन तदिच्छा याचनं परगतत्वेन तदिच्छा तु आशीरिति भेद इति वाच्यं "कृतार्था भूयासं प्रियसुहृदपत्योपयमने" इति मालतीमाधवे स्वगतत्वेन तदिच्छायामपि आशिषः, "गुह्यकस्तं ययाचे" इति मेघदूते प्रियागतसन्देशप्रापणेच्छायामपि याचनस्य प्रयोगात्। अत्रोच्यते—अभीष्टोत्पत्तौ परप्रयत्नोत्पादनेच्छा याचनं तदुत्पत्तीच्छामात्रन्तु आशीरिति विशेषः। तथाहि गुह्यकस्तं ययाचे इत्यत्र मेघस्य प्रवृत्त्याख्यप्रयत्नोत्पत्तौ प्रकृते च कुचाच्छादने निवृत्त्याख्यस्य पल्लीपतिपुत्र्याः प्रयत्नस्योत्पत्तौ इच्छा भवत्येव याचनम्; कृतार्था भूयासमित्यत्र अभीष्टोत्पत्तीच्छामात्रमेव भवत्याशीः। अत्र असाधुत्वं पदवृत्तिर्दोषः, वाक्यार्थबोधाजननाद् रसबोधप्रतिबन्धकः।

(३) तथा आम्नातमपीति, तल्लिङ्गकत्वेन तदर्थकत्वेन वा अनुशासनोक्तमपीत्यर्थः। कविभिरित्यनेन काव्यातिरिक्ते तत्प्रयोगौचित्यात् नाम्नानवैयर्थ्यमिति भावः। बहुवचनाच्च आधुनिककविप्रयुक्तत्वेऽपि दोष एवेति बोध्यम्। यथाऽयमिति, यथातथौ यतस्तत इत्यर्थकौ। दैवत उपास्यदेवता। अत्र कव्यनादृतत्वं पदवृत्तिर्दोषः तादृशपुरुषविषयासूयाभावप्रकर्षबोधहतिकृत्।

(४) तदर्थमिति, तदर्थकत्वेन यदनुशासने पठ्यते इत्यर्थः। न च तत्रास्येति, तत्र अस्य शक्तिर्न च स्मर्यत इत्यर्थः, अनुशासनानुशिष्टत्वेन तत्र शक्त्यभावासम्भवात्, अस्मरणं तु सहकारिविरहादिति बोध्यम्। तीर्थान्तरेष्विति। सत्कृतिः

---

1. 'स्रोतस्विनी'मिति पाठान्तरम्।

(५) निहतार्थं यदुभयार्थमप्रसिद्धेऽर्थे प्रयुक्तम्। यथा—

याववकरसार्द्रपादप्रहारशोणितकचेन दयितेन।
मुग्धा साध्वसतरला विलोक्य परिचुम्बिता सहसा॥ १४८॥

अत्र शोणितशब्दस्य रुधिरलक्षणेनार्थेनोज्ज्वलीकृतत्वरूपोऽर्थो व्यवधीयते।

(६) अनुचितार्थं यथा—

तपस्विभिर्या सुचिरेण लभ्यते
प्रयत्नतः सत्रिभिरिष्यते च या।

---

सत्कारः। सुरस्रोतस्वतीं गङ्गाम्। हन्ति गच्छति। अत्रेति। 'हन हिंसागत्यो'रित्यनुशासनेन गतावनुशिष्टाऽपि शक्तिः जङ्घापद्धतिरित्यत्रैव पुनः पुनर्गम्यतेऽनेनेत्यर्थे पद्भ्यां गम्यते इत्यर्थे च (A)चेक्रीयितलोपपच्छब्दाभ्यां सहकारिभ्यामेव स्मर्यते न तु शुद्धहनधातौ, शक्तिस्तु तत्रास्त्येवेत्यतो न शक्तिभ्रमप्रयुक्तत्वरूपस्यावाचकत्वस्य अत्र प्रसक्तिः। अत एव तदर्थे वक्तुस्तात्पर्यसत्त्वेऽपि [1]न तत् तात्पर्यं लक्षणा मुख्यार्थबाधाग्राह्यत्वात्। तथाच तदर्थस्य वृत्त्यनुपस्थापितत्वात् न तत्र शाब्दबोध इति वक्ष्यते[1]*। तथाच गङ्गाजिगमिषुपुरुषविषयभावबोधप्रतिबन्ध एव।

(५) उभयार्थमिति प्रसिद्धाप्रसिद्धोभयार्थमित्यर्थः। यावकेति। यावकम् अलक्तकम्। साध्वसतरलेति विलोक्येत्यस्य चुम्बितेत्यस्य च कर्म, अतश्चुम्बितेति क्तप्रत्ययेनोक्तत्वात् न द्वितीया। स्वपादप्रहाराधीनशोणवर्णकचदर्शनात् साध्वसम्। उज्ज्वलीकृतत्वरूप इति शोणवर्णीकृतत्वरूप इत्येवार्थः, शोणवर्णस्य उज्ज्वलत्वादित्थमुक्तिः। अत्र विलम्बेन पदार्थोपस्थापकत्वं पददोषः, तेन नायिकाविषयशृङ्गारबोधस्य हतिः।

(६) अनुचितेति। पदार्थान्तरान्वयं विना उपश्लोक्यस्य उपश्लोकनानुचितार्थव्यञ्जकत्वं तत्त्वम्। वक्ष्यमाणं विरुद्धमतिकृत्त्वं तु पदार्थान्तरान्वयेनैव तथेति भेदः। तपस्विभिरिति। या गतिः। सत्रिभिः याज्ञिकैः। ये वीराः रणाध्वरे

---

(A) चेक्रीयित इति कलापमते, यङ् इत्यर्थः।

---

1. 'तत्तात्पर्यस्य मुख्यार्थ (मुख्यार्थ?)विषयत्वान्न सा लक्षणेति सोऽर्थो न वृत्त्युपस्थित इति न तत्र शाब्दबोधः' ग।

प्रयान्ति तामाशुगतिं यशस्विनो
रणाध्वरे ये पशुतामुपागताः ॥ १४६ ॥

अत्र पशुपदं कातरतामभिव्यनक्तीत्यनुचितार्थम् ।

( ७ ) निरर्थकं (A)पादपूरणमात्रप्रयोजनं चादिपदम् । यथा—

उत्फुल्लकमलकेसरपरागगौरद्युते ! मम हि गौरि !
अभिवाञ्छितं प्रसिध्यतु भगवति ! युष्मत्प्रसादेन ॥ १४७ ॥

अत्र हिशब्दः ।

---

पशुतां पशुधर्मयज्ञच्छेद्यताम् उपागताः, ते यशस्विनः, तां गतिम् आशु प्रयान्ति, या गतिः तपस्विभिः इत्याद्यन्वयः । अत्रेति, पशुतापदेन केवलेन छेदे पराकृष्टतया कातरत्वं व्यज्यते इत्यर्थः । अत्र अनुचितार्थत्वं पददोषः तादृशवीरपुरुषविषयभावहतिकृत् ।

(७) पादपूरणेति छन्दोभङ्गमात्रवारणेत्यर्थः । तेन तन्वीनामिवेत्यत्र वक्ष्यमाणबहुवचननिरर्थकत्वमुपपत्स्यते । चादिपदमित्यत्र आदिपदग्राह्यस्य "हि"-शब्दस्य नैरर्थक्यमुदाहरति—उत्फुल्लेति । गौरीत्येकवचनसम्बोधनेऽपि युष्मदिति बहुवचनसमासो वरप्रार्थनकाले गौरवाविर्भावात् । अत्र निरर्थकत्वं पददोषो गौरीविषयभावहतिकृत् । [2]न च (B)निरर्थकस्यार्थाभावात् कथम[3]र्थद्वारा[3]* भावप्रत्यासन्नत्वमिति वाच्यम्, निरर्थकपदघटितपदसमूहार्थद्वारा प्रत्यासन्नत्वात्[2]* ।

---

(A) पादपूरणमात्रेति छन्दोभङ्गवारणातिरिक्तप्रयोजनशून्यत्वं स्वघटितवाक्यार्थबोधेऽनपेक्षितस्वार्थकत्वमिति तु फलितार्थः, तेन गद्येऽपि समुच्चयाद्यर्थानपेक्षादशायां चादिप्रयोगे दोष एव, अर्थशून्यत्वरूपस्य निरर्थकत्वस्याप्रवेशाच्च समुच्चयाद्युपस्थितिस्वरूपयोग्ये चादौ नासम्भव इति ध्येयम् ।

(B) निरर्थकस्येति निरर्थकत्वेनाभिमतस्य चादेरित्यर्थः ।

---

1. 'रणाध्वरेषे' इति मुद्रितपुस्तकपाठः । 2. 'न च निरर्थकत्वाद(दाव ?)र्थद्वारा रसोपयोगित्वाभावेन भावस्य तेन सम्बन्धेन तद्वृत्तित्वाभावे दोषाप्रत्यासन्नत्वेन कथं तेन तद्धतिरिति वाच्यम् स्वघटितश्लोकार्थव्यञ्जकत्वसम्बन्धेन (स्वव्यञ्जकश्लोकघटकत्वसम्बन्धेन ?) भावस्य निरर्थकपदवृत्तित्वात्' ग । 3. 'कथमर्थानु(सन्धान)द्वारा' क ।

(८) (A)अवाचकं यथा—

**अवन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः।**
**अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषादरः ॥ १४८ ॥**

---

(८) अवाचकमिति, शक्तिभ्रमप्रयुक्तत्वम् अवाचकत्वम्; वक्ष्यमाणे नेयार्थे तु न शक्तिभ्रम इति भेदः। [1]न च तत्र न भ्रमोऽत्र तु भ्रम इत्यत्र किं विनिगमकमिति वाच्यम्, शक्तिभ्रमोन्नायकसत्त्वासत्त्वयोरेव विनिगमकत्वात्[1]*। [2]न च अवाचकस्याऽपि

---

(A) अवाचकमिति। अस्य बहूदाहरणप्रदर्शने बीजं प्रदीपे स्फुटमिति तद्ग्रन्थ उद्ध्रियते—"अवाचकं विवक्षितधर्मविशिष्टस्य विवक्षितधर्मिणः क्वापि न वाचकं यत्तदित्यर्थः। अत एवासमर्थाद्भेदः तस्य क्वचिच्छक्तिस्वीकारात्। एतादृशविशिष्टविरहश्च क्वचिद्धर्मिणि शक्तावपि विवक्षिते प्रकारे शक्तिविरहात्, क्वचित् प्रकारे शक्तावपि धर्मिणि शक्तिविरहात्, क्वचित् प्रकार-धर्मिणोरुभयोरपि शक्त्यभावात्। तत्राऽऽद्यं द्विधा—अपेक्षितयोगमनपेक्षितयोगं च। तयोराद्यं यथा—अवन्ध्य०।

अत्र पूर्वार्द्धे दारिद्र्यरूपापद्विघातकतया दातृत्वं विवक्षितमिति द्वितीयार्धे तद्वैपरीत्यप्रदर्शकं जन्तुपदमदातरि प्रयुक्तम्। तत्र जायते इति योगमपेक्ष्य तस्य शक्तत्वेऽपि न विवक्षितया अदातृतया प्रकारेण सेत्यवाचकम्।

अनपेक्षितयोगं यथा—हा धिक् सा०।

अत्र दिनपदं प्रकाशमयमित्यर्थे विवक्षितम्, तामसीत्यनेन लब्धस्य तमोमयत्वस्य वैपरीत्या-भिधानायोपादानात्। तत्र च धर्मिणि योगमनपेक्ष्यैव रूढ्या दिनत्वेन शक्तम्, न पुनः प्रकाश-मयत्वेनेत्यवाचकम्। द्वितीयं यथा—

जलं जलधरे क्षारमयं वर्षति वारिदः।
इदं बृंहितमश्वानां ककुद्मानेष हेषते ॥

अत्र जलधरशब्दस्य जलधारकत्वे प्रकारे सामर्थ्येऽपि न समुद्रे धर्मिणि सामर्थ्यम्। यद्यपि योगशक्तिस्तत्राप्यस्त्येव तथाऽपि रूढ्या प्रतिबन्धादनस्तिकल्पैव।

तृतीयं तूपसर्गसंसर्गादर्थान्तरगतमन्यथा च। तयोराद्यं यथा—जङ्घाकाण्डो०।

अत्र विदधातिर्धारणे प्रयुक्तो न च धारणे धारणत्वे वा समर्थः। विसंसर्गेण करणे नियमित-शक्तित्वात्।

अन्यस्तु वाक्यनिष्ठवाचकतायां 'प्राभ्रभ्राड्—' इत्यादावुदाहरिष्यते। तदेवं निर्दूषणे

---

1. अयमंशः ख-पुस्तके नास्ति। 2. 'न च अवाचकस्याप्यवाच्यार्थे तात्पर्यरूपा लक्षणास्त्विति। नेयार्थलक्षणातोऽस्य को भेद इति वाच्यम्' ख। ग-पुस्तके पुनरयमंशो नास्ति।

**अत्र जन्तुपदमदातर्यर्थे विवक्षितम्, तत्र च नाऽभिधायकम्।**

तदर्थे तात्पर्यरूपया लक्षणया बोधकत्वात् नेयार्थत्वमिति[1]* वाच्यम्, अवाचकत्वभेदस्य नेयार्थलक्षणे प्रवेशनीयत्वात्। [1]असमर्थे तु शक्तिरस्त्येवेति न तद्भ्रमः; किन्तु तदग्रहमात्रम्[1]*। अबन्ध्येति, दुर्योधननिग्रहार्थं युधिष्ठिरमुद्वेजयन्त्या द्रौपद्या उक्तिरियम्। देहिनः शत्रवो मित्राणि च। तत्र शत्रुरूपा देहिनः अबन्ध्यकोपस्य जनस्य, मित्ररूपा देहिनश्च दारिद्र्यापदां विहन्तुर्जनस्य स्वयमेव वश्या भवन्ति, एतद्-द्वयाभावे तु ते वश्या न भवन्तीति भङ्ग्या आह—अमर्षेति। अमर्षश्चात्र अबन्ध्यो बोध्यः। तच्छून्येन भवादृशा विद्विषा जनस्य न दरः न भयम्। विद्विषादर इत्यत्र दरादर-पदद्वयं श्लिष्टम् आकारप्रश्लेषात्। तथाच भयाभावात् नासौ वश्यो भवतीति पूर्वोक्त-व्यतिरेकः। तथा जन्तुना अदात्रा अत एव दारिद्र्याद्यापदविहन्त्रा भवादृशा जातहार्द्देन मित्रेण जनस्य मित्ररूपस्य न आदरः। तथाच [2]आदरशून्यं मित्रं न वश्यं भवतीति पूर्वोक्तव्यतिरेकः। **तत्र च नाभिधायकमिति** [3]शक्तिभ्रमेण, तदर्थे तात्पर्यरूपया लक्षणया तु तादृशं पदं बोधकमिति बोध्यम्। [4]इदञ्च वाक्य-दोषकथने व्यक्तीभविष्यति[4]*। न चात्र शक्तिभ्रमोन्नायकं किमिति वाच्यम्, 'जन्तुः प्राणिन्यदातरी'ति (A)गड्डरिकाप्रवाहप्रवृत्ताप्रामाणिककोषस्यैव तदुन्नायकत्वात्[3]*।

---

प्रकाशे यत् असमर्थे धर्मधर्मिणोर्द्वयोरपि शक्तिविरहः। अवाचके तु धर्ममात्रे सः। विदध-दित्युदाहरणं त्ववाचकप्रकरणमध्येऽसमर्थस्यैव, इति प्रलपितं तद्वाक्यावाचकत्वोदाहरणानवलोकन-निबन्धनं सन्दर्भविरुद्धं चेत्यनादेयम्। दूषकताबीजं तु विवक्षितार्थानुपस्थितिरिति नित्य एवायम्' इति।

(A) मेषानुगामिनी मेषश्रेणिः गड्डरिका गड्डलिका वा उच्यते। गड्डरिकाप्रवाहो

---

1. अयमंशः ख-ग-पुस्तकयोर्न दृश्यते। 2. 'अदातृ मित्रं' क, 'अदातुर्मित्रं' ख। 3. 'न च शक्तिभ्रमात्तदर्थं वक्तुस्तात्पर्यंरूपा लक्षणैव तत्र बोधिका तात्पर्यस्यैवालङ्कारिकैर्लक्षणात्वेन स्वीकृतत्वादिति वाच्यम् इष्टत्वादेव। अत एव अवाचकपदस्यापि बोधकत्वे तद्घटितपदसमूहस्य वाक्यत्वेनास्य वाक्यदोषता, असाधुपदस्याबोधकत्वेन तद्घटितपदसमूहस्य वाक्यत्वाभावात् न वाक्यदोषतेति वक्ष्यते। परन्तु लक्षणाया बोधकत्वेऽपि शक्त्या बोधकत्वभ्रमप्रयुक्तत्वमेव तद्वृत्तिर्दोषः पदवृत्तिर्युधिष्ठिरविषयासूयाया इतिकृत्। न चात्र शक्तिभ्रमः कथं निर्णीयत इति वाच्यम्, जन्तुः प्राणिन्यदातरीति गड्डरिकाप्रवाहन्यायप्रवृत्ताप्रामाणिकानुशा-सनेन तन्निर्णयात्' ग। 4. 'अत एव अवाचकपदस्यापि बोधकत्वेन तद्घटितपदसमूहस्य बोधकत्वेन वाक्यत्वात् तस्य वाक्यदोषत्वं असाधुपदस्य त्वबोधकत्वेन तद्घटितपदसमूहस्याबोधकत्वादवाक्यत्वात् वाक्य-दोषात्तद्बहिर्भावः करिष्यते। अत्र द्रौपद्या युधिष्ठिरविषयामर्षरूपव्यभिचारिभावप्रकर्षबोधइति:' ख।

यथा वा—

हा धिक् सा किल तामसी शशिमुखी दृष्टा मया यत्र सा
तद्विच्छेदरुजाऽन्धकारितमिदं दग्धं दिनं कल्पितम् ।
किं कुर्मः कुशले सदैव विधुरो धाता न चेत् तत्कथं
तादृग्यामवतीमयो भवति मे नो जीवलोकोऽधुना ॥१४९॥

अत्र दिनमिति प्रकाशमयमित्यर्थेऽवाचकम् । यच्चोपसर्गसंसर्गादर्थान्तरगतम् । यथा—

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः ।

---

नन्वत्र जन्तुपदं न अज्ञातेऽर्थे प्रयुक्तं येन तादृशकोषाद् भ्रमोन्नयनं स्यात्, किन्तु पूर्वोक्तव्यतिरेकरूपे आपद्विहन्तृरूपेऽर्थे एव, तथा च तादृशाऽप्रामाणिककोषात् क शक्तिभ्रम इत्यत आह—**यथा वा हा धिगिति**। रात्रौ स्वप्नदृष्टोर्वशीकस्य पुरूरवस उक्तिरियम्(A)। यत्र रात्रौ शशिमुखी चन्द्रतुल्यद्युतिमन्मुखी अर्थादुर्वशी मया दृष्टा सा रात्रिः तामसी तमस्विनी, अत एव हा खेदे, धिक् विधिनिन्दायाम्; तथा तद्विच्छेदरूपरुजा व्याधिना अन्धकारितम् इदम् अनुभूयमानकालरूपं वस्तु दग्धं दुःखदायित्वेन निन्द्यं दिनं प्रकाशमयं कल्पितम् अन्धकारितकालस्य प्रकाशमयत्वकल्पनादत्रापि हा धिगिति बोध्यम्। ननु विधिं प्रसाद्यैव स्वाभीष्टं साध्यतामित्यत आह--किं कुर्म इति। विधुरः अननुकूलः; न चेदिति अनुकूलश्चेदित्यर्थः। तादृग्यामवती स्वप्नदृष्टोर्वश्यधिकरणरात्रिः, तन्मयस्तत्स्वरूपः; जीवलोकः जीवनाखिलकालः। **अत्रेति**, प्रकाशमयत्वस्यैव तामसीत्वविरुद्धत्वात्; न तु (B)दिनत्वस्य, निविडमेघाद् दिनेऽपि तमःसत्त्वात्। अत्र दिनस्य प्रकाशमयत्वदर्शनात् तद्रूपेणैव शक्तिभ्रम उन्नीयते, अतः अवाचकत्वम्। प्रकाशमयत्वेन तात्पर्यरूपया लक्षणया तु बोधकमेव। अत्र च भ्रमोन्नायकस्य प्रायिकत्वादसन्तोषादन्यदाह—**यच्चेति**। **अर्थान्तरगत**मिति [1]तदुपसर्गरहितस्य धातोरेव तदर्थे शक्तिरनुशासनतात्पर्य-

---

न्यायविशेष इति शब्दसारः। विचारमन्तरेण पुरोगाम्यनुसरणरूपेण गड्डरिकाधर्मेण ये प्रवर्तन्ते ते गड्डरिकाप्रवाहप्रवृत्ता इत्युच्यन्ते।

(A) हा धिगिति पद्यमस्मदुपलब्धविक्रमोर्वश्यां नोपलभ्यते।

(B) दिनत्वस्येति तामसीत्वविरुद्धत्वमस्तीति शेषः।

---

1. 'शुद्धधातौ गृहीताऽपि शक्तिरुपसर्गविशेषसमवद्भूत (?) धातौ नास्तीत्यतस्तत्र शक्तिभ्रम एव। न च

भर्त्तुर्नृत्यानुकारे जयति निजतनुस्वच्छलावण्यवापी-
सम्भूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः ॥१८१॥

---

विषयः, तदुपसर्गविशिष्टन्तु तद्धातुपदम् 'अर्थान्तरगतम्' अर्थान्तरवाचकम्, तच्च विवक्षितशुद्धधात्वर्थे अवाचकमित्यर्थः'*। जङ्घाकाण्डेति। ऊर्द्ध्वचरणमहेश-नृत्यानुकारेण नृत्यन्त्याः पार्वत्या ऊर्द्ध्वचरणवर्णनमिदम्। भर्त्तुः महेशस्य नृत्यानुकारदशायां भवान्या दण्डाकारः पादो जयति। कीदृशः? भवान्या एव निजतनोर्यत् स्वच्छं लावण्यं तदेव या अन्यत्र प्रसिद्धा वापी तत्सम्भूतस्याम्भोजस्य शोभां दधदित्यर्थः। वाप्याः स्वच्छलावण्यतुल्यत्वे दण्डपादाधिकरणस्वच्छलावण्यस्यापि वापीतुल्यत्वमर्थवशलभ्यम्, अतस्तदाधेयस्य दण्डपादस्य पद्मतुल्यत्वमुपपादयति—जङ्घेति। अम्भोजतुल्यशोभावति अनम्भोजे दण्डपादे च नालादिरूपणं बाधितम्, अतो जङ्घाकाण्डम् ऊरुनालमिव यत्र दण्डपादस्तादृशः, तथा नखकिरणा लसत्केसराणीव तैः करालः व्याप्तः, नवीनालक्तकाभाप्रसरः किसलयानीव यत्र, मञ्जु मञ्जीरं भृङ्गा इव यत्र तादृश इत्येवं पुरुषव्याघ्रादिसमासगर्भबहुव्रीहिणा व्याख्येयम्, पुरुषव्याघ्रो देश इतिवत्। ननु स्वच्छलावण्यमेव वापीति रूपकम्, तथा च तत्सम्भूताम्भोजशोभामिति किं न व्याख्यायते इति चेन्न लावण्यात्मकवापीसम्भूताम्भोजाप्रसिद्धेः। न चेयमभूतोपमेति वाच्यम् अप्रसिद्धस्याप्युपमानस्य सम्भावनयाऽपि प्रसिद्धिसत्त्व एव अभूतोपमात्वात्। यथा—

सर्वपद्मप्रभासारः समाहृत इव क्वचित्।
तदाननं विभातीति तामभूतोपमां विदुः॥

इति दण्ड्युक्तौ सर्वस्रष्टुर्विधेः सर्वपद्मप्रभासारसमाहरणसामर्थ्यात् सम्भावितः समाहृतसर्वपद्मप्रभासार उपमानम्। लावण्यात्मकवापीसम्भूताम्भोजस्य तु न कथञ्चिदपि सम्भावना। अन्यथा—

निष्पेतुरास्यादिव तस्य दीप्ताः शरा धनुर्मण्डलमध्यभाजः।
जाज्वल्यमाना इव वारिधारा दिनार्द्धभाजः परिवेशिनोऽर्कात्॥

---

न च धातौ शक्तिरेव उपसर्गविशेषवशात्तु तद्ग्रह एवेति वाच्यम्, तदुपसर्गविशिष्टधातोस्तदर्थं प्रति सर्वथाऽबोधकत्वेन तदविशिष्टधातोरेवानुशासनेन शक्तिग्रहस्य निर्णयात्, प्रमाणासत्त्वे धातुत्वेन सामान्येन लाघवस्याकिञ्चित्करत्वात्। तथा च तात्पर्यरूपलक्षणया विवक्षितार्थबोधकत्वेऽप्यवाचकमेव तादृशपदमिति भावः' ग।

अत्र दधदित्यर्थे विदधदिति ।

(९) त्रिधेति व्रीडा-जुगुप्सा-ऽमङ्गलव्यञ्जकत्वात् । यथा—

साधनं सुमहद् यस्य यन्नान्यस्य विलोक्यते ।

तस्य धीशालिनः कोऽन्यः सहेतारालितां भ्रुवम् ॥१५१॥ (१)

लीलातामरसाहतोऽन्यवनितानिःशङ्कदष्टाधरः

कश्चित्केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः ।

---

इत्यत्र स्वयं वक्ष्यमाण उपमानासम्भवदोषोऽपि न स्यात्, परिवेशिमध्याह्नार्कान्निष्पतन्तीनां जाज्वल्यमानवारिधाराणां सम्भावनया प्रसिद्धयभावेऽपि भवन्मते अभूतोपमाप्रसक्तेः। 'बालप्रवालविटपप्रभवा लतेव' इत्यत्र तु वटादिविटपे लतादर्शनाद्ध भवत्येव प्रवालविटपेऽपि सम्भाविता लता उपमानम् । अत्रेति, 'डु धाञ् डु भृञ् धारणपोषणयो'रिति सामान्यमुखप्रवृत्तानुशासनदर्शनात् विपूर्व'धा'धातावपि धारणे शक्तिभ्रम इत्यवाचकता । न च धातोरेव सामान्यतो धारणे शक्तिः, उपसर्गेण तु तद्ग्रहप्रतिबन्ध एवेति वाच्यम्, प्रतिबन्धकत्वकल्पनापेक्षया तद्विशिष्टधातोरेव शक्तिकल्पने लाघवमित्यभिप्रायात्; (A)वह्ने स्तु मण्याद्यनुपस्थितावपि प्रत्यक्षेण वह्नित्वेनैव दाहकत्वग्रह इति भवत्येव तत्र मणेः प्रतिबन्धकत्वम् । न चात्र विधानमेव किं नार्थ इति वाच्यं स्वस्मिन्नित्यकरणात् तस्मिन्नर्थे तात्पर्याभावनिश्चयात् । अत्र अवाचकत्वं पददोषो भवानीविषयभावप्रकर्षबोधहतिकृत् ।

(६) व्यञ्जकत्वादिति, व्यञ्जकत्वमत्र आविर्भावकत्वं जनकज्ञापकोभयसाधारणम् । तथाच व्रीडाजुगुप्सयोर्जनकत्वम्, अमङ्गलस्य तु ज्ञापकत्वमेव आविर्भावकत्वम् । 'जुगुप्सा' घृणा । साधनमिति । 'साधनं' सेना । धीशालित्वेन नीतिमत्त्वमपि दर्शितम् । अरालितां कोपकुटिलाम् । अत्र अनेकार्थस्य साधनशब्दस्य प्रकरणात् सेनारूपे अर्थे अवगते पुंसो लिङ्गरूपोऽपि तदर्थो व्यज्यत इति श्रोतुर्व्रीडोत्पत्त्या राजविषयकभावप्रकर्षबोधहतिः । (१)

जुगुप्साश्लीलमाह—लीलेति । अन्यवनितया निःशङ्कं दष्टाधरः कश्चिद् अर्थात् स्ववनितया लीलातामरसेनाहतः सन् केशरदूषितेक्षण इव छलेन नेत्रे व्यामील्य स्थितः, ततश्च सा मुग्धा, "तस्य" स्थाने तत्रेति पाठे तु तत्र नेत्रयोः कुड्मलाकारीकृतेन

---

(A) उक्तरीत्या अन्यत्रापि प्रतिबन्धकत्वकल्पनानौचित्यमाशङ्क्य निराचष्टे—वह्ने रिति ।

मुग्धा कुड्मलिताननेन ददती वायुं स्थिता तत्र सा
भ्रान्त्या धूर्त्ततयाऽथवाऽऽनतिमृते तेनाऽनिशं चुम्बिता ॥ १५२ ॥ (२)

मृदुपवनविभिन्नो मत्प्रियाया विनाशाद्
घनरुचिरकलापो निःसपत्नोऽद्य जातः ।
रतिविगलितबन्धे केशपाशे सुकेश्याः
सति कुसुमसनाथे कं हरेदेष बर्हः ॥ १५३ ॥ (३)

एषु साधन-वायु-विनाशशब्दा व्रीडादिव्यञ्जकाः ।

(१०) सन्दिग्धं यथा—

आलिङ्गितस्तत्रभवान् सम्पराये जयश्रिया ।
आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु ॥ १५४ ॥

---

आननेन वायुं ददती तेन पुरुषेण अनिशं बहुवारम् आनतिमृते प्रसादनं विना चुम्बितेत्यर्थः । अत्र हेतुमाह—भ्रान्त्येति । क्रोधोऽपगत इति भ्रान्तिः, क्रोधानपगमेऽपि सापराधत्वसमये निराबाधं चुम्बामीति धूर्त्तता । अत्र वायुशब्दो दीयमानत्वादेव अपानवायुव्यञ्जनया श्रोतुर्जुगुप्साजनकः । न च आननधृतस्य वायोः कथमपानवायुत्व-प्रसक्तिरिति वाच्यम्, [1]तमेवाननेन (A)धृत्वा दीयमानत्वबोधोदयात्[1]* । (२)

अमङ्गलाश्लीलमाह—मृदुपवनेति । उर्वशीविरहिणः पुरूरवसो मयूरपुच्छं दृष्ट्वा इयमुक्तिः । एष बर्हः मयूरपुच्छः मृदुपवनेत्यादिविशेषणविशिष्टः मत्प्रियाया विना-शाद् अदर्शनाद् अद्य निःसपत्नो जातः स्वतुल्यान्तरशून्योऽभूदित्यर्थः । घनेत्यादौ कलापपदं बर्हावयवपक्षपरम्, तेन बहुव्रीहिः । सुकेश्याः उर्वश्याः केशपाशे सति विद्यमाने तु एष बर्हः कं हरेद् आकर्षेत् । बर्हवद्विस्तृतत्वमाह—रतीति । बर्हस्थ-चन्द्रकसाम्यमाह—कुसुमेति । अत्र विनाशशब्दस्य अमङ्गलमृत्युव्यञ्जकत्वं दोषः राजविप्रलम्भप्रकर्षबोधहतिकृत् । त्रिष्वश्लीलतां दर्शयति—एष्विति । अत्रापि व्यञ्जका इत्यत्र आविर्भावका इत्येवार्थः । (३)

(१०) सन्दिग्धमिति, उभयथाऽप्यर्थसम्भवाद् इदम् इदं वा पदमिति सन्देह-विषयपदत्वं तत्त्वम् । आलिङ्गित इति । तत्रभवान् पूज्यः त्वं सम्पराये युद्धे

---

(A) धृत्वेत्यस्य दीयमानेत्यनेनैककर्तृकत्वम्, बोधस्तु सभ्यानामेवेति बोध्यम् ।

---

1. 'तमेव धृत्वा आनने दीयमानत्व( दीयमानत्वबोधो )दयात्' ग ।

अत्र वन्द्यां किं हठहृतमहिलायां किं वा नमस्यामिति सन्देहः ।

( ११ ) अप्रतीतं यत्केवले शास्त्रे प्रसिद्धम् । यथा—

सम्यग्ज्ञानमहाज्योतिर्दलिताशयताजुषः ।
विधीयमानमप्येतन्न भवेत् कर्म बन्धनम् ॥ १५५ ॥

अत्राऽऽशयशब्दो वासनापर्यायो योगशास्त्रादावेव प्रयुक्तः ।

( १२ ) ग्राम्यं यत्केवले लोके स्थितम् । यथा—

राकाविभावरीकान्तसंक्रान्तद्युति ते मुखम् ।
तपनीयशिलाशोभा कटिश्च हरते मनः ॥ १५६ ॥

अत्र कटिरिति ।

( १३ ) नेयार्थम्—

निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत् ।
क्रियन्ते साम्प्रतं काश्चित् काश्चिन्नैव त्वशक्तितः ॥

इति यन्निषिद्धं लाक्षणिकम् । यथा—

---

जयश्रिया आलिङ्गितः सन् आशीःपरम्पराम् अर्थात् जितशत्रुप्रयुक्तां कर्णे कृत्वा श्रुत्वा कृपां कुरु इत्यर्थः । अत्रेति वन्द्यामिति पदं किं द्वितीयान्तमाशीर्विशेषणम्, किं वा सप्तम्यन्तं वन्दीपदमिति सन्देह इत्यर्थः । अत्र पदस्य सन्दिग्धत्वं वाक्यार्थबोधविलम्बेन राजविषयभावबोधशैघ्र्यहतिकृत् ।

(११) 'शास्त्रे' शास्त्रविषये । सम्यग् ज्ञानेति, सम्यग् ज्ञानं तत्त्वज्ञानं तदेव महाज्योतिः तेन दलितः आशयः मिथ्यावासना यस्य तथात्वजुषः पुंसः विधीयमानमपि एतद् विहितं निषिद्धञ्च कर्म बन्धनं न भवेदित्यर्थः । अत्रेति तच्छास्त्रानभिज्ञजनाप्रतीयमानार्थकत्वं पददोषस्तत्त्वज्ञानिपुरुषविषयभावप्रकर्षबोधहतिकृत् ।

(१२) 'लोके' विदग्धेतरलोके 'स्थितं' प्रयोक्तृत्वसम्बन्धेन स्थितम् । राकेति । पूर्णिमाचन्द्रात् संक्रान्ता द्युतिर्यत्र तादृशं ते मुखम्, तपनीयशिलाशोभा सुवर्णशिलाकारा ते कटिर्नितम्बश्च मनो हरते इत्यन्वयः । अत्रेति, नितम्बार्थककटिशब्दस्य विदग्धाप्रयुज्यमानत्वरूपं ग्राम्यत्वं दोषः, तेन नायिकाविषयशृङ्गारप्रकर्षहतिः ।

(१३) यन्निषिद्धमिति

शरत्कालसमुल्लासिपूर्णिमाशर्वरीप्रियम् ।
करोति ते मुखं तन्वि चपेटापातनातिथिम् ॥ १५७ ॥

अत्र चपेटापातनेन निर्जितत्वं लक्ष्यते ।

अथ समासगतमेव दुष्टमिति सम्बन्धः । अन्यत्तु केवलं समासगतं च ।

---

निरूढलक्षणाः काश्चित् सामर्थ्यादभिधानवत् ।
क्रियन्ते साम्प्रतं काश्चित् काश्चिन्नैव त्वशक्तितः(A) ॥

इत्यनेन कवेरसामर्थ्यात् यन्निषिद्धं लाक्षणिकमित्यर्थः । असामर्थ्यञ्च यादृशलक्ष्यार्थे मुख्यार्थसम्बन्धानुपस्थितिः रूढिप्रयोजनयोरेकतरस्यापि न ज्ञानं तस्मिन्नर्थे लाक्षणिकपदप्रयोगे बोध्यम् । अत्र च शक्तिभ्रमप्रयुक्तत्वाभावे सतीति बोध्यम्, तेन ईदृशलक्षणया बोधकेऽप्यवाचकत्वे नातिव्याप्तिः । तदभावनिश्चयश्च तादृशभ्रमोन्नायकासत्त्वादेवेत्युक्तम् । **शरत्कालेति,** ते तव मुखं कर्त्तृ शरत्काले समुल्लासिनं पूर्णिमानिशापतिं चपेटापातनस्य करतलप्रहारस्य अतिथिं पात्रं करोतीत्यन्वयः । अत्र मुखस्य करतलाभावेन चन्द्रे तत्पातनाभावेन चपेटपदे निर्जितत्वे लक्षणा, तदापातनस्य तत्सम्बन्धस्य अतिथिं पात्रमित्यर्थः । अत्रेति । 'चपेटेन' चपेटपदेन । अत्र प्रयोजनानुपस्थित्या नेयार्थतेत्याह चक्रवर्त्ती, तन्न ; निर्जितत्वातिशयस्यैव प्रयोजनस्योपस्थितेः, किन्तु करतलस्य मुख्यार्थस्य लक्ष्यार्थे निर्जितत्वे सम्बन्धे जन्यत्वम्, तच्च प्रकृते बाधितं निर्जितत्वस्य शोभाजन्यत्वेन करतलजन्यत्वाभावात् । अत्र लक्ष्यार्थे मुख्यार्थसम्बन्धोपस्थित्यभावात् नेयार्थता पददोषः नायिकाविषयशृङ्गारप्रकर्षबोधहतिकृत् ।

[1]अत्रापि तात्पर्यात्मिकया लक्षणया बोधो जन्यत एवेत्यतोऽस्यापि वाक्यदोषत्वमुपपद्यते । न च मुख्यार्थबाधादित्रयज्ञानज्ञेयं तात्पर्यमेव लक्षणारूपा वृत्तिर्न तु तात्पर्यान्तरम्, तथाच मुख्यार्थसम्बन्धज्ञानाज्ञाप्यमिदं तात्पर्यं कथं लक्षणेति वाच्यम्, मुख्यार्थबाधज्ञानज्ञेयमेव तात्पर्यं लक्षणा तत्त्रितयज्ञानज्ञाप्यत्वे तु तस्याः कविप्रयोगार्हत्वम्, अन्यथा तु नेयार्थतेत्येव सिद्धान्तात्[1]* ।

अन्यत्त्विति पदं दुष्टमिति शेषः । क्लिष्टत्वादेः पददोषतायामेव समासगतत्वनियमः, वाक्यदोषत्वमसमासेऽपि तेषामिति बोध्यम् ।

---

(A) निरूढेत्यादिपद्यस्य अत्रोल्लेखेन टीकाकृन्मते पद्यमिदं साकल्येन न वृत्त्यन्तर्गतमिति प्रतीयते ।

1. अयमंशः ख-ग-पुस्तकयोर्न दृश्यते ।

( १४ ) क्लिष्टं यतोऽर्थप्रतिपत्तिर्व्यवहिता। यथा—

अत्रिलोचनसंभूतज्योतिरुद्गमभासिभिः।
सदृशं शोभतेऽत्यर्थं भूपाल तव चेष्टितम् ॥ १५९ ॥

अत्र अत्रिलोचनसम्भूतस्य चन्द्रस्य ज्योतिरुद्गमेन भासिभिः कुमुदैरित्यर्थः।

(१५) (A)अविमृष्टः प्राधान्येनाऽनिर्दिष्टो विधेयांशो यत्र तत्। यथा—

---

(१४) 'व्यवहिता' विलम्बिता, [1]विलम्बश्च समासे अन्वितान्वयलभ्यानतिप्रसक्तविशेष्यतावच्छेदककल्पनेन, वाक्ये तु व्यवधानवशादासत्तिकल्पनेन[1]*। अत्रिलोचनेति। अत्र कुमुदत्वेनोपस्थितौ विलम्बः, अन्येषामपि चन्द्रोदये भासमानत्वाद् अन्वितान्वयवशेन चन्द्रलाभाच्च। न च 'वने व्याधैः सार्द्धं सुचिरमुषितं वल्कलधरै'रिति वक्ष्यमाणन्यूनपदोदाहरणे अस्माभिरिति विशेष्यपदस्य न्यूनत्वात् न्यूनपदत्ववदत्रापि न्यूनपदत्वमिति वाच्यम्, अत्र विशेषणे कुमुदत्वसामानाधिकरण्यस्य प्रसिद्धत्वेन विलम्बेनापि कुमुदलाभात् पदकल्पनाभावेन न न्यूनपदत्वम्; तत्र तु वल्कलधरत्वादेः पाण्डवत्वसामानाधिकरण्याप्रसिद्ध्या अस्माभिरित्यस्य कल्पनाऽऽवश्यकत्वात् न्यूनपदत्वम्। एवमन्यतोऽपि विशेष्यतावच्छेदकलाभे सति न क्लिष्टत्वं न्यूनपदत्वं वा। यथा—अयमुदयति मुद्राभञ्जनः पद्मिनीनामित्यत्र इदंपदोदयपदाभ्यां सूर्यस्यैवोपस्थापनात्। अत्र क्लिष्टार्थत्वं पददोषः राजविषयभावबोधस्य विलम्बनरूपहतिकृत्[2]*।

( १५ ) अविमृष्टविधेयांशमाह—अविमृष्ट इति। विधेयस्य विधेयत्वप्रतीति-

---

(A) अविमृष्ट इति। विधेयं हि अपूर्वत्वात् प्रधानम्। तथाच—यथा निर्देशे वस्तुतो विधेयस्य विधेयत्वेन प्रतीतिर्न भवति, तथा निर्देशे अविमृष्टविधेयांशभावो दोषः। एष एव विधेयाविमर्शादिपदे नोच्यते। उद्देश्यविधेयभावनिरूपणं तु न सुकरम्। तथाहि "प्राधान्यं च

---

1. अयमंशः ख-पुस्तके नोपलभ्यते। 2. 'इत्यत्र अस्माभिरिति विशेष्यपदन्यूनतया वक्ष्यमाणे न्यूनपददोष एवात्र कुमुदैरिति विशेष्यपदन्यूनेऽपि स्यादिति वाच्यम्, अत्र विशेषणानां कुमुदे विशेष्ये प्रसिद्धिवशादेव लाभात्, वल्कलधरत्वं तु पाण्डवानां विशेषणतया नोपतिष्ठते वनवासिसामान्यस्यैव तथात्वस्फुरणात्, अतस्तत्र अस्माभिरित्यस्याध्याहारावश्यकत्वेन न्यूनपदत्वमेव। किञ्च न्यूनपदस्याध्याहारे शीघ्रमेव तात्पर्यग्रहः, अत्र त्वन्वितार्थग्रहेण विलम्बात्तद्ग्रह इत्यपि भेदो बोध्यः। अत्र राजविषयभावबोधप्रतिहतिः' ख।

मूर्ध्नामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधारा-
धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम् ।
कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां
दोष्णां चैषां किमेतत्फलमिह नगरीरक्षणे यः[1] प्रयासः ॥ १८९ ॥

---

कारिसमभिव्याहार एव प्राधान्यं (A)तथात्वेनानिर्दिष्ट इत्यर्थः । तादृशसमभिव्याहारश्च असमासे उद्देश्यतः पश्चाद् विधेयस्य निर्देशः, यथा पर्वतो वह्निमानिति; तथा प्राङ्निर्दिष्टविधेयको बहुव्रीहिः, यथा—'निर्मृष्टरागोऽधरः' इति 'वपुर्विरूपाक्ष'-मिति च । अत्र हि रागनिर्मृष्टत्वस्य अक्षिवैरूप्यस्य च विधेयतयैव सर्वजनसाक्षिका प्रतीतिः । समासान्तरे पश्चान्निर्दिष्टविधेयके बहुव्रीहौ च अविमृष्ट एव विधेयांशः, तत्र पश्चान्निर्दिष्टविधेयके बहुव्रीहावुदाहरति—मूर्ध्नामिति । रामसैन्यवेष्टितलङ्कस्य

---

विधिप्रतीतियोग्यता, सा च कुत्रास्ति कुत्र वा नेत्यस्य विद्वदनुभव एव प्रमाणम्; केवलमुदाहरणे एतत् प्रदर्शितम् । विधेयस्य समासान्तर्गतत्वेन इतरविशेषणतयोपस्थितौ (एकस्मिन् वाक्ये) 'अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्' इति नियमविपरीतनिर्देशे, उद्देश्यगतविशेषणान्तर-महिम्ना विधानात् पूर्वमेव सिद्धौ, यच्छब्दसान्निध्येन प्रसिद्धार्थ एव नियमितशक्तिकेन तदादि-पदेन निर्देशे च विधेयतानवगमः' इति विवरणोक्तेः प्राधान्यमेव विधेयत्वमित्याशयो महेशचन्द्र-न्यायरत्नानामित्यवगम्यते । बालबोधिनीकारास्तु—"यच्छब्दयोगः प्राथम्यं सिद्धत्वं चाप्यनूद्यता । तच्छब्दयोग औत्तर्यं साध्यत्वं च विधेयता" इति भट्टवार्त्तिकमुद्धृत्य "यच्छब्दप्रतिपाद्यं सिद्धत्वेन प्रतीयमानमनुवाद्यम् उद्देश्यम्, तदादि शब्दप्रतिपाद्यम् उद्देश्यसम्बन्धितया अपूर्व-बोधविषयीभूतं विधेयम् यथा—'यः पण्डितः स क्रियावान्' इत्यादौ क्रियावन्तमुद्दिश्य, अभेदेन पण्डितः स्वरूपेण पण्डितत्वं वा विधीयते । यद्यपि यत्तच्छब्दौ सर्वत्र न प्रयुज्येते तथाऽपि गम्येते ताविति" इति 'तथाच उद्देश्यविधेययोः पृथक्पदाभ्यामुपस्थितिर्न तु समास प्रविष्टत्वम्' इति च वदन्ति ।

(A) तथाशब्देनात्र प्राधान्यैकदेशः प्रधानं परामृश्यते, अतो न भावप्रत्ययासङ्गति-रिति बोध्यम् ।

---

1. 'यत्' इति पाठान्तरम् ।

(A)अत्र मिथ्यामहिमत्वं नानुवाद्यम् अपि तु विधेयम् ।

---

रावणस्य विषादोक्तिरियम् । उक्तविशेषणकानां मम मूर्ध्नां दोष्णां हस्तानां च किमेतत् फलम्, हेलयैव त्रैलोक्यरक्षकस्य मम नगरीरक्षणे यः प्रयासः । मूर्ध्नां विशेषणमाह—उद्वृत्तेति । नवनवगलकर्त्तने उद्वृत्ताः पुनः कृत्ताश्च ये अविरला गलाः तेभ्यो गलन्त्यो या रक्तानां संसक्ता निविडा धाराः ताभिर्धौतौ यौ ईशस्य महेशस्य अङ्घ्री पादौ तत्प्रसादेन उपनतः जयो यत्र तादृशे जगति जातः मिथ्या महिमा येषां तादृशानामित्यर्थः । दोष्णां विशेषणमाह—कैलासेति । कैलासोत्पाटनेच्छासमूहस्य सूचकैः उत्सर्पिभिः उद्भटैः दर्पैः उद्धुराणाम् उद्धटानामित्यर्थः । अत्र जातमिथ्यामहिम्नामित्यत्र जातमहिमानुवादेन इदानीं तदीयमिथ्यात्वं विधेयम्, तच्च मिथ्यात्वमत्र बहुव्रीहौ जातत्वस्यानुवाद्यविशेषणस्य (B)पश्चान्निर्दिष्टत्वात् विधेयतया न प्रतीयते किन्तु मिथ्यात्वविशिष्टमहिम्नो(C)ऽनुवाद्यतैव प्रतीयते इत्यविमृष्टत्वं विधेयस्य मिथ्यात्वस्य, प्रतीयमाना तस्यानुवाद्यता तु न विवक्षितेत्याह—(D)अत्र मिथ्यामहिमत्वमिति । 'नानुवाद्यं' नानुवाद्यतावच्छेदकम्, मिथ्यामहिमा जात-

---

(A) अत्रेति । मिथ्यामहिमत्वमित्यस्य मिथ्यामहिमेत्येवार्थः, स च भावप्रत्ययार्थस्याविवक्षितत्वाद्वा देवतादिशब्द इव तल्प्रत्ययस्य स्वार्थिकत्वाभ्युपगमाद्वा मिथ्या महिमा यस्येति बहुव्रीह्युत्तरं भावे तल्प्रत्ययेन 'यद्धर्मविशिष्टबोधकपदोत्तरवर्त्ती भावविहितप्रत्ययस्तद्धर्मं बोधयतीति व्युत्पत्त्या वा लभ्यते । एवम् 'अनुवाद्य'मित्यस्य केवलमनुवाद्यमित्यर्थः । तथाच मिथ्यामहिमेति समुदायो न केवलमनुवाद्यमित्यर्थः ; केवलपदव्यावृत्तिमाह—अपि त्विति । अत्रापि विधेयमित्यस्य विधेयसहितमित्यर्थः । एवञ्च मिथ्यामहिमत्वं मिथ्यात्वरूपेण विधेयेन सहितमनुवाद्यमिति अपि त्वित्यादेर्निष्कृष्टोऽर्थः । इत्थञ्च उद्देश्यविधेययोः स्फुटं बोधे सति तद्बोधकपदयोर्व्युत्क्रमप्रयोगेण विधेयाविमर्शः सुगम इति वृत्तिकाराभिप्रायः । एतेन मिथ्यात्वविशिष्टस्य महिम्नः अनुवाद्यत्ववद् विधेयत्वमपि मूलोक्तमसङ्गतमित्याशङ्काया नावसरः । अन्ये तु विधेयान्तराभावेन हेतुना मिथ्यात्वविशिष्टमहिम्नो यथाश्रुतमेवानुवाद्यत्वसामान्याभावं सङ्गमयन्ति तन्मते अपि त्वित्यादिनोक्तं विधेयत्वमपि विशिष्टस्यैव सङ्गमनीयम्, तच्च दुष्करमिति विभावनीयम् ।

(B) पश्चान्निर्दिष्टत्वादिति, अनुवाद्यस्य महिम्नः पूर्वं विधेयस्य मिथ्यात्वस्य निर्देशादिति तु निर्गलितोऽर्थः ।

(C) अनुवाद्यतैवेति । अनुवाद्यत्वमत्र विधेयतया प्रतीते जातत्वांश इति बोध्यम् ।

(D) 'अत्र मिथ्यामहिमत्व'मिति वृत्तिग्रन्थोत्थापकः टीकाभागः ख-ग-पुस्तकयोः प्रत्येकं

यथा वा—

स्रस्तां नितम्बादवरोपयन्ती[1] पुनः पुनः केसरदामकाञ्चीम्।
न्यासीकृतां स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य॥१६०॥

अत्र द्वितीयत्वमात्रमुत्प्रेक्ष्यम्। मौर्वीं द्वितीयामिति युक्तः पाठः।

---

त्वस्य न अनुवाद्य इत्यर्थः, [2]न ह्यत्र मिथ्यामहिमानुवादेन जातत्वं विधीयते, येनात्र बहुव्रीहौ पूर्वनिर्दिष्टात्ततः पश्चात् महिमनिर्देशः स्यात्, जातमहिम्नि इदानीं मिथ्यात्वस्यैव विधीयमानत्वात्। 'किन्तु विधेय'मित्यत्र मिथ्यात्वमिति शेषः मिथ्यामहिम्नो विधेयत्वस्याप्यसम्भवात्*। यदि तु (A)मिथ्याजातमहिम्नामिति क्रियेत तदैवात्र बहुव्रीहौ प्राङ्निर्दिष्टं मिथ्यात्वं जातमहिमानुवादेन विधेयतया प्रतीयते इति भावः। केचित्तु बहुव्रीहौ प्राङ्निर्दिष्टस्यापि विधेयत्वप्रतीतिमपलपन्तः 'अत्र मिथ्यामहिमत्वं कस्यापि विधेयस्य नानुवाद्यतावच्छेदक'मित्येव व्याचक्षते, तन्न; बहुव्रीहौ प्राङ्निर्दिष्टस्य विधेयतया प्रतीतेरानुभविक्या दुरपह्नवत्वात्, अन्यथा 'वपुर्विरूपाक्ष'मित्यत्रैव तदुदाहरणसम्भवे तदुपेक्ष्य अलक्ष्यजन्मतेत्यत्र ग्रन्थकृता तत्प्रदर्शनं किमिति कृतं स्यात्, स्याच्च निर्मृष्टरागोऽधर इत्यत्र निर्मृष्टत्वमविमृष्टम्। अत्र (B)अविमृष्टविधेयकत्वं दोषः रावणविषादरूपव्यभिचारिभावहतिकृत्।

कर्मधारयसमासेऽप्युदाहरति—**यथा वा, स्रस्तामिति**। (C)कुलकप्रविष्टा पार्वती

---

विभिन्नोऽपि प्रायेण परिगृहीतपाठसमानार्थक एवेति बाहुल्यभयेन समपहायैव स्फुटतया घ-पुस्तकस्य पाठान्तरमुद्रियते। तच्च—'अत्र मिथ्यामहिम्नः पूर्वं जातत्वस्य बहुव्रीहावुपात्तत्वात् जातत्वं विधेयम्, मिथ्यामहिमा चानुवाद्यः प्रतीयते, तच्चेह न विवक्षितम्, महिम्नो जातत्वस्य सिद्धत्वेन जाते महिम्नि मिथ्यात्वस्य विधेयत्वेन च मिथ्यामहिम्नि जातत्वविध्यसम्भवादित्याह—मिथ्यामहिमत्वमिति' इति।

(A) अत्र मिथ्याजातमहिम्नामिति दोषसमाधानप्रकारमात्राभिप्रायकम्, न तु श्लोकेऽपि तत्समाधानं सम्भवति छन्दोभङ्गापत्तेरिति ध्येयम्।

(B) अविमृष्टविधेयकत्वं विधेयाविमर्शः अविमृष्टविधेयांशभावः इत्येते एकस्यैव दोषस्य नामभेदा वेदितव्याः।

(C) 'कुलकं' परस्परान्वयापेक्षिचतुरधिकश्लोकसमूहः।

---

1. 'अवलम्बमाना, अवरोधयन्ती' इति पाठान्तरे। 2. 'प्राङ्निर्दिष्टस्य जातत्वस्य विधेयत्वे सत्येव मिथ्यामहिमा अनुवाद्यः स्यात्, तदेव नेत्यर्थः। अनुवाद्यत्वाभावे किं तदित्याह—किन्त्विति। 'विधेयं' विधेयैकदेशमित्यर्थः, मिथ्यामहिमैकदेशस्य मिथ्यात्वस्यैव जाते महिम्नि विधेयत्वाद् विशिष्टस्य मिथ्यामहिमत्वस्य विधेयत्वस्याप्यभावात्' क।

यथा वा—

वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद्बालमृगाक्षि! मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने ॥१६१॥

(A)अत्र 'अलक्षिता जनिः' इति वाच्यम् ।

---

अत्र (B)विशेष्या । पुनः पुनः अवरोपयन्ती नितम्ब एव स्थापयन्ती । स्थानविदेति जगद्वशीकर्त्र्या मौर्व्या जगद्वशीकर्त्री (C)पार्वत्येव निःक्षेपस्थानमिति जानतेत्यर्थः ।अत्रेति, द्वितीयत्वस्य विधेयस्य कर्मधारये गुणीभावादिति भावः । न च द्वितीयमौर्व्युत्प्रेक्षैव किं न स्यादिति वाच्यं स्वयं व्यापारणीयाया मौर्व्या निःक्षेपानौचित्येन द्वितीयमौर्व्या एव निःक्षेपौचित्येन विवक्षितविवेकेन द्वितीयत्वस्यैव विशिष्टोत्प्रेक्षायामपि विधेयत्वात् । न च काञ्चीं द्वितीयमौर्वीं न्यासीकृतामिवेति काञ्च्यां रूपिताया द्वितीयमौर्व्या न्यासीकृतत्वोत्प्रेक्षैव किं न स्यादिति वाच्यं मौर्वीरूपणे द्वितीयत्वेन विशेषानाधानात् तद्वैयर्थ्यापत्तेः । अत एव न काञ्च्यां द्वितीयमौर्व्युपमाऽपि द्वितीयत्वेन विशेषाधानात् ( विशेषानाधानात् ? ) । अत्र पार्वतीविषयभावप्रकर्षबोधहतिः ।

'समास गतमेवे'त्यस्य युक्तार्थमात्रगतमेवेत्यर्थकत्वात् तद्धिते युक्तार्थेऽप्युदाहरति—**यथा वा वपुरिति** । तपस्यन्तीं पार्वतीं जटिलविप्ररूपेण महेशनिन्दया छलयतो महेशस्योक्तिरियम् । हे बालमृगाक्षि सौन्दर्यधनकुलात्मकं समस्तं यद् वरेषु मृग्यते तद् व्यस्तम् एकैकमपि किं त्रिलोचने अस्ति ? अपि तु न इत्यर्थः । अत्र त्रिलोचनत्वेनैव वैरूप्यं दर्शयति—वपुरिति । अक्ष्णोर्वैरूप्येण वपुषो वैरूप्यम् । कुलाभावमाह—अलक्ष्येति, जन्मस्थानपरिचय एव कुलनिश्चयः स एव नास्तीत्यर्थः । धनवत्ता

---

(A) अत्र अलक्षिता जनिरिति पाठेऽपि लक्षितत्वाभावरूपस्य विधेयस्य आनन्दसिन्धुरिति वक्ष्यमाणश्लोक इव नञ्स्ततत्पुरुषेण गुणीभावाद् अविमर्षस्तदवस्थ एवेति वपुर्विरूपाक्षमलक्षितो जनिः' इति पाठेन तत्समाधानं बोध्यम् । अत्र प्रदीपकारैरुक्तम् 'अलक्षिता जनि'रिति पाठे तु पौर्वापर्यविपर्ययसत्त्वेऽपि समासनिबन्धनमप्राधान्यं निवर्त्तते' इति । व्याख्यातश्चोद्द्योतकारैः—'निवर्त्तते इति, तथा च पददोषोद्धारेऽपि वाक्यविधेयाविमर्षस्तदवस्थ एवेति भावः । केचित्तु शिवे जन्मनोऽभावाद्विशिष्टविधिरेव विवक्षित इत्याहुः' इति ।

(B) विशेष्या विशेषणीयेत्यर्थः । विशेष्यमिति पाठस्तु सुगमः ।

(C) अत्र पार्वत्या नितम्ब एव मौर्व्या योग्यं स्थानमिति जानतेत्यर्थः, तथाच एतन्नितम्बसाचिव्येनैव मौर्वी मे जगज्जयाय प्रभवेदिति तत्र मौर्वीन्यासे अभिप्राय उपादेय इति बोध्यम् ।

यथा वा—

(A)आनन्दसिन्धुरतिचापलशालिचित्त-
सन्दाननैकसदनं क्षणमप्यमुक्ता।
या सर्वदैव भवता तदुदन्तचिन्ता
तान्तिं तनोति तव सम्प्रति धिग् धिगस्मान्॥ १६२॥

अत्र न मुक्ता इति निषेधो विधेयः।

---

दिगम्बरत्वेनैव निश्चेयेत्याह—दिगम्बरत्वेनेति। अत्रेति, [1]जन्मनो ह्यलक्ष्यत्वमत्र विधेयम्, तच्चात्र विधेयतया न प्रतीयते उत्तरपदतद्धितार्थस्यैव अत्र विधेयतया प्रतीतेः। न च अलक्ष्यं जन्म यस्येति बहुव्रीहौ पूर्वपदार्थोऽलक्ष्यत्वं विधेयतयैव भासत इति वाच्यं तद्धितार्थप्राधान्येन अलक्ष्यत्वस्यैव गुणीभूतत्वात्, अतः (B)स्वातन्त्र्येणैव वाक्यं रचयति[1]* अलक्षितेति। अत्र महेशविषयासूया-रूपभावप्रकर्षबोधहतिः।

नञ्समासेऽप्युदाहरति—यथा वा आनन्देति। सीतावार्त्ताऽप्राप्ति-दुःखितं रामं प्रति लक्ष्मणस्योक्तिरियम्। या सीता भवता क्षणमपि अमुक्ता तदुदन्तचिन्ता सम्प्रति तव तान्तिं क्लमं तनोति, अतः प्रतिकारासमर्थान् अस्मान् धिक् धिगित्यर्थः। उदन्तः वार्त्ता। या कीदृशी? आनन्दस्य सिन्धुः तदुत्पादकत्वात्, अतिचापलशालिनः तव चित्तस्य सन्दाननस्य संयमनस्य एकसदनं मुख्यकारागृहम्। अत्रेति, 'विधेयः' असमासेन विधातुं योग्यः, समासे विधेयत्वप्रतीत्यभावादिति भावः। अत्र वक्तृविषादस्य प्रकर्षप्रतीतिहतिः।

---

(A) आनन्देति। विरक्तं नायकं प्रति नायिकासखीनामुक्तिरियमित्युद्द्योतकारादयः।

(B) अत्र 'असमासेनैव' इति क-पुस्तकपाठः प्रामादिकः अलक्षितेत्यत्रापि समाससत्त्वात्। तस्याप्रमादिकत्वे तु जन्मपदघटितसमासशून्यत्वेनेत्याद्यर्थकल्पनया कथञ्चित् समाधानं करणीय-मिति ध्येयम्।

---

1. 'अलक्ष्यजन्मा स इति यदि क्रियेत तदा बहुव्रीहौ प्राङ्निर्दिष्टमलक्ष्यत्वं विधेयतयैव प्रतीयते, तत्पुरुषयोग्यतद्धितवाक्येन तु उत्तरपदस्यैव विधेयत्वनियमेन अलक्ष्यजन्मैव तद्धितार्थे गुणीभूत इत्यलक्ष्यत्व-मविमृष्टमेव; अतोऽलक्ष्यतायाः स्वातन्त्र्येण पाठं रचयति' ख।

यथा—

नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न [1]तस्य शरासनम्।
अयमपि पटुर्धारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत् प्रिया [2]न ममोर्वशी ॥ १६३ ॥

इत्यत्र, न त्वमुक्ततानुवादेनान्यदत्र किञ्चिद् विहितम्। यथा—

जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः।
अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत् ॥ १६४ ॥

इत्यत्र अत्रस्तत्वाद्यनुवादेनात्मनो गोपनादि।

( १६ ) विरुद्धमतिकृद् यथा—

सुधाकरकराकारविशारदविचेष्टितः।
अकार्यमित्रमेकोऽसौ तस्य किं वर्णयामहे ॥ १६५ ॥

अत्र 'कार्यं विना मित्रम्' इति विवक्षितम्, 'अकार्ये मित्रम्' इति तु प्रतीतिः।

---

असमास एव विधेयताप्रत्यायकं समभिव्याहारं दर्शयति—यथा नवजलधर इति। वर्षति सेन्द्रधनुषि विद्युत्वति च मेघे हृतोर्वशीकरात्तसम्भ्रमापगमे पुरूरवस उक्तिरियम्। स्पष्टार्थकमिदम्। धारासारः धारापतदम्बुकणाः। अत्र असमासे नञर्थस्य विधेयताप्रतीतिः। नन्वत्र नञर्थो न विधेयः, किन्त्वमुक्तेति नञर्थः स्वप्रतियोगिविशिष्टोऽनुवाद्य एवेत्यत आह—न चात्रेति। स्वप्रतियोगिविशिष्टस्य नञर्थस्य अनुवाद्यत्वे विधेयान्तरं क्व दृष्टमित्यत्राह—यथा जुगोपेति। अगृध्नुः अलोलुपः। असक्तः अनासक्तः। अत्रस्तत्वाद्यनुवादेनेति अत्रस्तत्वादिना प्रकारेण अत्रस्ताद्यनुवादेनेत्यर्थः।

(१६) विरुद्धेति। अन्यान्वयवशात् प्रकृतविरुद्धार्थव्यञ्जकत्वं तत्त्वम्। सुधाकरेति चन्द्ररश्मितुल्यनिर्मलचेष्टः असौ एकः कार्यनिरपेक्षमित्रमित्यर्थः। अत्रेति, कार्यपदार्थेन नञर्थान्वयात्। अत्र तादृशपुरुषविषयभावप्रकर्षबोधहतिः।

---

1. 'नाम' इति पाठान्तरम्। 2. 'मम नोर्वशी' इति क्वचित् पाठः।

यथा वा—

चिरकालपरिप्राप्तलोचनानन्ददायिनः ।

कान्ता कान्तस्य सहसा विदधाति गलग्रहम्(A) ॥ १६६ ॥

अत्र कण्ठग्रहमिति वाच्यम् ।

यथा वा—

न त्रस्तं यदिनाम भूतकरुणासन्तानशान्तात्मन-

स्तेन व्यारुजता धनुर्भगवतो देवाद्भवानीपतेः ।

(B)तत्पुत्रस्तु मदान्धतारकवधाद्विश्वस्य दत्तोत्सवः

स्कन्दः स्कन्द इव प्रियोऽहमथवा शिष्यः कथं [1]विस्मृतः ॥१६७॥

---

प्रपञ्चयति—यथा वा चिरकालेति । चिरप्रवासागतप्राप्त्या दृक्तृप्तिजनकस्येत्यर्थः । अत्रेति, गलपदार्थस्य ग्रहपदार्थे अन्वयाद् रोगविशेषव्यञ्जनात् । अत्र कान्तनिष्ठ-शृङ्गारप्रकर्षबोधहतिः । न त्रस्तमिति । परशुरामस्य रामतर्जनमिदम् । धनु-र्व्यारुजता धनुर्भञ्जता तेन रामेण देवाद् भवानीपतेः न त्रस्तम् एतद् यदि नाम एतत् सम्भाव्यत इत्यर्थः । यदिनामशब्दः अखण्डः सम्भावनायाम् । अत्र हेतुगर्भ-विशेषणमाह—भूतेति । प्राणिषु करुणासन्तानेन शान्तस्वभावादित्यर्थः । तत्पुत्रस्तु स्कन्दः कथं विस्मृतः, स हि मदान्धस्य तारकासुरस्य बधाद् विश्वस्य दत्तोत्सवः, तथा अहं तस्य प्रियः शिष्यः स्कन्द इव अर्थात् मदान्धघाती कथं विस्मृत

---

(A) गलग्रहमिति । अर्द्धचन्द्रापरपर्यायं गलहस्तमित्यर्थः । अत्र कण्ठालिङ्गनार्द्धचन्द्रदान-रूपावर्थौ समस्तस्य गलग्रहपदस्य व्युत्पत्त्या लभ्येते । रोगविशेषे तु गलगण्डशब्द एव रूढो न तु गलग्रहशब्दोऽपि । गलवेदनारूपोऽर्थोऽपि व्युत्पत्तिलभ्य एव । धर्मशास्त्रप्रसिद्धतिथिविशेषरूपार्थ इव रोगविशेषे तत्पदस्य रूढिस्वीकारेऽपि तत्र सामाजिकानां स्वारसिकप्रतीतिविरहेण अप्रतीतत्व-दोषविषयत्वमेवेति झटिति विरुद्धार्थव्यञ्जकता दूरापेता । एवञ्चात्र प्राचां रूढियोगयोः प्राबल्य-दौर्बल्यकृता बाध्यबाधकचिन्ता घुणितिचित्रायमाणेति विभावनीयम् ।

(B) तत्पुत्र इति । मदान्धतारकेत्यादिना स्कन्दस्य सामर्थ्यातिशयः सूचितः । तस्यापि भूतकरुणापरवशाच्छुतोषाङ्गसम्भवतया करुणासम्भवादाह—अथवेति । अत्र शिष्यस्यात्मनः स्कन्दतुल्यप्रियत्वोत्कीर्तनम् अस्त्रविद्यानैपुण्यं प्रकाशयति, विद्याग्रहणकुशलेषु हि शिष्येषु गुरवस्तुष्यन्तीति न्यायादिति बोध्यम् ।

---

1. 'न स्मृतः' इति पाठान्तरम् ।

अत्र (A)भवानीपतिशब्दो भवान्याः पत्यन्तरे प्रतीतिं करोति ।

यथा वा—

गोरपि यद्वाहनतां प्राप्तवतः सोऽपि गिरिसुतासिंहः ।

सविधे निरहङ्कारः पायाद् वः सोऽम्बिकारमणः ॥ १६८ ॥

अत्राम्बिकारमण इति विरुद्धां धियमुत्पादयति ।

श्रुतिकटु समासगतं यथा—

[1]सा च दूरे सुधासान्द्रतरङ्गितविलोचना ।

बर्हिनिर्ह्रादनार्होऽयं कालश्च समुपागतः ॥ १६९ ॥

एवमन्यदपि ज्ञेयम् ।

---

इत्यर्थः, मदान्धस्य रामस्यावाभ्यां हननसम्भवादिति भावः । अत्रेति, पतिशब्दार्थे भवानीशब्दार्थान्वयादिति भावः । (B)प्रकृतिप्रत्यययोगार्थशब्दाद् भवानीशब्दस्यैव भवपत्न्यर्थकत्वेन तद्बोधे भवस्यापि तत्पतित्वविषयीभावात् पुनः पतिशब्देन पत्यन्तरबोधनात्, चैत्रस्य भार्यायाः पतिरित्यत्रेव । अत्र पूर्वार्द्धप्राप्तभवविषयभार्गवभावस्य प्रकर्षबोधहतिः । गोरपीति । यस्य वाहनतां प्राप्तवतो गोरपि सविधे निकटे सः प्रसिद्धः गिरिसुतासिंहोऽपि निरहङ्कारः, सः अम्बिकारमणः वः पायादित्यर्थः । अत्रेति, अम्बिकाशब्दस्यार्थस्य रमणशब्दार्थेऽन्वयात् मातृरमणकारित्वरूपां विरुद्धां धियमित्यर्थः ; अम्बिकाशब्दस्यानेकार्थत्वेन द्वितीयार्थस्य मातुर्व्यङ्ग्यत्वात् । अत्र महेशविषयवक्तृभावप्रकर्षबोधहतिः । एवं रीत्या वक्ष्यमाणदोषाणां रसादिहतिकारित्वं बोध्यम् ।

श्रुतिकट्विति, यद्यपि समासपदस्य युक्तार्थमात्रपरतया कार्त्स्र्थ्यमित्येवोदाहरणं सम्भवति, अन्यथा अलक्ष्यजन्मतेति तद्धिते समासगतत्वाभावापत्तेः, तथाऽपि नामसमासगतं यथेत्यर्थः । सा च दूर इति । प्रावृट्कालोपस्थितौ विरहिणो

---

(A) अत्र भवानीपतिशब्द इति । भवशब्दस्य शिवरूपमर्थमवगत्यैव पत्न्यर्थे ङीप्प्रत्ययानुसन्धानेन भवानीशब्दस्य पार्वतीरूपोऽर्थः प्रतीयते, तथाच यदि शिव एव वाच्यस्तदा भवशब्दप्रयोग एव युक्तः तत्परीहारेण भवानीपतिशब्दप्रयोगाद् भवत्येव भवपत्न्याः पत्यन्तरप्रतीतिरिति भावः ।

(B) प्रकृतिप्रत्यययोर्योगेनार्थः अर्थबोधो यस्य तादृशात् शब्दादित्यर्थः । इतः प्रभृति

---

1. 'सा दूरे च' इति पाठान्तरम् ।

(७४) अपास्य च्युतसंस्कारमसमर्थं निरर्थकम्।
वाक्येऽपि दोषाः सन्त्येते पदस्यांशेऽपि केचन ॥ ५२ ॥

केचन न पुनः सर्वे। क्रमेणोदाहरणम्—

---

रामस्योक्तिरियम्। सुधासान्द्रं सुधाव्याप्तं तरङ्गितं तरङ्गवच्चालितं च विलोचनं यस्याः तादृशी सा च सीता दूरे लङ्कायाम्, बर्हिणां मयूराणां निर्ह्रादने नदने अर्हः योग्यः अयं कालः वर्षाकालश्च समुपागत इत्यर्थः। अत्र बर्हिनिर्ह्रादनार्हेति समासगतं श्रुतिकटु।

अपास्येति। भावप्रधाननिर्देशात् च्युतसंस्कारत्वादिकमपास्येति बोध्यम्। पदस्य अंशः प्रत्ययादिः। ननु च्युतसंस्कारत्वादेः कथमपासः?

शोभन्मुखी गच्छते सा पुनातु हि हरश्च वः।
हततीर्थान्तरो हन्ति गङ्गां सम्प्रति धार्मिकः॥

इत्यादिवाक्येऽप्येतद्दोषत्रयसम्भवात्। अत्र चक्रवर्त्ती, व्याकरणसंस्कारादेः पदगतत्वात् च्युतसंस्कृतित्वादेरपि पदगतत्वमेव (A)वाक्यगतत्वेऽप्येषां पददोषत्वनियमादेषामपास इत्याह, तन्न; एवंरीत्या अप्रयुक्तत्वनिहतार्थत्वनेयार्थत्वावाचकत्वादीनामपि अपासापत्तेः; नाप्येषां पदद्वयघटितत्वाभावाद् वाक्यदोषतो बहिर्भावः, अप्रयुक्तत्वादेरपि (B)तथात्वात्। उच्यते—अन्वयबोधजनकपदसमूहस्यैव वाक्यत्वेन एतद्दोषत्रयवत्पदघटितपदसमूहस्य वाक्यत्वाभावेन एषामपासः। तथाहि—च्युतसंस्कृतिपदात् असाधुत्वज्ञाने सति, निरर्थकात् पदार्थानुपस्थितौ, असमर्थात् सहकारिविरहेण वृत्त्या पदार्थानुपस्थितौ च सत्यां तद्घटितपदसमूहत्वेन वाक्यार्थबोधाजननात् तस्य अवाक्यत्वम्, अवाचके नेयार्थे च तदर्थे वक्तुस्तात्पर्यात् तद्रूपतया

---

पतिरित्यत्रेव' इत्यन्तो भागो यद्यपि आदर्शपुस्तकेषु प्रायेण एवंरूप एव दृश्यते, तथापि अपेक्षितप्रथमान्तपदाभावेन पूर्ववर्त्तिभावपदस्यैवाभिप्रायप्रकाशिका टिप्पनीयमिति प्रतिभाति।

(A) ननु दोषाणां पदगतत्वं न वाक्यगतत्वाभावसाधकमित्यत आह—वाक्यगतत्व इति। एकवाक्यघटकानेकपदगतत्वेऽपीति तदर्थः, तेषां वाक्यगतत्वस्यैवात्र निरसनीयत्वेन यथाश्रुतार्थस्तु व्याहत एव। तत्र हेतुमाह पददोषत्वनियमादिति। तथाच नियमबलेन तेषां पदमात्रदोषत्वं साधनीयमिति भावः।

(B) तथात्वादिति तथात्वापाताद् वाक्यदोषतो बहिर्भावापातादित्यर्थः। लिपिकृत्प्रमादेन विच्युतं वा अक्षरद्वयं मन्तव्यम्।

सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट पितॄनतार्प्सीत् सममंस्त बन्धून् ।
व्यजेष्ट षड्वर्गमरंस्त नीतौ समूलघातं न्यवधीदरींश्च ॥१७०॥

स रातु वो दुश्च्यवनो भावुकानां परम्पराम् ।
अनेडमूकताद्यैश्च द्यतु दोषैरसम्मतान् ॥ १७१ ॥

अत्र दुश्च्यवन इन्द्रः, अनेडमूको मूकबधिरः ।

---

लक्षणया बोधकत्वात् तादृशपदसमूहस्य वाक्यत्वमेव। [1]न चैवम् असमर्थेऽपि वक्तुस्तात्पर्यमस्तीति वाच्यम्, तत्र शक्तिमत्त्वेन तत्तात्पर्यस्य मुख्यार्थबाधाग्राह्यत्वात् लक्षणात्वाभावात्, अतस्तादृशपदसमूहस्य अवाक्यत्वमेव[1]* ।

(१) वाक्यगतं श्रुतिकटुत्वमाह—सोऽध्यैष्टेति। सः दशरथः अधीतवान् पूजितवान् तर्पितवान् सम्मानितवान् विजितवान् रतवान् समूलहननेन हतवानिति क्रियागणस्यार्थः, नमन्तधात्वर्थस्य अनुप्रयुज्यमानधात्वर्थे कारणताया दशमोल्लासे वैरपोषं पुष्णातीत्यत्र व्यक्तीकृतत्वमवधेयम्। [2]विशेषहननेन सामान्यहननसिद्धेस्तस्य तत्र कारणता[2]* । षड्वर्गं काम-क्रोध-लोभ-मोह-मद-मात्सर्यात्मकमरिषड्वर्गम्, षडिन्द्रियाणि च। अत्र व्यजेष्ट षड्वर्गमित्यत्रैव वाक्यगतं श्रुतिकटुत्वम्, अन्यत्र विभिन्नवाक्यीयपदैकदेशगतमेव एकैकं श्रुतिकटुत्वमिति बोध्यम्।

(३) च्युतसंस्कृत्यपासेन क्रमप्राप्तमप्रयुक्तत्वमाह--स रातु व इति। सः प्रसिद्धः दुश्च्यवनः इन्द्रः वः युष्मभ्यं भावुकानां मङ्गलानां परम्परां श्रेणीं रातु ददातु, तथा वः युष्माकम् असम्मतान् शत्रून् अनेडमूकताद्यैः दोषैः करणभूतैः द्यतु नाशयतु। अत्र रातु-दुश्च्यवन-भावुकशब्दाः(A) पूर्वार्द्धवाक्ये, परार्द्धवाक्ये तु अनेडमूकता-द्यतु-शब्दौ अप्रयुक्तौ। पदद्वयार्थं व्याचष्टे—अत्रेति। (B)एडमूकानेडमूकशब्दौ द्वावपि मूक-

---

(A) शब्दपदमत्र आनुपूर्व्यवच्छिन्नवर्णमात्रपरम्, न तु प्रातिपदिकपरम्; तेन 'रातु' 'द्यतु' इत्यनयोः क्रियापदयोरपि शब्दत्वोपपत्तिः।

(B) तथाच विश्वः—'एडमूकः स्मृतो धीरैः शठे वाक्श्रुतिवर्जिते' इति क-चतुष्के, तथा 'अनेडमूकमिच्छन्ति वाक्श्रुतिविवर्जिते' इति च क-पञ्चके।

---

1. 'च्युतसंस्कृत्यसमर्थयोस्तु शक्तिमत्त्वात्तदर्थे तात्पर्यस्य मुख्यार्थबाधग्राह्यत्वाभावेन तत्तात्पर्यस्य लक्षणात्वाभावात् तदर्थस्य वृत्त्या अनुपस्थितत्वा वाक्यार्थबोधाभावात्, किन्तु मानस एव तदर्थबोध इति रहस्यम्' ख। 2. चंशोऽयं ग-पुस्तके नास्ति।

सायकसहायबाहोर्मकरध्वजनियमितक्षमाऽधिपते ।
अब्जरुचिभास्वरस्ते भातितरामवनिप श्लोकः ॥ १९२ ॥

अत्र सायकादयः शब्दाः खड्गाब्धि-भू-चन्द्र-यशःपर्यायाः शराद्यर्थतया प्रसिद्धाः ।

कुविन्दस्त्वं तावत् पटयसि गुणग्राममभितो
यशो गायन्त्येते दिशि दिशि च नग्नास्तव विभो ।
शरज्ज्योत्स्नागौरस्फुटविकटसर्वाङ्गसुभगा
तथाऽपि त्वत्कीर्तिर्भ्रमति विगताच्छादनमिह ॥ १७३ ॥

अत्र कुविन्दादिशब्दोऽर्थान्तरं प्रतिपादयन् (A)उपश्लोक्यमानस्य तिरस्कारं व्यनक्तीत्यनुचितार्थः ।

---

बधिरवाचकौ । केचित्तु (B)एतत् पदद्वयमेव अप्रयुक्तत्वाद् ग्रन्थकृता व्याख्यातमित्याहुः, तन्न ; एतयोः पदयोर्विभिन्नवाक्यस्थत्वेन वाक्यदोषत्वानुपपत्तेः ।

(५) असमर्थत्वापासेन क्रमप्राप्तं निहतार्थत्वमाह—**सायके**ति । अत्र सायकः खड्गः, मकरध्वजः अब्धिः, नियमिता परिच्छिन्ना, क्षमा भूः, अब्जः चन्द्रः, श्लोकः यशः । एतदाह—**अत्रे**ति । पर्याया इत्यत्र प्रकृतेर्विवक्षिता इति शेषः । **शराद्यर्थतये**ति, शर-काम-क्षान्ति-पद्म-पद्यानां प्रसिद्धत्वान्नात्र विवृताः ।

(६) अनुचितार्थत्वमाह—**कुविन्द** इति । त्वं तावत् कुविन्दः लब्धपृथिवीकः । कुः पृथिवी, विद् लृ लाभे । अभितः सर्वाङ्गीणं गुणग्रामं शौर्यादिगुणसमूहं पटयसि पटुं करोषि । नामकारितान्तोऽत्र पटुशब्दः । हे विभो, तव यश एते नग्नाः स्तुतिपाठकाः दिशि दिशि गायन्ति, एवञ्च त्वम् एवं महान्, तथाऽपि त्वत्कीर्त्तिः स्त्रीलिङ्गशब्दार्थत्वात् स्त्रीत्वेनाध्यासिता इह जगति विगताच्छादनम् अनावरणं यथा स्यात् तथा भ्रमतीति राजस्तुतिः । वैरूप्यादुपेक्षितेत्यपि नेत्याह—**शर**दित्यादि । विकटं सुन्दरम् । **अर्थान्तर**मिति, त्वं कुविन्दः तन्तुवायः । गुणग्रामं तन्तुसमूहम् ।

---

(A) उपश्लोक्यमानस्य स्तूयमानस्येत्यर्थः ।

(B) एतदिति, दुश्च्यवनः अनेडमूक इति शब्दद्वयमित्यर्थः । अप्रयुक्तत्वादिति, एवकारेण पदान्तरस्य दोषप्रयोजकत्वव्यवच्छेदः, अप्रयुक्तत्वदोषप्रयोजकत्वादित्यर्थः ।

प्राबृभ्रभ्राड्विष्णुधामाप्य विषमाश्वः करोत्ययम् ।
निद्रां सहस्रपर्णानां पलायनपरायणाम् ॥ १७४ ॥

अत्र (A)प्राबृभ्रभ्राड्-विष्णुधाम-विषमाश्व-निद्रा-पर्णशब्दाः प्रकृष्ट-जलद-गगन-सप्ताश्व-सङ्कोच-दलानामवाचकाः ।

---

अभितः सव्यासव्यतुरीपरिचालनेन, पटयसि पटं करोषि । अत एव त्वत्तो लब्धवस्त्रा एते नग्ना दिगम्बरा दिशि दिशि यशो गायन्ति, तथाऽपि त्वत्कीर्तिः स्त्री वस्त्ररहितं भ्रमतीति अनुचितोऽर्थः । अत्र च कुविन्द-पटयसिशब्दयोरेव अन्यान्वयं विनाऽपि तन्तुवायपटकर्तृव्यञ्जकतया वाक्यगतोऽनुचितार्थः, अन्येषां तु अनुचितार्थव्यञ्जने परान्वयसापेक्षत्वाद् विरुद्धमतिकृत्त्वमेवेत्यवधेयम् ।

(८) निरर्थकत्वापासेन क्रमप्राप्तमवाचकत्वमाह—प्राबृभ्रेति । अयं विषमाश्वः सूर्यः विष्णुधाम आकाशम् आप्य प्राप्य सहस्रपर्णानां पद्मानां निद्रां सङ्कोचं पलायन-परायणां करोति । कीदृशः ? प्राबृभ्राट् प्रकृष्टजलदे भ्राजमानः । अत्रेति, नामपद-पूर्ववर्तिनः प्रशब्दस्य प्रमधुरः प्रखल इत्यत्रेव नामार्थतावच्छेदकनिष्ठप्रकर्षस्यैव बोधकत्वेन प्रकृते जलदत्वे प्रकर्षबाधात् प्रकृष्टजलदबोधकप्राबृभ्रशब्दस्य शक्तिभ्रमेणैव प्रयोगादवाचकता । एवं विष्णुधामपदमपि न आकाशवाचकं [1]विष्णुपदशब्दस्यैव तद्वाचकत्वात्, किन्तु धामार्थकपदशब्दस्य परिवृत्तिक्षमत्वभ्रमेण विष्णुधाम-पदमाकाशे शक्तिभ्रमेण प्रयुक्तत्वादवाचकम्'* । एवं सप्तत्वेन रूपेणावाचकस्य अयुग्मत्वेनैव रूपेण वाचकस्य [2]विषमशब्दस्य सप्तत्वेन रूपेण (B)शक्तिभ्रमात् तत्समभिव्याहृताश्वशब्दस्य सप्ताश्वत्वेन रूपेण शक्तिभ्रमात् विषमाश्वपदमपि अवाचकं* सूर्यस्य । निद्रापदन्तु सङ्कोचत्वेन रूपेण यद्यप्यवाचकम्, तथाऽपि न अवाचकत्वदोषकल्पना शक्तिभ्रमं विनैव निष्पन्दत्वरूपप्रयोजनवत्त्या लक्षणया प्रयुक्तत्वात् । अत एव न नेयार्थताऽपि । प्रकृते तु वाचकत्वाभावादेव अवाचका

---

(A) अभ्रे आकाशे भ्राजते इति अभ्रभ्राट् मेघः, प्रकृष्टोऽभ्रभ्राट् यत्रेति विष्णुधाम-विशेषणमिदमित्यन्ये ।

(B) शक्तिभ्रमादिति । एतेन एकदेशे शक्तिभ्रम उक्तः, तस्यैव समुदायशक्तिभ्रमप्रयोजकता-माह—तत्समभिव्याहृतेति ।

---

1. 'विष्णुपदोक्तपदशब्दस्य परिवृत्त्यक्षमत्वात्, किन्तु पदशब्दतुल्यपर्यायकधामपदसमभिव्याहृतविष्णुधाम-पदस्य चाकाशे शक्तिभ्रम एव' क । 2. 'विषमशब्दस्यार्थस्य अयुग्मतया सप्तत्वेन रूपेण शक्तिभ्रमात् तत्समभिव्याहृतविषमाश्वपदमप्यवाचकम्' क ।

भूपतेरुपसर्पन्ती कम्पना वामलोचना ।
तत्तत्प्रहरणोत्साहवती मोहनमादधौ ॥ १७८ ॥

अत्रोपसर्पण-प्रहरण-मोहनशब्दा व्रीडादायित्वादश्लीलाः ।

तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गञ्च भुञ्जते ।
इतरार्थग्रहे येषां कवीनां स्यात् प्रवर्तनम् ॥ १७६ ॥

अत्र वान्तोत्सर्गप्रवर्तनशब्दा जुगुप्सादायिनः ।

पितृवसतिमहं व्रजामि तां सह परिवारजनेन यत्र मे ।
भवति सपदि पावकान्वये हृदयमशेषितशोकशल्यकम् ॥ १७७ ॥

---

इत्युक्तम् । अत एव 'उन्निद्रकोकनदरेणुपिशङ्गिताङ्गाः' इति 'विनिद्ररोमे'ति 'प्रतिपन्ननिद्र'मिति 'नलिनी विनिद्रा' इत्यादयोऽदुष्टाः प्रयोगाः । एवं सहस्रपदोत्तरपत्रपदमपि परिवृत्यत्तमम्, अतः सहस्रपर्णपदं पद्मस्यावाचकम्, पत्रशब्दस्य परिवृत्तित्तमत्वभ्रमादेव प्रयुक्तम् । एषां तु रूढिप्रयोजनशून्यया वक्तुस्तात्पर्यात्मिकया लक्षणया स्ववाच्यप्रकृष्टजलदादिबोधकत्वमस्त्येवेत्यतस्तद्घटित-पदसमूहस्यान्वय-बोधजनकत्वेन वाक्यत्वात् वाक्यदोषत्वमिति प्रागेव दर्शितम् ।

(६) व्रीडाश्लीलमाह—भूपतेरिति । भूपतेः कम्पना सेना उपसर्पन्ती आगच्छन्ती वामे शत्रौ लोचनं यस्यास्तादृशी तत्तत्प्रहरणेन अस्त्रेण उत्साहवती च मोहनं द्रष्टणां सम्मोहम् आदधौ जनयामास । अत्रेति । व्रीडादायित्वश्चात्र परस्परसाहित्यात् कामभावेन उपसर्पन्त्याः प्रकृष्टलोचनायाः सुरते प्रहारोत्साहवत्याः कामसम्मोहदायिकायाश्च नायिकाया व्यञ्जनात् । 'व्रीडादायित्वात्' व्रीडाजनकत्वात् ।

जुगुप्साश्लीलमाह—तेऽन्यैरिति । परोत्सर्गं परपुरीषम् । इतरार्थः इतरकविनिबद्धोऽर्थः । प्रवर्तनं प्रवृत्तिः । अत्रेति, वान्तोत्सर्गशब्दौ वाच्यार्थेन, प्रवर्त्तनशब्दस्तु पुरीषत्यागरूपव्यङ्ग्यार्थेन जुगुप्सादायीत्यवधेयम् ।

अमङ्गलाश्लीलमाह—पितृवसतिमिति । प्राप्तगाढशोकायाः कस्याश्चिदुक्तिरियम् । अहं परिवारजनेन सह तां पितुर्वसतिं गृहं व्रजामि स्वस्पर्शेन पावकानां परपावित्र्यकारकाणां मत्पित्रादीनाम् अन्वये सम्बन्धे सति यत्र मे हृदयं निःशेषितशोकशल्यकं भवति । पावकान्वये इति तु बहुव्रीहिणा यत्रेत्यस्य विशेषणं न युक्तं

अत्र पितृगृहमित्यादौ विवक्षिते श्मशानादिप्रतीतावमङ्गलार्थत्वम्।

सुरालयोल्लासपरः प्राप्तपर्याप्तकम्पनः।

मार्गणप्रवणो भास्वद्भूतिरेष विलोक्यताम् ॥ १७८ ॥

अत्र किं सुरादिशब्दा देवसेना-शर-विभूत्यर्थाः किं मदिराद्यर्था इति सन्देहः।

तस्याधिमात्रोपायस्य तीव्र[1]संवेगिताजुषः।

दृढभूमिः प्रियप्राप्तौ यत्नः स फलितः सखे(A) ॥ १७९ ॥

---

स्त्रीलिङ्गत्वापत्तेः। **श्मशानादिप्रतीता**विति, पितृवसतिपदार्थान्तरस्य श्मशानस्य पावकपदार्थान्तरस्य अग्नेश्च व्यञ्जनाद् नायिकामृत्युप्रतीतिः।

(१०) सन्दिग्धमाह—**सुरे**ति। विशेषणसन्देहात् राजा प्रमत्तो वेति सन्दिह्यमानः एष जनो विलोक्यताम्। तत्सन्देहश्च यथा—सुरस्य सुराया वा आलये उल्लासी,

---

(A) तस्येति। "कस्यचित् सखायं प्रति मित्रवृत्तान्तोक्तिरियम्। हे सखे, तस्य अस्मन्मित्रस्य स नायिकाविशेषसङ्गमविषयको यत्नः प्रियस्य तन्नायिकासङ्गमस्य प्राप्तौ सत्यां फलितः। किम्भूतस्य? अधिका मात्रा प्रमाणं यस्य तथाविध उपायो दूतीसम्प्रेषणादिर्यस्य तथाभूतस्य, तथा तीव्रः संवेगः त्वरा यस्य स तथा, तत्ताजुषः। कीदृशो यत्नः? दृढभूमिः दृढा स्थिरा प्रतिबन्धकानपनेया भूमिर्विषयः सङ्गमरूपो यस्य सः, इति प्रकृतोऽर्थः। इतरस्तु—हे सखे तस्य पुरुषस्य स चित्तैकाग्रतास्थितिविषयको यत्नः प्रियस्यात्मसाक्षात्कारस्य प्राप्तौ सत्यां फलितः मोक्षरूपफलभाग् जातः। फलप्राप्तौ हेतुगर्भं विशेषणद्वयमाह—अधिमात्रेति। अधिमात्रः प्राग्भवीयसंस्काराद्दृष्टवशादुत्कट उपायः श्रद्धादिर्यस्य सः, तथा तीव्रः परमः संवेगः वैराग्यं यस्य स तथा तत्ताजुषः। तदुक्तं पातञ्जलभाष्यव्याख्यायां श्रीमद्वाचस्पतिमिश्रैः—'उपायाः श्रद्धादयो मृदुमध्याधिमात्राः प्राग्भवीयसंस्काराद्दृष्टवशाद् येषां ते तथोक्ताः, संवेगो वैराग्यम्, तस्यापि मृदुमध्यतीव्रता प्राग्भवीयवासनाऽदृष्टवशादेव' इति। श्रद्धादयश्च 'श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषा'मिति सूत्रोक्ता वेदितव्याः। एवञ्च मृदुमध्याधिमात्रोपायानां त्रयाणां प्रत्येकं मृदुमध्यतीव्रसंवेगैस्त्रिभिर्भेदैर्नव योगिभेदा भवन्तीति। एवञ्च 'तीव्रसंवेगानामासन्नः' इति सूत्रात् फलप्राप्तिर्युक्तेति भावः। कीदृग् यत्नः? दृढभूमिः दीर्घकालादरनैरन्तर्यसत्कारवत्तया ('स तु दीर्घकालादरनैरन्तर्यसत्कारसेवितो दृढभूमिः' इति सूत्रम्) दृढा व्युत्थानसंस्कारैरनभिभूता भूमिर्विषयश्चित्तस्थितिरूपो यस्य सः। व्युत्थानञ्च चित्तस्य समाधिशून्यतयाऽवस्थानमिति। अत्र च 'भद्रात्मनः' इत्यादिवत् प्रकृतनायकस्य योगिनिरूपितोपमा व्यज्यते। अत्राधिमात्रादि-

---

1. '-संवेगता-' इति पाठान्तरम्।

अत्राधिमात्रोपायादयः शब्दा योगशास्त्रमात्रप्रयुक्तत्वादप्रतीताः ।

ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः ।
करोति खादनं पानं सदैव तु यथा तथा ॥ १८० ॥

अत्र(A) गल्लभल्लादयः[1] शब्दा ग्राम्याः ।

वस्त्रवैदूर्यचरणैः क्षतसत्त्वरजःपरा ।
निष्कम्पा रचिता नेत्रयुद्धं वेदय साम्प्रतम्(B) ॥ १८१ ॥

---

(C)प्राप्ता पर्याप्ता सम्पन्ना कम्पना सेना कम्पनं वा येन तादृशः । मार्गणे बाणे पर्यटने वा प्रवणः प्रवृत्तः । भास्वती भूतिः ऐश्वर्यं भस्म वा यस्य इति ।

अप्रतीत(त्व ?)माह—तस्याधीति । हे सखे, प्रियस्य तत्त्वज्ञानस्य प्राप्तौ तस्य पुंसः पूर्वदृष्टः यत्नः फलितः । कीदृशः ? दृढभूमिः दृढसंस्कारदायी, तीव्रसंवेगिता समाधिविशेषः । अधिमात्रनामा क्रियाविशेषः तदुपायः ।

ग्राम्य(त्व?)माह ताम्बूलेति । गल्लः कपोलः । भल्लं भद्रम् । गल्लभल्लादय इति, आदिशब्दात् परस्परसमभिव्याहृतौ खादनपानशब्दौ बोध्यौ ।

नेयार्थत्वमाह—वस्त्रवैदूर्येति । वृत्तावेवास्य व्याख्या । तत्र च अम्बरम्

---

शब्दा योगशास्त्रमात्रप्रसिद्धाः, ततश्चाप्रतीतत्वं दोष" इत्युदाहरणचन्द्रिकाकाराः । तत्रैवं चिन्ताकोटयः,—श्लोकस्यास्य एवम्प्रकारेणार्थद्वयकल्पनायां श्लेषस्थलेऽनुक्तमप्यप्रतीतत्वस्यादोषत्वं युक्तं न वेति, द्वितीयार्थस्य व्यङ्ग्यत्वाभ्युपगमे तु अत्राप्रतीत्वदोषो न भवत्येवेति, एवं प्रतिपाद्यस्य सख्युस्तच्छास्त्रानभिज्ञत्वमवश्यमङ्गीकार्यम्, अन्यथा वक्ष्यमाणरीत्या तस्य गुणत्वापातेन दोषोदाहरणत्वानुपपत्तेरिति ।

(A) "अत्र गल्ल-भल्ल-मानुष-खादन-पानशब्दाः ग्राम्याः" इति प्रदीपः ।

(B) प्रदीपकारास्तु "अत्र वस्त्रवैदूर्यपदेनाम्बरमणेर्विवक्षितत्वाद् वस्त्रशब्देन गगनं विवक्षितम्; न चास्य तत्र शक्तिरिति वाचकत्वलक्षणेन शक्यसम्बन्धेनाम्बरपदं लक्षयति, तस्माच्च गगनप्रतीतिः । यद्वा स्ववाचकवाच्यत्वलक्षणशक्यसम्बन्धेन गगनमेव लक्षयतीति लक्षितलक्षणा लक्षणा वेति वस्तुगतिः" इत्युक्त्या अत्र नेयार्थतादोषलक्षणसङ्गमने प्रकारान्तरमपि वदन्तीति बोध्यम् ।

(C) अत्र 'प्राप्ता पर्याप्ता कम्पना यस्येति' समासार्थकथनमात्रम्, समासस्तु कर्मधारयगर्भबहुव्रीहिरेव, अन्यथा प्राप्तपदस्य समासोत्तरपदपरत्वाभावेन पुंवद्भावो न स्यादिति विभावनीयम् ।

---

1. 'गल्लादयः' इति मुद्रितपुस्तकपाठः ।

**अत्राम्बररत्नपादैः क्षततमा अचला भूः कृता, नेत्रद्वन्द्वं बोधयेति नेयार्थता ।**

---

आकाशम्, रत्नं मणिः, पादः रश्मिः, तमः अन्धकारः। एवञ्च सूर्यरश्मिभिर्नाशितान्धकारा पृथ्वी कृता, चक्षुर्द्वयमुन्मीलयेत्यर्थः । **नेयार्थतेति**, वस्त्रपदेन स्वतुल्यपर्यायकाम्बरपदस्य, वैदूर्यपदेन स्वतुल्यपर्यायकस्य रत्नपदस्य, चरणपदेन स्वतुल्यपर्यायकस्य पादपदस्य, सत्त्वरजःपरपदेन योगार्थवशात् स्ववाच्यतमोगुणवाचकतमःपदस्य,(A) अचलापदपरिवृत्त्यसहत्वमनिष्कम्पापदेन भुवश्च लक्षितत्वात् प्रयोजनशून्येयं लक्षणा नेयार्था। नन्वत्र वस्त्रादिपदानामाकाशादिलक्षणैव कुतो न व्याख्यायते, न ह्यम्बरादिपदलक्षणा ग्रन्थकृता व्याख्याता इति चेन्न तत्तत्पदबोधानुभवेन तत्तत्पदलक्षणाया एव ग्रन्थकृत्सम्मतत्वात्। व्याख्यास्यते हि पदैकदेशलक्षणोदाहरणे—किमुच्यतेऽस्य भूपालेत्यादौ वचोवाणपदैकदेशवचःशब्देन 'गीःशब्दो लक्ष्यते' इति। न चैवम् अम्बरादिपदानामेव लक्षणीयत्वे तस्यैवान्वयप्रतियोगित्वमुचितम्, अतः कथं गगनादिप्रतीतिरिति वाच्यं [1]लक्षितलक्षणायामस्यां लक्षितशब्देनैवान्वयप्रतियोग्यर्थोपस्थापनात् द्विरेफशब्दलक्षितभ्रमरशब्देन भृङ्गोपस्थितिवत्; न त्वत्र लक्षितशब्दस्यान्वयप्रतियोगित्वं व्युत्पत्तिवैचित्र्यात्। (B)स्वार्थोपस्थापकशब्दलक्षणाया एव च लक्षितलक्षणापरिभाषा, लक्षणां विनैव लक्षितशब्देन स्वार्थोपस्थापनाद् योगार्थो(योगार्थ?)सम्भवात्[1]*। [2]अथैवं द्विरेफं पश्येत्यत्र कथं भृङ्गे विभक्त्युपस्थापितकर्मतान्वयबोधः प्रकृत्यर्थान्वित-

---

(A) नेत्रयुद्धमित्यत्र युद्धपदेऽपि एषैव गतिरिति बोध्यम्।

(B) उक्तमर्थं समर्थयते स्वार्थोपस्थापकेति।

---

1. 'इयं हि लक्षितलक्षणा, तत्र च लक्षितपदेनैव स्वार्थोपस्थापने तस्यैवान्वयप्रतियोगित्वं न लक्षितशब्दस्य प्रतीतिरनेन व्युत्पत्तिवैचित्र्यात् बहुव्रीहिलक्षणया द्विरेफशब्दलक्षितभ्रमरशब्देनोपस्थापितस्य तदर्थभृङ्गस्येव, परन्तु तत्र रूढिरस्तीति विशेषः। न चैवमर्थोपस्थापकशब्द एव यदि लक्षणा अर्थोपस्थितिस्तु लक्षितशब्दशक्त्यैवेति कथमेवं लक्षितलक्षणाद्वयाभावादिति वाच्यम्, अर्थोपस्थापकशब्दलक्षणाया एव तथा परिभाषितत्वात्' क-ख।

2. 'न च चरणैरित्यत्र तृतीया प्रकृतार्थे पदशब्द एवान्विता स्वार्थकरणता बोधयितुं योग्या प्रकृतार्थान्वितस्वार्थबोधकत्वात्, न प्रकृतार्थे रश्माविति वाच्यं शब्दतदर्थयोरभेदाध्यासेन पादशब्दस्येव तदभिन्नत्वेनाध्यासितस्य पादशब्दार्थरश्मेरपि प्रकृतार्थत्वस्वीकारेणात्र तत्रैव करणतान्वयात्, द्विरेफमानयेत्यत्र भ्रमरशब्दार्थे भृङ्ग इव कर्मतायाः। अत एव चन्द्रं पश्येति मुखे प्रयोगे चन्द्रपदोत्तरद्वितीयया मुखे कर्मतान्वयोऽभेदाध्यासात्।

स्वार्थबोधकत्वात् प्रत्ययानां भ्रमरशब्दस्यैव प्रकृत्यर्थत्वादिति चेन्न (A)प्रकृत्यर्थाभिन्नत्वेन अवगम्यमान एव स्वार्थान्वयबोधकत्वात् प्रत्ययानाम्, रेफद्वयवद्भ्रमरशब्दाभिन्नत्वेनावगमो ह्यत्र भृङ्गे सर्वलोकसिद्धः। अत एव मुखचन्द्रं पश्येत्यत्र प्रकृत्यर्थचन्द्राभिन्नत्वेनावगम्यमाने मुखेऽपि कर्मताबोधकत्वं द्वितीयायाः। अथ शब्दतदर्थयोरभेदारोपः क दृष्ट इति चेत् बहुष्वेव तद्दृष्टम्। यथा—निकारोऽग्रे पश्चाद्धनमहह भोस्तद्धि निधनमित्यत्र निधनशब्दात्मनो निपूर्वकधनशब्दस्य तद्धि निधनमित्यनेन मरणरूपे निधनेऽभेदारोपः। यथा वा—

रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः।
गर्वभङ्गो भार्गवस्य शौर्यभङ्गश्च वालिनः॥

इति रावणं प्रति मन्त्रिवाक्ये रामकृतकर्मणां तन्नामकृतत्वोक्तिः नामनामिनोरभेदारोपादेव। अत एव माघे हिरण्यकशिपुमिति वक्तव्ये 'हिरण्यपूर्वं कशिपुं प्रचक्षते' इति, मेघदूतेऽपि—देवगिरिं जिगमिषोः (इति वक्तव्ये) देवपूर्वं गिरिं ते इत्यत्र च शब्दलक्षणया हिरण्यकशिपुशब्दात्मनो हिरण्यपूर्वकशिपुशब्दस्य हिरण्यकशिपुनामासुरे देवगिरिशब्दात्मनो देवपूर्वगिरिशब्दस्य देवगिरिनामाद्रौ अभेदारोपात् तन्निष्ठकर्मतान्वयबोधः। एवमेव वस्त्रादिशब्दलक्षिताम्बरादिशब्दाभेदारोपो गगनादौ। नैयायिकास्तु द्विरेफशब्दस्य भ्रमरशब्दे एका लक्षणा, ततश्च स्वलक्षितभ्रमरशब्दवाच्यत्वसम्बन्धेन भृङ्गे अपरा लक्षणा, ततश्च प्रकृत्यर्थे तस्मिन् कर्मतान्वयबोध इत्याहुः, तच्च न रुचिरम्; सकृदुच्चरितशब्दादावृत्तिं विना क्रमशोऽर्थद्वयबोधाननुभवात्(B), हिरण्यपूर्वमित्यत्र देवपूर्वमित्यत्र च लक्षणाद्वयेनाप्युपपत्त्यभावाच्च, (C)कशिपुशब्दस्य हिरण्य-

---

(A) सिद्धान्तानुरोधेन व्युत्पत्तिमन्यथा करोति प्रकृत्यर्थेति, प्रत्ययानां प्रकृत्यर्थाभिन्नत्वेन ज्ञायमाने वस्तुन्येव स्वार्थान्वयबोधकत्वमित्यभ्युपगमादित्यर्थः।

(B) अतः परं 'आवृत्तिश्चान्वयबोधद्वय एव, भ्रमरशब्दस्य त्वनन्वयान्नावृत्तिः' इत्यंशोऽधिको दृश्यते, स च रुचिरत्वाभावे हेतुबोधकानां पञ्चम्यन्तानां मध्ये प्रथमान्तवाक्यप्रवेशस्यानौचित्येन सकृदुच्चरितेत्यादेः प्रकृतोपयोगित्वप्रतिपादनपरा टिप्पनीति प्रतिभाति।

(C) उक्तमुपपत्त्यभावमेव विवृणोति कशिपुशब्दस्येति।

---

न चैवं व्युत्पत्तिवैचित्र्यास्वीकारे प्रकृत्यर्थान्वितस्वार्थबोधकत्वमेव प्रत्ययानामस्तु स्वीक्रियतामलं शब्दतदर्थयोरभेदावगमस्वीकारेणेति वाच्यं देवगिरिमुपजिगमिषोरिति वक्तव्ये 'उपजिगमिषोर्देवपूर्वं गिरिं ते' इति मेघदूतकाव्ये ईदृग्गत्यसम्भवात्। तथा हि गिरिपदेन लक्षितस्य गिरिशब्दार्थगिरेः कर्मता अन्वितस्य गिरिशब्दाभिन्नत्वाध्यासे देवशब्दपूर्वमित्यर्थकस्य देवपूर्वमिति शब्दस्याभेदेन गिरिविशेषणत्वानुपपत्तेः। अभेदा-

घम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः ।
रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम् ॥ १८२ ॥

अत्र धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति सम्बन्धे क्लिष्टत्वम् ।

(A) न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ।

---

कशिपुशब्दे लक्षणानन्तरम् असुरविशेषे लक्षणायां गिरिशब्दस्य देवगिरिशब्दे लक्षणानन्तरं गिरिविशेषे लक्षणायामपि तयोर्हिरण्यपूर्वत्वदेवपूर्वत्वानुपपत्तेः । ऋजवस्तु गिरिशब्दकशिपुशब्दयोरेव असुरविशेषगिरिविशेषयोर्लक्षणा हिरण्यपूर्वदेवपूर्वशब्दौ तत्तात्पर्यग्राहकाविव इत्याहुः, तन्न ; तदा हिरण्यकशिपुदेवगिरिनामकत्वेन तयोः प्रतीत्यनुपपत्तेः । यदि तु तन्नामकत्वेन तयोर्लक्षणेत्युच्यते तथाऽपि हिरण्यपूर्वदेवपूर्वशब्दयोस्तत्तात्पर्यग्राहकत्वासम्भव एव हिरण्यगर्भदेवदत्तनामकत्वतात्पर्यग्रहस्यापि ततः सम्भवात्, तत्पदयोः स्वार्थबोधनद्वारा हि तादृशतात्पर्यग्राहकत्वं तच्च हिरण्यगर्भादावप्यविशिष्टम्, स्वार्थबोधनं विनाऽपि तयोस्तात्पर्यग्राहकत्वे घटादिशब्दस्यापि तत्तापत्तेरित्यास्तां विस्तरः[2]* ।

(१४) क्लिष्टत्वमाह—धम्मिल्लस्येति । अपूर्वायाः बन्धव्युत्पत्तेः बन्धविन्यासस्य हेतोः, षष्ठ्यन्तं वेदं धम्मिल्लविशेषणम् । वृत्तावेवास्य परा व्याख्या । क्लिष्टत्वमिति, धम्मिल्लस्य शोभामित्येवमन्वयकल्पने विलम्बात् ।

(१५) अविमृष्टविधेयांशमाह—न्यक्कार इति । रामहन्यमानलङ्कासैन्यस्य

---

(A) न्यक्कार इति । व्याख्यातमिदमुद्द्योते "हनुमन्नाटके (महानाटके) चतुर्दशाङ्के रामेण राक्षसक्षये क्रियमाणे क्षुब्धस्वान्तस्य रावणस्य स्वाधिक्षेपोक्तिरियम् । अयमेव मे न्यक्कारो निन्दा यदरयः सन्तीति शेषः ; अन्यस्य तु तत्कृतपराभवादि । अरयो न त्वेको द्वौ वा । अनेन पूर्वमेकोऽपि नासीदधुना अकस्मादेव बहव इति व्यज्यते । तत्रापि तेष्वपि मुख्यस्तापसः,

---

ध्यासे तु गिरिशब्दस्यैवाभेदेन विशेषणं देवपूर्वमिति । अथात्र किमर्थं लक्षितलक्षणया अम्बरादिशब्दोपस्थापनम्, वस्त्रवैदूर्यादिपदैः सूर्यादिरेव लक्ष्यतामिति चेन्न, अम्बरादिशब्दप्रतीतेरानुभविकत्वा दुरपह्नवत्वात्, अन्यथा द्विरेफादिपदैरपि भृङ्गादिलक्षणायाः सुवचत्वात् । प्रावृषभाडितपादौ तु जलदविशेषपदपदैकदेशपदशब्दादीनां प्रतीतानुभवान्न तत्तच्छब्दलक्षणा, किन्तु तत्रैव दर्शितस्य प्रकृष्टजलदादौ शक्तिभ्रमोन्नायकस्य अप्रसादवाचकत्वैवेति दिक् । प्रकृतेऽप्यचलापदपरिवृत्तिचमत्कारासम्भवान्निष्कम्पापदेऽवाचकतैवेति बोध्यम्" ग ।

धिग् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥ १८३ ॥

अत्रायमेव न्यक्कार इति वाच्यम् । उच्छूनत्वमात्रं चानुवाद्यम्

---

रावणस्य विषादोक्तिरियम् । यद् अरयः अयमेव न्यक्कारः, निगृहीतसमस्तारेर्मम अरिसत्त्वस्यैव न्यक्कारत्वात्, तत्रापि सति असौ एकस्तापसः तपस्विसहस्रभक्त-काणामस्माकम् एकतपस्वी रिपुरित्यत्यन्तन्यक्कार इति भावः। अत्रैव लङ्कायामेव, न तु खरदूषणादिहननवत् सागरान्ते। राक्षसकुलं न तु(A) द्वित्रिराक्षसान्। प्रबोधितं प्रबोधनम्, कारितान्तात् भावे क्तः, तद्वता इत्यर्थः, कर्मणि क्तवत्वभावात्। मद्विलुण्ठने स्वर्गोऽपि ग्रामटिका स्वल्पग्रामः तद्विलुण्ठनेत्यादिरर्थः। अत्रेति, इदम्पदार्थस्य अरिसत्त्वस्यानुवादेन तत्र विधेयस्य न्यक्कारस्य तत्पश्चान्निर्देशाभावेन विधेयत्वाप्रतीते-रिति भावः। तदुक्तम्—

"अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्(B)"। इति।

वृथोच्छूनैरिति दलेऽपि दोषसत्त्वं दर्शयति—उच्छूनत्वमात्रञ्चेति। ननु वृथात्व-विशेषितानुवादनिषेधेन को दोषो दर्शितः? अत्र बहवः(C)—अनुवाद्योच्छूनभुज-

---

आभ्यां भक्ष्यत्वशस्त्रानभिज्ञत्वे द्योत्येते। अत्रैव मत्समीप एव न तु दूरे। कुलं बालवृद्धस्त्री-प्रभृति निहन्ति, स्त्रीवधस्य भूतत्वेऽपि वर्त्तमानसामीप्यविवक्षया सर्वत्र वर्त्तमाननिर्देशः। क्वचित् 'राक्षसभटान्' इति पाठः। एतावता न्यक्कारातिशयः। अहो इति निर्वेदातिशयः। रावयति लोकानिति रावणः। (तदुक्तं रामायणे—"यस्माल्लोकत्रयं चैतद् रावितं भयमागतम्। तस्मात्त्वं रावणो नाम नाम्ना वीरो भविष्यसि" इति। विश्रवसोऽपत्यं पुमानिति अपत्यार्थे अणि कृते 'विश्रवसो विश्रवणरवणौ' इति सूत्रेण विश्रवसो रवणादेशादादिवृद्धौ रावण इति पाणिनीयाः) अनेन तत्सहनेऽनौचित्यातिशयः। जीवति, काका न जीवतीत्यर्थः। धिग् धिगिति निन्दातिशये, अत एव शक्रजितमित्युक्तिः, शक्रोऽपि येन जितस्तस्य मनुष्यमात्राजयेन निन्दातिशयप्रतीतेः। प्रबोधितवतेति णिजन्ताद्भावे क्तः, ततो मतुप्, न तु क्तवत्वन्तः कर्मणि तस्यासाधुत्वात्। स्वर्गस्य ग्रामटिकेव (ग्रामटिकाया इव ?) अल्पग्रामवद् विलुण्ठनम्, ग्रामशब्दादल्पार्थे "तद्धिताः" इति बहुवचनबोध्यटिकच् प्रत्ययः। एभिः प्रसिद्धपराक्रमैर्भुजैः किम्? भुजद्वयशालिशत्रोरप्यजयात्" इति।

(A) द्वित्रिराक्षसानिति, अत्र समासविहित 'ड' प्रत्ययाभावश्चिन्त्यः।

(B) "न ह्यलब्धास्पदं किञ्चित् कुत्रचित् प्रतितिष्ठति" इति शेषार्द्धम् (श्लोकवार्त्तिकम्)

(C) बहव इति। उदाहरणचन्द्रिकाकारैरयमेव पक्ष उक्तः, किन्तु टीकाकृतां महेश्वरन्याया-

न वृथात्वविशेषितम्। अत्र च शब्दरचना विपरीता कृतेति वाक्यस्यैव दोषो न वाक्यार्थस्य।

---

वृथात्वस्य किम्पदेनैवोक्तत्वात् पुनरुक्तत्वदोष एवेत्याहुः, तन्न; भुजवैयर्थ्यस्य किम्पदेन, उच्छूनत्ववैयर्थ्यस्य च वृथापदेनोक्तौ पुनरुक्त्यभावात्। विधेयस्य वृथात्वस्य समासे गुणीभावात् प्रसङ्गेन समासगतविधेयाविमर्ष एव दर्शित इति तु चक्रवर्त्ती, [1]तदपि न, तदा विधेयं वृथात्वं न समासे गुणीकार्यमित्येवं लिख्येत। अथानुवाद्यविशेषणत्व-निषेधोक्त्याऽपि वृथात्वगुणीभावकथनलाभ इति चेत्, अत्र वृथात्वस्य गुणीभाव-स्यैवाभावः; 'एष्वयमत्यन्तपण्डितः' इत्यादौ 'अनिर्दयोपभोग्यस्य' इत्यादौ च अत्य-न्तत्वस्यानिर्दयत्वस्य च विधेयस्य कर्मधारयविशेष्यतावच्छेदके पाण्डित्ये उपभोगे च विधेयत्वानुभवस्य दुर्वारत्वात्, प्रकृतेऽप्युच्छूनत्वे विशेष्यतावच्छेदक एव वृथात्वस्या-न्वयेन विधेयत्वप्रतीत्या गुणीभावाभावात्; किन्तु कर्मधारये यो विशेष्यान्वयी विधेयस्तस्यैव गुणीभावात्; यथा द्वितीयमौर्वीमिवेति[1]*। अतोच्यते—अभवन्मत-योगदोष एवात्र प्रसङ्गाद्दर्शितः। तथाहि स्वर्गविलुण्ठनजन्यत्वम् उच्छूनत्वस्यैव न तु वृथोच्छ्वयनस्य इदानीमेव तद्वृथात्वात्, अतो वृथात्वविशेषितोच्छूनत्वे स्वर्गविलुण्ठन-जन्यत्वानन्वयात् (A)अभवन्मतयोग [2]दोष इति स एव दर्शितः[2]*। अत्र च अनु-वाद्यविधेययोरर्थरूपत्वेन अर्थदोषताप्रसक्तिं(B) निरस्यति—अत्र च शब्दरचनेति[3]।

---

लङ्काराणां तेभ्योऽर्वाचीनत्वमद्यापि न प्रमाणितमिति एतत्पूर्ववर्त्तिभिः कैरन्यैरिदमुक्तमित्यनु-सन्धेयम्।

(A) इदन्तु "अत्र वृथात्वं विधेयं तच्च समासे गुणीभावादनुवाद्यत्वप्रतीतिकृत्" इति दर्पणकृदुक्त्या विरुध्यते इति बोध्यम्।

(B) इमे आशङ्कासमाधाने प्रदीपकारैः—"ननु न्यक्कारोऽयमित्यत्र वैपरीत्येन विधेयप्रत्यया-दर्थदोष एवायं स्यादिति चेत्, न खल्वत्र विवक्षितोऽर्थो दुष्टः, किन्तु क्रमविशेषादविवक्षितार्थ-

---

1. 'तन्न; तथाऽभिप्रायसत्त्वे विधेयस्य वृथात्वस्य समासपात एव निषिध्येत न तु उच्छूनत्वस्य वृथात्व-विशेषितत्वम्। अथ एतादृशनिषेधस्यापि तादृशमेव पर्यवसानमिति चेन्न कर्मधारये विशेष्यान्वयिनैव विधेयस्य गुणीभावात्, यथा—द्वितीयमौर्वीमित्यत्र विशेष्यमौर्व्यन्वयिनो द्वितीयत्वस्य विशेष्यतावच्छेदकान्वयिनो विधेयस्य अनिर्दयत्वस्य। प्रकृतेऽपि विशेष्यतावच्छेदकोच्छूनत्वस्य अन्वयिनो वृथात्वस्यागुणीभावादेव' क-ख।

2. 'दोष एवात्र दर्शितः' क-ख।

3. अतः परं ग-पुस्तके 'इदञ्चापातत एवोक्तम्, एवं रीत्या 'विश्राणय तुरङ्गं मे मातङ्गं वा मदालस'-मित्यत्र वक्ष्यमाणस्यार्थदोषस्य दुष्क्रमस्यापि शब्ददोषतापत्तेः' इत्यधिकं दृश्यते।

यथा वा—

अपाङ्गसंसर्गितरङ्गितं दृशोर्भ्रुवोररालान्तविलासि वेल्लितम्।
विसारि रोमाञ्चनकञ्चुकं तनोस्तनोति योऽसौ सुभगे तवागतः॥१८४॥

अत्र योऽसाविति पदद्वयमनुवाद्य[1]मात्रप्रतीतिकृत्। तथा हि प्रक्रान्तप्रसिद्धाऽनुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षते।

क्रमेणोदाहरणम्—

कातर्यं केवला नीतिः शौर्यं [2]चापलचेष्टितम्।
अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः॥ १८५॥

---

ननु असमासेऽविधेयस्य पूर्वनिपातेऽपि वैपरीत्येनान्वयबोधसम्भवात् यत्किञ्चिद्विलम्बनमात्रं न हेयताप्रयोजकदोषाय, अन्यथा 'नियतिकृतनियमरहिता'मित्यत्र निर्मितौ विधेयानां नियत्यादीनाम्, 'निःशेषे'त्यादावधरे विधेयस्य निर्मृष्टरागत्वस्य, 'शून्यं वासगृह'मित्यादौ वासगृहे विधेयस्य शून्यत्वस्य, 'कातर्यं केवला नीति'रित्यादौ केवलनीतौ विधेयस्य कातर्यत्वस्य च अविमर्ष एव स्यात्। यदि च तत्रापीष्टापत्तिरेव ग्रन्थकृतः, तदा 'वपुर्विरूपाक्ष'मित्यादावविमृष्टविधेयांशदोषपरिहारार्थं कथम् 'अलक्षिता जनिरि'ति पाठो ग्रन्थकृतैव रचितः अलक्षितत्वस्य विधेयस्य पूर्वनिपातेन तद्दोषतादवस्थ्यादित्यतः(A) अन्यदाह—**यथा वा अपाङ्गे**ति। तव अपाङ्गसंसर्गि अपाङ्गसम्बद्धं दृशोः चालनम्, कुटिले अन्ते विलासि भ्रुवोः वेल्लितं कम्पनम्, तनोः विस्तारि रोमाञ्चनरूपं कञ्चुकं च यः तनोति हे सुभगे असौ आगत इत्यन्वयः। यस्मिन् दृष्टे तव एवं भवतीत्यर्थः। **अनुवाद्यमात्रे**ति, "युधि योऽसौ विजयार्जुनैकमल्ल" इत्यादाविव यच्छब्दसन्निहितपठितस्य अदःशब्दस्य प्रसिद्धिमात्रपरामर्शकत्वादिति भावः। तथाच अत्र यच्छब्दः तच्छब्दान्तरार्थे विधेये साकाङ्क्ष इति हृदयेन यत्तदोः क्वचित् परस्परसाकाङ्क्षतां क्वचिच्च निराकाङ्क्षतां विचारयितुमादौ तच्छब्दस्य यच्छब्दनिराकाङ्क्षतां दर्शयति—**तथा ही**ति। केवला शौर्यनिरपेक्षा नीतिः। चपल एव

---

प्रत्यय एवेति शब्दविशेष एवापराध्यति शब्दान्तरेण तत्प्रतीतेरवैकल्यात्, यथा विरुद्धमतिकृति" इत्येवं स्फुटीकृते।

(A) प्रदीपे तु अपाङ्गेत्याद्युदाहरणान्तरप्रदर्शने "न केवलं विधेयस्योपसर्जनत्वव्युत्क्रमत्वाभ्यामेवायं वाक्यदोषः, किन्तु विधेयानुपस्थित्याऽपि" इत्याशय उक्तः।

---

1. '-विधेयार्थतया विवक्षितमनुवाद्यमात्र-' इति क्वचित् पाठः। 2. "श्वापद-" इति पाठान्तरम्।

द्वयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया कपालिनः।
कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी ॥ १८६ ॥

उत्कम्पिनी भयपरिस्खलितांशुकान्ता
ते लोचने प्रतिदिशं विधुरे क्षिपन्ती।
क्रूरेण दारुणतया सहसैव दग्धा
धूमान्धितेन दहनेन न वीक्षिताऽसि ॥ १८७ ॥

यच्छब्दस्तूत्तरवाक्यानुगतत्वेनोपात्तः सामर्थ्यात् पूर्ववाक्यानुगतस्य तच्छब्दस्योपादानं नापेक्षते। यथा—

साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके।
उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः ॥१८८॥

प्रागुपात्तस्तु यच्छब्दस्तच्छब्दोपादानं विना साकाङ्क्षः। यथा

---

चापलः, स्वार्थे अण्। शौर्यमात्रं तदीयचेष्टितम्। सः प्रक्रान्तो राजा अतिथिः(A)। प्रसिद्धावाह—द्वयमिति। सा प्रसिद्धा त्वं चेत्यन्वयः। अनुभूतार्थकमाह—उत्कम्पिनीति। रत्नावलीं गृहदाहदग्धां सम्भाव्य तामनुस्मृत्य शोचतो राज्ञ उक्तिरियम्। हे रत्नावलि क्रूरेण दहनेन दारुणतया त्वं सहसैव दग्धाऽसि। दाहकालीनां तदवस्थां सम्भाव्याह—उत्कम्पिनीति। ते पूर्वानुभूते, विधुरे कातरे। तव सौन्दर्यदर्शने सति क्रूरेण दारुणेनापि दहनेन दग्धुं न शक्यसे इति मन्वान आह—धूमेति। अत्र ते इत्यस्य अनुभूतार्थकत्वम्।

यच्छब्दस्यापि तच्छब्दनिराकाङ्क्षतामाह—यच्छब्दस्त्विति। साध्विति। अभिरामता सौन्दर्यं तया अधिके चन्द्रमसि सति पुष्करैः पद्मैः साधु कृतं यत् मीलितं मुद्रितम्। जयिनि स्वापेक्षया उत्कृष्टे कामिनीमुखे सति उद्यता तेन चन्द्रेन पुनः साहसम् अनुष्ठितमित्यन्वयः। अत्र मीलितं यदित्युत्तरवाक्यस्थं 'यत्'पदं 'तत्'-पदनिराकाङ्क्षम्। इदानीं यत्पदस्य तत्पदसाकाङ्क्षतां दर्शयति—प्रागिति।

---

(A) 'अतिथि'रिति राज्ञो नाम।

अत्रैव श्लोके आद्यपादयोर्व्यत्यासे। द्वयोरुपादाने तु निराकाङ्क्षत्वं प्रसिद्धम्। अनुपादानेऽपि सामर्थ्यात् कुत्रचिद् द्वयमपि गम्यते। यथा—

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी॥ १८९॥

अत्र य उत्पत्स्यते तं प्रतीति। एवं च तच्छब्दानुपादानेऽत्र साकाङ्क्षत्वम्। न च असाविति तच्छब्दार्थमाह।

असौ मरुच्चुम्बितचारुकेशरः प्रसन्नताराधिपमण्डलाग्रणीः।
वियुक्तरामातुरदृष्टिवीक्षितो वसन्तकालो हनुमानिवागतः॥१९०॥

अत्र हि न तच्छब्दार्थप्रतीतिः।

---

व्यत्यास इति, 'मीलितं यदभिरामताधिके साधु चन्द्रमसि पुष्करैः कृत'मिति करणे इत्यर्थः। अत्र तत् साधु कृतमिति करण एव निराकाङ्क्षम्। सामर्थ्यादिति। उभयत्रैव आकाङ्क्षारूपसामर्थ्यादित्यर्थः। एकश्लोक एव अर्द्धद्वयेन उभयमुदाहरति—ये नामेति। इह मालतीमाधवनाम्नि, नः अस्माकं नाटके, किमपि बुद्ध्यगम्यम्। अत्रार्द्धे ये ते इति द्वयमेवोपात्तम्। उत्पत्स्यते इति, अस्ति वेति वाकारार्थोऽत्र अध्याहार्यः। इयता कालेन अनुत्पन्नस्य कथमुत्पत्स्यमानत्वम्। अस्तित्वे च कथमदृश्यमानत्वमित्यत आह—कालो हीति विपुलेति च। अत्रार्द्धे द्वयमनुपात्तमाकाङ्क्षया लभ्यते। तथाच तनोति योऽसावित्यत्र पूर्ववाक्यगतो यच्छब्दस्तच्छब्दसाकाङ्क्ष एवेत्याह—एवञ्चेति। ननु (A)तदाकाङ्क्षा तच्छब्दसमानार्थकेन अदःशब्देनैव पूर्यतामित्यत्राह—न चासाविति। इदञ्च आपातत एव, तच्छब्दसमानार्थकस्यानुभविकस्य दुरपह्नवत्वेनाग्रे स्वीकरिष्यमाणत्वात्। असौ मरुदिति। हनुमानत्र लङ्कात आगतो बोध्यः। असौ दृश्यमानधर्मा वसन्तकालः, मरुत् वायुः पक्षे तदधिष्ठातृदेवता, चुम्बितः स्पृष्टः पक्षे चुम्बित एव, केशरः नागकेशरः पक्षे स्कन्धलोम, ताराधिपमण्डलं चन्द्रबिम्बं तदेव अग्रणीः प्रधानं यत्र तादृशः, पक्षे ताराधिपस्य सुग्रीवस्य मण्डलं

---

(A) तदाकाङ्क्षेति 'तनोति योऽसौ' (श्लो० १८४) इत्यत्र यच्छब्दस्याकाङ्क्षेत्यर्थः।

प्रतीतौ वा—

करवालकरालदोःसहायो
युधि योऽसौ विजयार्जुनैकमल्लः ।
यदि भूपतिना स तत्र कार्ये
विनियुज्येत ततः कृतं कृतं स्यात् ॥ १९१ ॥

अत्र स इत्यस्यानर्थक्यं स्यात् । अथ—

योऽविकल्पमिदमर्थमण्डलं पश्यतीश निखिलं भवद्वपुः ।
आत्मपक्षपरिपूरिते जगत्यस्य नित्यसुखिनः कुतो भयम् ॥ १९२ ॥

इतीदंशब्दवद् अदःशब्दस्तच्छब्दार्थमभिधत्ते इत्युच्यते, तर्हि अत्रैव वाक्यान्तरे उपादानमर्हति न तत्रैव । यच्छब्दस्य हि निकटे स्थितः [1]प्रसिद्धिं परामृशति । यथा—

यत्तदूर्जितमत्युग्रं क्षात्रं तेजोऽस्य भूपतेः ।
दीव्यताऽक्षैस्तदाऽनेन नूनं तदपि हारितम् ॥ १९३ ॥

इत्यत्र तच्छब्दः ।

---

सेना तदग्रणीः तत्प्रधानम् । वियुक्ता रामा वियुक्तो रामश्च । प्रतीतौ वेति, प्रतीत्यभ्युपगमे वेत्यर्थः । करवालेति । योऽसौ प्रसिद्धः कर्णः, विजयापरनामार्जुनः पार्थार्जुनः कार्त्तवीर्यार्जुनव्यवच्छेदायेदमुक्तम्, भूपतिना दुर्योधनेन, तत्र कार्ये सैनापत्ये, कृतं कर्त्तव्यं कृतं सिद्धं स्यात् । अत्र अदःशब्दस्य तच्छब्दसमानार्थकताभ्युपगमे स इत्यनर्थकं स्यादित्याह—अत्रेति । ननु नानार्थस्यादःशब्दस्य तनोति योऽसावित्यत्र तच्छब्दसमानार्थकत्वं स्यादित्याशङ्क्ते—अथेति । भयप्रदर्शकं परमेश्वरं प्रति तद्भक्तस्योक्तिरियम् । हे ईश, इदं निखिलम् अर्थमण्डलं संसारचक्रं यः भवद्वपुःस्वरूपं पश्यति आत्मपक्षेण भवता पूरिते जगति नित्यसुखिनः तस्य कुतः जनाद् भयमित्यर्थः । अत्र तस्येत्यर्थे अस्येतिवत् इत्याह—इतीदंशब्दवदिति । 'वाक्यान्तरे' व्यवहितवाक्यान्तरे, अन्यथा अत्रापि [2]यस्तनोति असावागत इति वाक्यान्तर एव[2]* इष्टापत्तिः स्यात् । स्वयमेवेदं स्पष्टमाह—यच्छब्दस्य हीति । निकट इति तद्वाक्ये वाक्यान्तरे वेत्यनियम इत्यभिप्रायः । यत् तदिति भीमस्योक्तिरियम् । अत्र यत् तत् प्रसिद्धम्,

---

1. अतः परं 'तच्छब्दः' इति क्वचिदधिकम् । 2. 'तनोति य इति वाक्याद्भिन्ने असाविति वाक्य एव' ख ।

ननु कथम्—

कल्याणानां त्वमसि महसां भाजनं विश्वमूर्ते
धुर्यां लक्ष्मीमथ मयि भृशं धेहि देव प्रसीद ।
यद् यत् पापं प्रतिजहि जगन्नाथ नम्रस्य तन्मे
भद्रं भद्रं वितर भगवन् भूयसे मङ्गलाय ॥ १९४ ॥

अत्र यद् यदित्युक्त्वा तन्मे इत्युक्तम् । उच्यते—यद् यदिति येन केनचिद्रूपेण स्थितं सर्वात्मकं वस्त्वाक्षिप्तम्, तथाभूतमेव तच्छब्देन परामृश्यते ।

---

अस्य भूपतेः युधिष्ठिरस्य । इत्यत्र तच्छब्द इति, प्रसिद्धपरामर्शक इति शेषः । इत्थं पूर्ववाक्यस्थं यत्पदं तत्पदसाकाङ्क्षमिति स्थिरीकृते वीप्सास्थले पूर्ववाक्यस्थाद् यत्पदद्वयात् कथम् एकतत्पदेन निराकाङ्क्षाप्रतीतिरित्याशङ्कते—नन्विति । ननु कथम् अत्र यद् यदित्युक्त्वा तन्मे इत्युक्तमित्यग्रे अन्वयः । कल्याणानामिति । मालती-माधवे सूत्रधारस्य सूर्यनमस्कारोऽयम् । हे विश्वमूर्त्ते सूर्य, त्वं कल्याणानां महसां भाजनम् असि आश्रयोऽसि । अथ सम्बोधने, धुर्यां नृत्यभाववहनोचितां लक्ष्मीं मयि धेहि अर्पय । हे देव प्रसीद, नम्रस्य मम यत् यत् पापम् , जगन्नाथ तत् प्रतिजहि नाशय, भद्रम् उत्तमं कर्म भूयसे मङ्गलाय भद्रं यथा स्यात् तथा हे भगवन् वितर देहि । अत्र यत् यदित्युक्त्वा कथं तन्मे इत्युक्तमित्यन्तेनाशङ्क्य समाधत्ते—उच्यते इति । सर्वात्मकमिति, पापत्वेन सामान्येन समस्तं पापमित्यर्थः । 'तथाभूतमेव' पापत्वाव-च्छिन्नमेवेत्यर्थः । तथाच वीप्सास्थले वक्तुस्तात्पर्यमेव नियामकम् , सामान्येन रूपेणोपस्थापने वक्तुस्तात्पर्ये सति न तत्पदे वीप्सा ; तत्तद्व्यक्तित्वेनोपस्थाने वक्तुस्तात्पर्ये सति तत्पदे वीप्सेति हृदयमाविष्कृतमनेनेति बोध्यम् । तेन—

'यं यं व्यतीयाय पतिंवरा सा, विवर्णभावं स स भूमिपालः' (A)इत्यत्र—

'यां यां प्रियः प्रैक्षत कातराक्षी सा सा ह्रिया नम्रमुखी बभूव'

इत्यत्र च तत्पदे वीप्सा । ननु तनोति योऽसावित्यत्र न विधेयाविमर्षः, एकवाक्य-स्थत्व एव यत्पदसन्निहितपठितस्य अदःशब्दस्य प्रसिद्धपरामर्शकत्वात्, युधि योऽसा-

---

(A) सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥ इति रघुवंशे षष्ठसर्गे ।

यथा वा—

किं लोभेन विलङ्घितः स भरतो येनैतदेवं कृतं
मात्रा स्त्रीलघुतां गता किमथ वा मातैव मे मध्यमा ।
मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्यानुजोऽसौ गुरु-
र्माता तातकलत्रमित्यनुचितं मन्ये विधात्रा कृतम् ॥ १९८ ॥

अत्र आर्यस्येति तातस्येति च वाच्यम्, न त्वनयोः समासे गुणीभावः कार्यः । एवं समासान्तरेऽप्युदाहार्यम् ।

विरुद्धमतिकृद् यथा—

श्रितक्षमा रक्तभुवः शिवालिङ्गितमूर्तयः ।
विग्रहक्षपणेनाद्य शेरते ते गतासुखाः ॥ १९९ ॥

---

वित्यत्र तथा दर्शनात्, प्रकृते तु यस्तनोति असावागत इति वाक्यभेदात्, इत्यत एकवाक्यतापन्नयोः समासपदयोर्विधेयद्वयाविमर्षं वाक्यगतमुदाहरति—यथा वा, किं लोभेनेति । रामप्रवासनाज्ञां श्रुत्वा लक्ष्मणस्योक्तिरियम् । येन भरतेन, माता द्वारभूतया, एतत् कर्म एवंप्रकारेण कृतमित्यर्थः । वितर्कान्तरमाह—किमथवेति, मे मध्यमा माता कैकेय्येव अथवा किं स्त्रीस्वभावलघुतां गता न तु भरतस्य दोष इत्यर्थः । वितर्कान्तरमाह मिथ्येति । चिन्तितैतद्द्वयमिथ्यात्वे हेतुमाह—आर्येति मातेति च । आर्यस्य रामस्य अनुजत्वात् गुरुर्न लघुकार्यकारी, तातस्य कलत्रत्वात् माताऽपि तथेत्यर्थः । तर्हि इदमनुचितं कर्म केन कृतमित्यत्राह—इत्यनुचितेति, इदमनुचितमित्यर्थः । अत्रेति, मिथ्यात्वे हि आर्यस्य तातस्य च सम्बन्धो [1]हेतुतया विधेयः, स च समासे तदर्थकषष्ठीलोपादविमृष्ट[1]* इत्यर्थः । तथाच एकवाक्यतापन्नैतत्समासद्वयगतैकजातीयैतद्दोषव्यक्तिद्वयपातात् वाक्यदोषत्वम्, स रातु व इत्यत्र अप्रयुक्तत्वव्यक्त्यनेकपातादिव । न च एतत्समासपदयोरेकवाक्यतैव नास्तीति वाच्यम् एकस्मिन् द्वितयमिथ्यात्वे साध्ये द्वयोर्हेतुत्वेनैकवाक्यत्वात् । एवं समासान्तरेऽपीति, एकवाक्यतापन्नसमासान्तरद्वयेऽपीत्यर्थः । यथा—

'अमोघबाणं धनुषा विमुञ्चन्नशक्यकार्यं स चकार वीरः'

इत्यत्र अमोघत्वाशक्यत्वयोर्विधेययोः कर्मधारये ।

---

1, 'हेतुत्वद्वाचकषष्ठ्याश्च समासेन लोपाद्विधेयस्य तस्याविमर्षरूपो गुणीभावः' ग ।

अत्र क्षमादिगुणयुक्ताः सुखमासते इति विवक्षिते हता इति विरुद्धा प्रतीतिः।

पदैकदेशो यथासम्भवं क्रमेणोदाहरणम्—

अलमतिचपलत्वात् स्वप्नमायोपमत्वात्
परिणतिविरसत्वात् संगमेनाङ्गनायाः।
इति यदि शतकृत्वस्तत्त्वमालोचयाम-
स्तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा॥ १९७॥

अत्र त्वादिति।

यथा वा—

तद्गच्छ सिद्ध्यै कुरु देवकार्यमर्थोऽयमर्थान्तरलभ्य एव।
अपेक्षते [1]प्रत्ययमङ्गलब्ध्यै[1*] बीजाङ्कुरः प्रागुदयादिवाम्भः॥१९८॥

(A)अत्र द्ध्यै ब्ध्यै इति कटु।

---

(१६) विरुद्धमतिकृत्त्वमाह—श्रितक्षमेति। ते कुरवः श्रितेत्यादिविशेषणविशिष्टाः शेरते इत्यन्वयः। अत्र वाच्यार्थपक्षे क्षमा क्षान्तिः, रक्ता अनुरक्ता, भूः भूमिष्ठलोकः, शिवं कल्याणम्, विग्रहः युद्धम्, असुखं दुःखम्। अन्यान्वयवशेन विरुद्धव्यङ्ग्यपक्षे तु—क्षमा भूः तत्र पतिताः, भूपतितरुधिराः, शृगालालिङ्गितशरीराः शरीरत्यागेन शेरते, गताः असवः प्राणाः खानि इन्द्रियाणि च येषां तादृशाश्चेति।

(१) प्रत्ययरूपपदैकदेशे श्रुतिकटुत्वमुदाहरति—अलमतीति, अङ्गनायाः सङ्गमेन अलमित्यन्वयः। अतिचपलत्वात् क्षणिकत्वात्, अत एव स्वप्नमायेति। तद् गच्छेति, महेशतपोभङ्गार्थं कामं प्रेरयत इन्द्रस्योक्तिरियम्। अर्थः पार्वत्यां महेशेन सेनापत्युत्पादनरूपः। अर्थान्तरं विशिष्य वक्तुमयोग्यं पार्वत्यां महेशस्य सुरतम्; सोऽर्थः अङ्गलब्ध्यै स्वसत्तालब्ध्यै प्रत्ययं कारणं त्वामपेक्षते बीजाङ्कुरः स्वोदयात् प्राक् अम्भः जलमिव।

---

(A) अत्रेति। दोषप्रकरणे इह पदैकदेशत्वं पदघटकत्वमात्रम् तेन द्ध्यैब्ध्यैकारयोः प्रकृतिप्रत्ययान्यतरमात्रत्वाभावेऽपि न पदैकदेशत्वहानिः। तथाच एकस्मिन् पद्ये पदैकदेशगत-श्रुतिकटुत्वदोषद्वयमत्र प्रदर्शितम्। अस्य तृतीयपादे 'प्रत्ययमुत्तमं त्वा'मिति पाठे तु पदांशगत एक एव दोषो बोध्यः।

---

1. 'प्रत्ययमुत्तमं त्वाम्' इति पाठान्तरम्।

**यश्चाप्सरोविभ्रममण्डनानां सम्पादयित्रीं शिखरैर्बिभर्त्ति।**
**बलाहकच्छेदविभक्तरागामकालसंध्यामिव धातुमत्ताम् ॥ १९९ ॥**

**अत्र मत्ताशब्दः क्षीवार्थे निहतार्थः।**

(A)**आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासित-**
**प्रोत्सर्पद्विरहानलेन च ततः सन्तापितानां दृशाम्।**

---

**अत्रे**ति[1] 'द्वैच ञ्यैं' अनयोः प्रत्ययरूपयोः कटुत्वम्[1]*। इदन्त्वत्र अवधेयम् प्रत्ययैकदेशरूपयोरनयोः प्रकृत्येकदेशवर्णवैशिष्ट्येनैव कटुत्वात् पदैकदेशत्वं दुर्घटम्। यदि तु [2]आद्यवर्णस्याकटुत्वात् [3]पदैकदेशत्वं तदा कार्तार्थ्यं बर्हिनिर्ह्रादनार्ह इत्यादीनामपि तथात्वेन ततोऽविशेषः[3]* अतः पूर्वोक्तमुदाहरणमेव ज्यायः।

(५) निहतार्थत्वमाह—**यश्चाप्सर** इति। अकालसन्ध्या चित्रमेघाच्छन्नः सन्ध्यातुल्यकालः, बलाहकः मेघः, छेदः खण्डः। **अत्रे**ति, क्षीवः मत्तः।

(६) निरर्थकत्वमाह—**आदा**विति। रुदतीं दृष्ट्वा कस्यचिदुक्तिरियम्। कुरङ्गेक्षणा सम्प्रत्येव कामं यथेष्टम् अश्रुपयसा दृशां निषेकं कुरुते, चेतोभुवः देवस्य

---

(A) आदाविति। अत्र प्रदीपकाराणामुपपादनम्—

"अत्र दृशामिति बहुवचनमविवक्षितार्थमेव वृत्तपूरणायोपात्तम्, एकस्याः कुरङ्गक्षणाया दृग्बहुत्वाभावात्। 'अलसवलित' इत्यादिवद्व्यापारभेदाद्बहुत्वमिति चेत्—न, तत्रेक्षणैरितिवदत्र तदनुपादानात्। न च भावसाधनतया दृक्शब्द एव व्यापारे वर्त्तते, विशेषणानन्वयप्रसङ्गात्। एवं 'कुरुते' इत्यात्मनेपदमपि निरर्थकम्, प्रधानक्रियाफलसम्बन्धस्य कर्तर्यविवक्षणात्। ननु 'आशिषि नाथः' इतिवत् कर्त्रभिप्रेतक्रियाफलत्वाभाव आत्मनेपदमसाध्वेव, न तु निरर्थकम्, नाथत इत्यपि वा निरर्थकमेव, अविशेषात्; एवं द्वयोरर्थयोर्बहुवचनमसाध्वेवेति। उच्यते—'आशिषि नाथः' इत्यनेनाऽऽशिष्यात्मनेपदं नियमयताऽनाशिषि तदभावो बोध्यते। तस्माद् याचने तस्य युक्तमसाधुत्वम्। 'स्वरितञितः कर्त्रभिप्राये क्रियाफले (पा० सू० १।३।७२) इत्यनेन तु कर्त्रभिप्रेतक्रियाफलविवक्षायां तन्नियमयता पराभिसम्बन्धविवक्षायां तन्निषेधः प्रतिपद्यत इति तत्रैवासाधुत्वम्, न तु कर्त्तभिप्रेतत्वाभावमात्रे। अत एव 'कर्त्रभिप्राय इति किम्, पराभिप्रेतक्रियाफले मा भूत्' इत्यवोचत, न तु कर्त्रभिप्रेतक्रियाफलत्वाभाव इति। न चात्र पराभिप्रेतक्रियाफलत्वं द्योत्यम्, किन्तु कर्त्रभिप्रेत-

---

1. 'छकारईकारय्यकाराणां पदैकदेशानामधिवात् तत्र छकारः प्रकृत्येकदेशः अन्यद्वयन्तु प्रत्ययैकदेशरूपम्' क। 2. 'आद्यवर्णत्यागात्' क। 3. 'पदैकदेशत्वापत्तेः' क।

संप्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो

भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा ॥ २०० ।

अत्र दृशामिति बहुवचनं निरर्थकं कुरङ्गेक्षणाया एकस्या एवोपादानात् । न च अलसवलितैरित्यादिवद् व्यापारभेदाद्बहुत्वम्, व्यापाराणामनुपात्तत्वात् । न च व्यापारेऽत्र दृक्शब्दो वर्तते । अत्रैव कुरुते इत्यात्मनेपदमप्यनर्थकम्, प्रधानक्रियाफलस्य कर्त्रसम्बन्धे कर्त्रभिप्रायक्रियाफलाभावात् ।

---

भल्लीरूपबाणविशेषाणां पानकर्मेव धारतैक्ष्ण्यार्थं पानीयदानकर्मेव इत्युत्प्रेक्षा । दृशां भल्लीनां वा कीदृशीनाम् ? आदौ अञ्जनपुञ्जलिप्तवपुषां, पानीयदाने भल्लीनामपि अङ्गारचूर्णेन लेपात् । तथा ततः तदनन्तरं श्वासानिल उल्लासितो येन तादृशेन विरहानलेन सन्तापितानां सर्वाङ्गतापे दृशामपि तापात्, भल्लीनान्तु भस्त्राश्वासोल्लासितेन प्रोत्सर्पता विरहतुल्यानलेन सन्तापितानाम् । अत्रेति, 'निरर्थकं' निष्प्रयोजनकम्, बहुत्वबोधे प्रयोजनाभावात् । न चैवं च्युतसंस्कृतित्वमिति वाच्यं एतावता अबहुत्वेऽपि बहुवचनस्य व्याकरणानुशिष्टत्वात् (A) । अत्र च दृग्विशेषणे सन्तापितानामित्यत्र छन्दोभङ्गवारणमेव पादपूरणं बोध्यम् । न चेति ।

अलसवलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः

क्षणमभिमुखैर्लज्जालोलैर्निमेषपराङ्मुखैः ।

हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः

कथय सुकृती कोऽयं मुग्धे त्वयाऽद्य विलोक्यते ॥

इत्यत्रेवेत्यर्थः । नन्वत्र दृक्शब्द एव व्यापारपरोऽस्त्वित्यत आह—न चात्रेति, तत्र अञ्जनलेपसन्तापयोर्बाधादिति भावः । अत्रैवेति । वैयर्थ्यहेतुमाह—

---

क्रियाफलत्वाद्योतनमात्रमिति नासाधुत्वम्; एवं बहुषु बहुवचनम् । ( पा० सू० १।४।२१ ) इत्येतत् सूत्रं बहुवचनं नियमयद् द्वेकयोरुपस्थितयोस्तन्निषेधति, न तु बहुत्वाविवक्षामात्रे । दृशामित्यत्र च न द्वित्वैकत्वे विवक्षिते येनासाधुत्वं स्यात्, किन्तु बहुत्वाविवक्षामात्रमित्यनर्थतैवेति युक्तमुत्पश्यामः । एतेन 'अवयवाभिप्रायेण निरर्थकत्वम्, समुदायाभिप्रायेण त्वसाधुत्वमेव इति चण्डीदासमतमनादेयम्'' इति ।

(A) व्याकरणेति, 'गौरवे सर्वेभ्य एकत्वे' इत्यनुशासनमत्र बोध्यम् ।

चापाचार्यस्त्रिपुरविजयी [1]कार्त्तवीर्यो विजेयः
शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः(A)।
अस्त्येवैतत् किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः॥ २०१॥

अत्र विजेय इति कृत्यप्रत्ययः क्तप्रत्यार्थेऽवाचकः।

अतिपेलवमतिपरिमितवर्णं लघुतरमुदाहरति शठः।
परमार्थतः स हृदयं वहति पुनः कालकूटघटितमिव॥ २०२॥

अत्र पेलवशब्दः।

---

प्रधानेति, प्रधानं प्रकृतिः, तद्वाच्यायाः क्रियायाः फलस्येत्यर्थः। कर्त्रभिप्रायेति, कर्त्तारम् अभिप्रैति प्राप्नोति यत् क्रियाफलं तत्रैवात्मनेपदम्, प्रकृते तु कुरङ्गेक्षणा [2]कर्त्री दृङ्निषेकस्य फलेन पान[2]*कर्मणश्च धारातैक्ष्ण्यरूपेण फलेन तस्या असम्बन्धादित्यर्थः। न चैवं च्युतसंस्कृतित्वमिति वाच्यं वृत्तं परिवारयन्ते कण्टका इत्यादिषु तदभावेऽपि आत्मनेपदस्य साधुत्वात्, परन्तु तदभावेऽपि [3]उत्सर्गसिद्धपरस्मैपदत्यागेन तत्प्रयोगो निष्फल इत्यर्थः[3]*।

(८) अवाचकत्वमाह—चापाचार्य इति। दिग्विजये युयुत्सुं परशुरामं छलेन परिहरतो रावणस्योक्तिरियम्। चापाचार्यः धनुर्विद्यागुरुः। कार्त्तवीर्यश्च त्वया विजितः। शस्त्रेण व्यस्तः अपसारितः उदधिः तव सदनम्, सह्यपर्वतसमीपे शस्त्रत्रासितेन उदधिना स्थानदानात्। हन्तकारः अतिथिदानमन्त्वः, तत्सम्बन्धात् भूमेः, त्वया कश्यपाय भूर्दत्ता इत्यर्थः। एतत् सर्वं तव प्रशस्तिहेतुरस्त्येव। किन्त्वित्यर्थे किमु इति। रेणुका राममाता। अत्रेति। न चैवं च्युतसंस्कृतित्वमिति वाच्यम् अनिर्दिष्टकालकानां प्रत्ययानां त्रैकालिकक्रियास्वेव साधुत्वात्, परन्तु कालस्य तद्वाच्यता अत्रैव अनिर्दिष्टकालकाः प्रत्ययास्त्रिष्वपि कालेषु भवन्तीति दर्शनात् तत्र शक्तिभ्रम इत्यवाचकता।

(९) व्रीडाश्लीलमाह—अतिपेलवमिति। पेलवं कोमलम्, लघुतरम् अति-

---

(A) हन्तकार इति, ग्रासप्रमाणा भिक्षा स्यादग्रं ग्रासचतुष्टयम्। अग्रं चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमः॥ इति पुराणवचनात् पृथिवी षोडशग्रासात्मिकातिथिभिक्षा कृतेत्यर्थः।

---

1' 'कार्त्तिकेयो' इति पाठान्तरम्। 2. 'कर्त्री निष्फलस्य निषेकस्य पान-' क। 3. 'निष्फलमात्मनेपदमिति भावः' क।

यः पूयते सुरसरिन्मुखतीर्थसार्थ-
स्नानेन शास्त्रपरिशीलनकीलनेन।
सौजन्यमान्यजनिरूर्जितमूर्जितानां
सोऽयं दृशोः पतति कस्यचिदेव पुंसः॥ २०३॥

अत्र (A)पूयशब्दः।

विनयप्रणयैककेतनं सततं योऽभवदङ्ग! तादृशः।
कथमद्य स [1]तत्त्वदीक्षतां तदभिप्रेतपदं समागतः॥ २०४॥

अत्र प्रेतशब्दः।

कस्मिन् कर्मणि सामर्थ्यमस्य नोत्तपतेतराम्।
अयं साधुचरस्तस्मादञ्जलिर्बध्यतामिह॥ २०५॥

अत्र किं पूर्वं साधुः उत साधुषु चरतीति सन्देहः।

किमुच्यतेऽस्य भूपालमौलिमालामहामणेः।
सुदुर्लभं वचोबाणैस्तेजो यस्य विभाव्यते॥ २०६॥

अत्र वचःशब्देन गीःशब्दो लक्ष्यते, अत्र खलु न केवलं पूर्व-

---

शीघ्रम्, अतिपरिमितवर्णम् अल्पाक्षरम्, परमार्थतः स तु इत्यन्वयः। अत्र आद्य-वर्णद्वयमपभ्रंशविधया मुष्कव्यञ्जकत्वाद् व्रीडाजनकम्।

जुगुप्साश्लीलमाह—यः पूयते इति। सुरसरिद् गङ्गा तत्प्रधानतीर्थसार्थेत्यादि-रर्थः। परिशीलनम् अभ्यसनम्, कीलनं संस्कारदार्ढ्यम्। ऊर्जितानां बलिनाम् ऊर्जितं बलम्। अत्रेति, पूयं क्लेदः।

अमङ्गलाश्लीलमाह—विनयेति। अङ्ग सम्बोधने। यः तादृशः प्रसिद्धः विनयस्य वात्सल्यस्य च सततम् एककेतनम् एकाश्रयः अभवत् स कथम् अद्य तत्त्वे दीक्षा यस्य तथात्वं तदीयाभिप्रेतपदं गतः इत्यर्थः।

(१०) सन्दिग्धत्वमाह—कस्मिन्निति, न उत्तपते न वर्द्धते। अत्रेति। भूतपूर्ववृत्तौ चरट्प्रत्ययविधानादत्र चरट्प्रत्ययचरधात्वोः पदैकदेशयोः सन्देहः।

(११) नेयार्थत्वमाह—किमुच्यते इति। भूपालमौलिगतमालामहामणेः अस्य किम् उच्यते अतिमहत्त्वात् किमपि वक्तुं न शक्यते; यस्य तेजः वचोबाणैः गीर्बाणैः

---

(A) पूयशब्दो विकृतरुधिरवाचीति जुगुप्साजनकः।

---

1. 'तत्त्वदीक्ष्यताम्' इति पाठान्तरम्।

पदम् यावदुत्तरपदमपि पर्यायपरिवर्तनं न क्षमते, जलध्यादावुत्तरपदमेव वडवानलादौ पूर्वपदमेव।

(A)यद्यप्यसमर्थस्यैवाप्रयुक्तादयः केचन भेदाः, तथाप्यन्यैरालङ्कारिकै-

---

सुदुर्लभं विभाव्यते इत्यर्थः देवाधिकतेजस्कत्वात्। गीःशब्द इति, बाणपदपूर्ववर्त्तिनो [1]गीःशब्दस्य वचआदिपदैः परिवृत्त्यक्षमत्वात् देवत्वेन रूपेण समुदायशक्त्यभावात् लक्षणैवेति भावः। शब्दलक्षणा च गीःशब्दानुभवस्य दुर्वारत्वात्, तल्लक्षणयोपस्थितस्यापि तस्य नान्वयप्रतियोगित्वं किन्तु तदर्थस्यैवेत्यादिकं सर्वं 'वस्त्रवैदूर्ये'-त्यादिवाक्यगतनेयार्थदर्शितमनुसन्धेयम्। अत्र योगार्थेन देवतावाचकत्वात् नावाचकत्वप्रसक्तिरिति मन्तव्यम्[1]*। अत्र खल्विति। तेन गीःशर इति न भवति। उत्तरपदमेवेति, पर्यायपरिवर्त्तनं न क्षमते इत्यन्वयः। तेन वारिधिरित्यादयो भवन्ति, जलाशय इत्यादयस्तु समुद्रत्वेन रूपेण न भवन्ति। जलनिधिरित्यादौ तु उपसर्गमात्रमधिकं धाधातोस्त्वपरिवृत्तिरेव। वडवेति, तेन अश्वानल इति न भवति वडवाग्निरित्यादिकन्तु भवति। ननु अप्रयुक्तत्वासमर्थत्व-नेयार्थत्वावाचकत्वादीनां झटिति विवक्षितपदार्थबोधनासमर्थत्वेनोपाधिनैव असमर्थत्वमध्ये

---

(A) यद्यपीति, अयमर्थः स्फुटमुक्तः प्रदीपे, यथा—नन्वसमर्थत्वं विवक्षितार्थप्रतीतिसामर्थ्यविरह एवोच्यताम्, स च प्रसिद्ध्यभावात् समयाद्यभावाद्वा इत्यप्रयुक्तावाचकनिहतार्थादयोऽसमर्थभेदा एव भवितुमर्हन्तीति किमिति पृथङ्निर्दिष्टा इति चेत् तथ्यमात्थ, परं त्वन्यैरलङ्कारकारैर्भेदेन दर्शिता इति तथा निर्दिष्टाः। किञ्च वैजात्याभावेऽपि शिष्यबुद्धिवैशद्याय प्रभेदा वक्तव्या एव इत्यतोऽपि विभज्योक्ता इति।

---

1. गीःशब्दस्य परिवृत्त्यक्षमत्वात् वचःशब्दस्य तदबोधकत्वात् देवत्वेन रूपेण समुदायशक्त्यभावाच्च वचःशब्दे लक्षणैवेति भावः। गीःशब्दबोधस्य चानुभविकस्य दुरपह्नवत्वाद् गीःशब्द एव लक्षणा तेनैव तदर्थोपस्थितिरित्यतः अत्रापि अर्थोपस्थापकशब्दलक्षणात्वाल्लक्षितलक्षणैव। सर्वमन्यम् वस्त्रवैदूर्येत्यादौ दर्शितमनुसन्धेयम्। अत्र च देवतायां यौगिकशक्तिभ्रम इति नावाचकत्वम्। नापि वाचकत्वं बाणपदपूर्ववर्त्तिनो वचःशब्दस्य शक्तिसत्त्वेऽपि तत्राबोधकत्वात्' क। 'गीःशब्दस्य परिवृत्त्यक्षमत्वेन वचःशब्दस्य तदबोधकत्वात् देवत्वेन रूपेण समुदायशक्त्यभावाच्च न वचोबाणशब्दाद् देवोपस्थितिर्यौगिकशक्तेस्तु तत्राज्ञातायाः सत्त्वात्तद्भ्रमाभावात् नावाचकत्वम्, नापि तत्र लक्षणा शक्यार्थे तात्पर्यस्य लक्षणात्वाभावात्। न च योगार्थतावच्छेदकरूपेण लक्षणाया अभावेऽपि देवत्वेन तत्र लक्षणाऽस्तीति वाच्यम्, गीःशब्दानुभवबलेन गीःशब्द एवात्र लक्षणा, तेन शब्देनैव तदर्थोपस्थापने योगार्थसमुदायशक्तिभ्यां देवोपस्थितेः स्वार्थोपस्थापकशब्दलक्षणैव लक्षितलक्षणा रूढिप्रयोजनशून्या नेयार्था। सर्वमन्यत् 'वस्त्रवैदूर्यचरणै' रित्यत्र दर्शितमनुसन्धेयम्' ख।

विभागेन प्रदर्शिता इति भेदप्रदर्शनेनोदाहर्त्तव्या इति च विभज्योक्ताः ।

(७५) [१]प्रतिकूलवर्णम्[२]उपहत[३]लुप्तविसर्गं [४]विसन्धि [५]हतवृत्तम् ।

[६]न्यूना[७]धिक[८]कथितपदं [९]पतत्प्रकर्षं [१०]समाप्तपुनरात्तम् ॥ ५३ ॥

[११]अर्धान्तरैकवाचकम[१२]भवन्मतयोगम[१३]नभिहितवाच्यम् ।

[१४]अपदस्थपद[१५]समासं [१६]संकीर्णं [१७]गर्भितं [१८]'प्रसिद्धिहतम् ॥ ५४ ॥

[१९]भग्नप्रक्रम[२०]मक्रम[२१]ममतपरार्थं च वाक्यमेव तथा(A) ।

(१) रसानुगुणत्वं वर्णानां वक्ष्यते, तद्विपरीतं प्रतिकूलवर्णम् । यथा शृङ्गारे—

अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि माम् ।

(B)कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्त्तिमुद्धर ॥ २०७ ॥

---

प्रवेशसम्भवे किमर्थं पृथगुपादानमित्यत आह—यद्यपीति । 'उदाहर्त्तव्या' उदाहर्त्तुमुचिता ।

वाक्यमात्रदोषानाह—प्रतिकूलेति । एषां दोषाणामेकपदे असम्भवाद्वाक्यमात्रदोषत्वम् । उपहतविसर्गत्वं लुप्तविसर्गत्वं चेति दोषद्वयम्, न्यूनपदत्वमधिकपदत्वं कथितपदत्वञ्चेति दोषत्रयम् । अपदम् अस्थानं तत्स्थपदत्वं तत्स्थसमासत्वं चेति दोषद्वयम् । एभिर्दोषैर्युतस्य वाक्यस्य सम्बन्धाद् रसादिहतिस्तूक्तरीत्या द्रष्टव्या ।

(१) तद्विपरीतमिति, वैपरीत्यं च प्रकृतरसविरोधिरसनिष्ठगुणव्यञ्जनया । अकुण्ठेति । कूजितेन नायिकामुद्वेजयितुं कोकिलां प्रति कामिन उक्तिरियम् । आकण्ठं

---

(A) एषु वाक्यदोषेषु न्यूनपदकथितपदाभवन्मतयोगास्थानस्थपदाक्रमाः काव्याकाव्यसाधारणाः । केचित्तु अनभिहितवाच्यस्य न्यूनपदे अक्रमस्यापदस्थपदेऽन्तर्भावः (कर्त्तुं) शक्यः, एवमर्द्धान्तरैकवाचकसङ्कीर्णगर्भितानामपि अपदस्थपदतैव अल्पान्तरेण दोषान्तरत्वेऽतिप्रसङ्गादित्याहुरिति प्रदीपोद्द्योतयोः स्पष्टम् ।

(B) अकुण्ठ इति । कलकण्ठीति दूतीसम्बोधनम्, कम्बुः शङ्खस्तत्सदृशग्रीवाया नायिकायाः कण्ठे मां क्षणं कुरु तदालिङ्गनशालिनं कुर्वित्यर्थः । कण्ठस्यार्त्ति तदालिङ्गनौत्सुक्यरूपामुद्धर

---

1. 'प्रसिद्धिहत'मिति मुद्रितपुस्तकेषु पाठः ।

रौद्रे यथा—

देशः सोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिताः
क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः ।
तान्येवाहित[1]शस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे
यद् रामेण कृतं तदेव कुरुते [2]द्रोणात्मजः क्रोधनः ॥ २०८ ॥

अत्र हि विकटवर्णत्वं दीर्घसमासत्वं चोचितम्(A) ।

---

पूर्णमित्यन्वयः । कलकण्ठि कोकिले, कम्बुः त्रिरेखाः, तद्युक्तकण्ठ्याः नायिकायाः कण्ठे मां क्षणं कुरु त्वत्कूजनादेवं स्यादिति भावः । [3]अत्र टवर्गीयवर्णाः शृङ्गारे तत्प्रतिकूलवीरादिरसीयगुणव्यञ्जकत्वेन प्रतिकूलाः[3]* । प्रातिकूल्यञ्च समस्तपद्यव्यापकत्व एव अन्यथा तु श्रुतिकटुत्वमेवेति बोध्यम् । अत एवास्य वाक्यमात्रगामित्वनियमः । अत्र च वर्णपदं समासस्याप्युपलक्षणमित्यभिप्रायेण समासप्रातिकूल्येऽप्युदाहरति—रौद्र इति । पितृवधक्रुद्धस्य अश्वत्थाम्न उक्तिरियम् । रामेण भार्गवेण यत् कृतं क्रोधनः द्रोणात्मजः अद्य तत् कुरुते ; तच्च कुरुक्षेत्रे शत्रुशोणितैः सप्तह्रदपूरणम् । (B)पितृसम्बन्धकीर्त्तनं तद्वधे क्रोधोद्दीपनाय स्वस्य तद्वत् शौर्यख्यापनाय च । रामस्य या सामग्री सा ममाप्यस्तीत्याह—देश इति कुरुक्षेत्ररूप इत्यर्थः । क्षत्रादेवेति, तत्पितुर्जमदग्नेरपि कार्त्तवीर्येण केशग्रहणात् । तान्येवेति, अहितानां शत्रूणां शस्त्रस्य घस्मराणि भक्षकाणि अत एव गुरूणि यान्यस्त्राणि तान्येव ममापि सन्तीत्यर्थः । अत्रेति । विकटवर्णानामौचित्यमात्रमत्र दर्शितं न तूपात्तवर्णानामत्र प्रातिकूल्यं मध्यविधवर्णानामत्र प्रातिकूल्यानुकूल्ययोरेकस्या(प्य)भावात्, किन्तु दीर्घसमासाभाव एवात्र प्रतिकूलः बोध्यः, अवृत्तिर्मध्यवृत्तिर्वेत्यनेन वक्ष्यमाणस्य असमासस्य अल्पसमासस्य च शृङ्गारीयगुणव्यञ्जकत्वेन तद्विरुद्धरौद्ररसप्रातिकूल्यात् । समासाभावश्च समासप्रतियोगिकत्वेन समासतया तत्रैव परिगृहीतः । औचित्यमुदाहरणेन

---

अपहर इति केचित् । कण्ठार्त्तिः कण्ठपीडा सा च तद्बाहुलतास्पर्शाभावात् तदर्थमुच्चैः प्रलपनाद्वेति बोध्यम् ।

(A) उचितमिति । तथा च प्रतिकूलवर्णस्वरूपनिर्देशार्थमुक्तस्यानुकूल्यस्योदाहरणमिदं न दोषोदाहरणमिति भावः ।

(B) पितृसम्बन्धकीर्त्तनं द्रोणात्मज इत्यनेन ।

---

1. '-हेति-' इति मुद्रितपुस्तकेषु पाठः । 2. 'द्रौणायनिः' इति पाठान्तरम् । 3. 'अत्र टवर्गाः शृङ्गारप्रतिकूलाः' ख, 'अत्र टवर्गाः शृङ्गारप्रतिकूलवीभत्सौधीजोगुणव्यञ्जकाः' ग ।

यथा—

प्रागप्राप्तनिशुम्भशाम्भवधनुर्द्वेधाविधाविर्भवत्-

क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणात्।

उज्ज्वालः परशुर्भवत्वशिथिलस्त्वत्कण्ठपीठातिथि-

र्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते ॥ २०९ ॥

यत्र तु न क्रोधस्तत्र चतुर्थपादाभिधाने तथैव शब्दप्रयोगः।

(२-३) उपहत उत्वं प्राप्तो लुप्तो वा विसर्गो यत्र तत्। यथा—

धीरो विनीतो निपुणो वराकारो नृपोऽत्र सः।

यस्य भृत्या बलोत्सिक्ता भक्ता बुद्धिप्रभाविताः ॥ २१० ॥

(४) विसन्धि सन्धेर्वैरूप्यम्, विश्लेषोऽश्लीलत्वं कष्टत्वं च।

---

दर्शयति—यथा—प्रागिति। परशुरामस्य रामतर्जनमिदम्। मम उद्गतज्वालः परशुः त्वत्कण्ठरूपे पीठे क्षणात् अशिथिलोपविष्टः अतिथिः भवतु, अतिथेः पीठोपवेशनौचित्येन पीठरूपणम्। परशुः कीदृशः? निशुम्भः आमर्दनम्, प्राग् अप्राप्ततत्कस्य शाम्भवधनुषः द्वेधाविधया आविर्भवता क्रोधेन प्रेरितः यः भार्गवभुजः तेन अपविद्धः चालितः। येन अनेन परशुना देवः हरः खण्डपरशुः ख्याप्यते, अनेन परशुना प्रलयकाले जगत्खण्डनात् तथानामेत्यर्थः। खण्डः खण्डकः। चतुर्थपादे तु परशुहरावेवार्थ इत्यतस्तत्र क्रोधस्याव्यङ्ग्यत्वात् तत्र न तदुचितनिर्देश इत्याह—यत्र त्विति।

(२—३) उपहतविसर्गत्वं लुप्तविसर्गत्वं च एकदैवोदाहर्त्तुम् एकदैव व्याचष्टे—उपहतः उत्वमिति। द्वयमपि क्रमात् बहुशः पात एव दोष इति बोध्यम्। धीर इति। यस्य नृपस्य भृत्याः बलोत्सिक्तादयः। अत्र लोके, स एव नृपः धीरादिरित्यर्थः। बुद्धिप्रभाविताः बुद्धिप्रभाववन्तः इत्यर्थे इतच्। अत्र पूर्वार्द्धे विसर्गस्योपहतिः परार्द्धे तु घोषवति लोपः। स्वरे लोपं तु विसन्धावुदाहरिष्यति।

(४) विसन्धावुदाहर्त्तुं "वि"शब्दार्थमाह—सन्धेरिति। वैरूप्यमेव त्रिविधमित्याह—विश्लेष इत्यादि। 'विश्लेषः' सन्ध्यभावः। विश्लेषमुदाहरति—

तत्राद्यं यथा—

राजन् विभान्ति भवतश्चरितानि तानि
इन्दोर्द्युतिं दधति यानि रसातलेऽन्तः ।
धीदोर्बले अतितते उचितानुवृत्ते
आतन्वती विजयसम्पदमेषु भातः ॥ २११ ॥

यथा वा—

तत उदित उदारहारहारिद्युतिरुच्चैरुदयाचलादिवेन्दुः ।
निजवंश उदात्तकान्तकान्तिर्वत मुक्तामणिवच्चकास्त्यनर्घः ॥२१२॥

संहितां न करोमीति स्वेच्छया सकृदपि दोषः । (A)प्रगृह्यादिहेतुकत्वे त्वसकृत् ।

---

आद्यं यथेति । हे राजन्, भवतः तानि चरितानि विभान्ति, यानि अन्तः रसातले रसातलमध्ये इन्दोर्द्युतिं दधति नैर्मल्यात्; तथा भवतः धीदोर्बले एषु लोकेषु विजयसम्पदम् आतन्वती भातः । कीदृशे ? उचितानुवृत्ते उचितोत्तरानुबन्धे । एष्वित्यत्र एतयेति पाठे विजयसम्पदमातन्वती उचिते अनुवृत्ती स्वस्वानुवृत्तिद्वयमेत्य भात इत्यर्थः । अत्र पूर्वार्द्धे तानि इन्दोरित्यत्र विसन्धिः स्वेच्छयैव कृतः, परार्द्धे तु द्विवचनस्य सन्धिनिषेधः प्रगृह्यहेतुकः, बहुशः पाते तु सोऽपि दोषो बन्धशैथिल्यकारित्वात् । स्वरे विसर्गस्य अयादेर्यकारस्य च लोपे विश्लेषमुदाहरति—तत उदित इति । ततः पूर्वकथितात् पितुः उच्चैः उदयाचलात् इन्दुरिव अयम् उदारहारेण हारिद्युतिः इन्दुस्तु उदारहारवत् हारिद्युतिः, निजवंशे निजकुले अनर्घः चकास्ति मुक्तामणिवत्, सोऽपि हि निजवंशे स्वोत्पादकवेणौ अनर्घः चकास्ति, अयं मुक्तामणिश्च उदात्ता उद्भटा कान्ता कमनीया कान्तिर्यस्य तादृशः । अत्र पूर्वश्लोकपूर्वार्द्धे तानि इन्दोरित्यत्र स्वेच्छया सकृत्पातादपि, तदीयपरार्द्धे परश्लोके च बहुशः पातादेव दोष इत्याह—संहितामिति । 'संहिता' सन्धिः । 'प्रगृह्यं' प्रकृतिवद्भावः, आदिना सन्धिनिषेधपरिग्रहः ।

---

(A) प्रगृह्येति 'ईदूदेद् द्विवचनं प्रगृह्यम्' इति ( १।१।११ ) पाणिनिसूत्रेण द्विवचननिष्पन्नानामीदूदेतां प्रगृह्यसंज्ञोक्ता ।

वेगादुड्डीय गगने चलण्डामरचेष्टितः।
अय[1]मुत्तपते पत्री ततोऽत्रैव रुचिङ्कुरु(A) ॥ २१३ ॥

अत्र सन्धावश्लीलता।

उर्व्यसावत्र तर्वाली मर्वन्ते चार्ववस्थितिः।
नात्रर्जु युज्यते गन्तुं शिरो नमय तन्मनाक् ॥ २१४ ॥

(५) हतं लक्षणानुसरणेऽप्यश्रव्यम् अप्राप्तगुरुभावान्तलघु रसाननुगुणं च वृत्तं यत्र तद् हतवृत्तम्। क्रमेणोदाहरणम्—

अमृतममृतं कः सन्देहो मधून्यपि नान्यथा
मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम्।

---

जुगुप्साव्रीडाजनकसन्धिमेकदैवाह—वेगादिति। उड्डीय वेगात् चलन् इत्यन्वयः। डामरम् उद्भटम्। उत्तपते उत्तापं गृह्णाति, पत्री पक्षी। अत्रेति। चलण्डामरेत्यत्र अपभ्रंशविधया दीर्घपुरीषार्थकस्य लण्डाशब्दस्य सन्धावुत्पत्त्या जुगुप्सा। रुचिङ्कुरु इत्यत्र चिङ्कुशब्दोत्पत्त्या व्रीडा। अमङ्गलाश्लीलसन्धिस्तु 'भजतेऽसौ ध्रुवमृत'-मित्यत्र बोध्यम्। अत्र हि असौ ऋतं सत्यं ध्रुवं भजते इत्युक्तम्, मृतं भजते इति सन्धिवशादमङ्गलम्।

कष्टसन्धिमाह—उर्व्यसाविति। अत्र मरुभूम्यन्ते असौ उर्वी महती तरूणाम् आली श्रेणी चारुः अवस्थितिर्यस्याः तादृशी, अतः अत्र ऋजु यथा स्यात् तथा गन्तुं न युज्यते तत् तस्मात् मनाक् अल्पम् शिरः नमय।

(५) हतवृत्तमुदाहर्त्तुं हतपदार्थं व्याचक्षाणो वृत्तपदार्थं अन्वाययति—हतमिति। लक्षणं वृत्तस्य, वृत्तश्च छन्दः; लक्षणानुसरणेऽपीत्यपिशब्दात् तदननुसरणे तु सुतरामिति बोध्यम्। अप्राप्तगुरुभावः अन्तलघुर्यत्र तादृशम, गुरुभावाप्राप्तिश्च गुरुकार्यबन्ध-

---

(A) अत्र बालबोधिनी—अत्र चलण्डामरेति रुचिङ्कुर्विति च सन्निकर्षरूपसन्ध्युपस्थापिताभ्यां लण्डा-चिङ्कुशब्दाभ्यां पुंव्यञ्जन-योन्यङ्कुरयोः प्रतीतिरिति अश्लीलः सन्धिः। काशीदेशभाषायां लण्डाशब्देन शिश्नस्याभिधानात् लण्डेति जुगुप्साव्यञ्जकः। नाटदेशभाषायां चिङ्कुशब्देन योन्यग्राभिधानात् चिङ्किति व्रीडाव्यञ्जक इति चन्द्रिकादौ स्पष्टम्। काश्मीरदेशे डुड्डीलण्ड-चिङ्कुशब्दा वराङ्ग(योनि)मेढ्र(शिश्न)योनिमणि(योन्यन्तर्गताङ्कुर)वाचका इति जयन्तभट्टकृतदीपिकायामपि स्पष्टमिति।

---

1. '-मुत्पतते' इति क्वचित् पाठः।

सकृदपि पुनर्मध्यस्थः सन् रसान्तरविज्जनो
वदतु यदिहान्यत् स्वादु स्यात् प्रिया[1]रदनच्छदात् ॥२१५॥

अत्र यदिहान्यत् स्वादु स्यादित्यश्रव्यम् ।

यथा वा—

जं परिहरिउं तीरइ मणअं पि ण सुन्दरत्तणगुणेण ।
अह णवरँ जस्स दोसो पडिपक्खेहिं पि पडिवण्णो ॥२१६॥

अत्र द्वितीयतृतीयगणौ सकारभकारौ ।

(A)विकसितसहकारभारहारिपरिमलगुञ्जितपुञ्जितद्विरेफः ।
नवकिसलयचारुचामरश्रीर्हरति मुनेरपि मानसं वसन्तः ॥२१७॥

---

दार्ढ्यस्याकरणं बोध्यम् । अश्रव्यवृत्तत्वमुदाहरति—अमृतममृतमिति । अमृतादिकं अमृतादिकमेव ; तथाऽपि रसस्य अन्तरवित् न्यूनाधिकत्ववित् जनः मध्यस्थः सन् सकृदपि वदतु, इह लोके यद्वस्तु प्रियारदनच्छदात् अन्यत् स्वादु स्यादित्यर्थः । (B)अत्रेति हाकारे यतिरत्र अश्राव्या । स्वरसन्धौ पदमध्येऽपि यतेर्लक्षणानुसरणमस्ति तथाऽप्यश्रव्यत्वम् । गणसान्निध्यकृतमश्रव्यत्वमाह—यथा वा जं परिहरिउं इति ।

यः परिहर्तुं तीर्यते मनागपि न सुन्दरत्वगुणेन ।
अथ केवलं यस्य दोषः प्रतिपक्षैरपि प्रतिपन्नः ॥ इति संस्कृतम्

सुन्दरत्वगुणेन हेतुना मनागपि यः परिहर्तुं न तीर्यते न पार्यते इत्यर्थः, अथ पक्षान्तरे यस्य दोषोऽपि केवलं प्रतिपक्षैरेव प्रतिपन्नः नास्माभिरित्यर्थः । नवरशब्दः केवले देशी । अत्रेति । हरिउं इति द्वितीयगणः अन्तगुरुः सकारपरिभाषितः, तीरइ इति तृतीयगण आदिगुरुर्भकारः अनयोः सान्निध्यम् अश्रव्यं तदभियुक्ताना-मनुभवगम्यम् ।

अप्राप्तगुरुभावान्तलघु उदाहरति—विकसितेति । विकसितस्य सहकारभारस्य

---

(A) विकसितेति, परिमलपुञ्जितगुञ्जितेति पाठे विकसितस्य सहकारभारस्य आम्रमुकुल-समूहस्य, 'द्विहीनं प्रसवे सर्वमि'ति कोषात्, हारिभिः परिमलैः पुञ्जिताः एकत्र समाहताः गुञ्जिताः गुञ्जनशीलाः द्विरेफाः भ्रमरा यत्र तादृश इत्यर्थः । शेषं सुगमम् । पुष्पिताग्रा वृत्तम् ।

(B) प्रदीपकारास्तु 'अत्र हरिणीच्छन्दसि षष्ठे दशमे च यतिरुचिता चतुर्थे तु पादे तद्भङ्ग इत्यश्रव्यता' इति दोषमुपपादयन्ति ।

---

1. '-दशन-' इति पाठान्तरम् ।

अत्र हारिशब्दः, हारिप्रमुदितसौरभेति पाठो युक्तः।

यथा वा—

अन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा
सम्भाराः खलु तेऽन्य एव विधिना यैरेष सृष्टो युवा।
श्रीमत्कान्तिजुषां द्विषां करतलात् स्त्रीणां नितम्बस्थलाद्
दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च ॥२१८॥

अत्र 'वस्त्राण्यपि' इति पाठे लघुरपि गुरुतां भजते।

---

हारिभिः परिमलैः पुञ्जितं गुञ्जितं येषां तादृशा द्विरेफाः यत्र, नवकिसलयरूपैः चारुचामरैः श्रीश्च यत्र, वसन्तस्तादृशः मुनेरपि मानसं हरतीत्यर्थः। अत्र हारि इत्यत्र पादान्तलघो-(A)र्गुरुत्वेऽपि बन्धदार्ढ्यरूपगुरुकार्यकारित्वं नास्ति पुष्पिताग्रायां प्रथमतृतीयचरणयो-रतथात्वात्, अतः पाठं परिवर्त्तयति—हारिप्रमुदितेति। अत्र पाठे विकसितसहकार-भारेषु हारिणश्च ते प्रमुदिताश्चेति समासे, तादृशाश्च ते सौरभेण पुञ्जिताश्चेति पुनः समासे (B)तादृशा द्विरेफा यत्रेति विग्रहः। शार्दूलविक्रीडितेऽप्युदाहरति—यथा वा अन्या इति। अत्र यैरित्यत्र यद्भवगुणरत्नयन्मृत्सहितैरिति शेषः, तदैव तत्पदत्रयाकाङ्क्षा-पूरणात्; तथाच यद्भवगुणरत्नयन्मृत्सहितैः यैः सम्भारैः एष युवा सृष्टः ताः गुणरत्न-रोहणभुवोऽन्याः सा मृच्च अन्यैव धन्या, ते सम्भाराश्च खलु अन्य एव विलक्षणा इत्यर्थः। यत्र यूनि दृष्टे सति द्विषां करतलात् अस्त्राणि स्त्रीणां नितम्बस्थलात् वस्त्राणि च पतन्तीत्यन्वयः। श्रीमदित्यादि मूढेत्यादि च उभयेषामेव विशेषणम्; मोहश्च एकत्र भयेन अन्यत्र कामेन। अत्रेति संयोगात् परत्वेऽपि बन्धदार्ढ्यमिति भावः। 'गुरुत्वं' गुरुकार्यकारित्वम्।

---

(A) गुरुत्वेऽपीत्यपिशब्दात् गुरुत्वाभावपक्षः सूचितः। अत एव 'यत्तु पादान्ते लघोरपि गुरुभाव उक्तस्तत् सर्वत्र द्वितीयचतुर्थपादविषयम्, प्रथमतृतीयपादविषयन्तु वसन्ततिलकादे-रेवे'ति दर्पणकाराः। वसन्ततिलकादेरित्यत्र आदिपदेन इन्द्रवज्रोपेन्द्रवज्रोपजातय एव गृह्यन्ते इति बहवः।

(B) अत्र तादृशा इत्यनन्तरमादर्शपुस्तकेषु 'गुञ्जिताः' इति लिपिकृत्प्रमादादेवापतितम् 'प्रमुदितसौरभपुञ्जितद्विरेफः' इति द्वितीयपादे गुञ्जितशब्दस्यापि निवेशे वृत्तभङ्गापत्तेरिति बोध्यम्।

हा नृप हा बुध हा कविबन्धो विप्रसहस्रसमाश्रय देव।
मुग्धविदग्धसभान्तररत्न क्वासि गतः क्व वयं च तवैते ॥२१९॥

हास्यरसव्यञ्जकमेतद् वृत्तम्।

(६) न्यूनपदं यथा—

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥२२०॥

अत्रास्माभिरिति 'खिन्ने' इत्यस्मात् पूर्वम् 'इत्थ'मिति च।

(७) अधिकं यथा—

स्फटिकाकृतिनिर्मलः प्रकामं प्रतिसंक्रान्तनिशातशास्त्रतत्त्वः।
[1]अविरुद्धसमर्थितोक्तियुक्तिः[1]* प्रतिमल्लास्तमयोदयः स कोऽपि ॥२२१॥

---

रसाननुगुणवृत्तमुदाहरति—हा नृपेति। राज्ञि मृते शोचतां तदिष्टानामियमुक्तिः। मुग्धानां सुन्दरीणां विदग्धसभानाम् अन्तरे मध्ये रत्न इति सम्बोधनम्। दोधकमेतत् छन्दः [2]प्रकृतस्य करुणरसस्य विरोधि, हास्यरसव्यञ्जकत्वात्[2]*।

(६) न्यूनपदमिति, अध्याहारपूरणीयन्यूनपदकत्वं तत्त्वम्। वक्ष्यमाणानभिहितवाच्ये तु अध्याहारस्यैवासम्भवात् इतो भेदः(A)। तथाभूतामिति, व्याख्यातमिदं प्राक्। अत्रेति, गुरोः स्वविषयकखेदानौचित्यप्रदर्शने तत्प्रयुक्तदुःखभागित्वमात्मनो दर्शयितुमुचितम्; तथाच वल्कलधरणादिदुःखस्य स्वनिष्ठत्वबोधनमस्मत्पदसत्त्व एव भवति; एवं दुःखानां तत्प्रयुक्तत्वलाभश्च खिन्न इत्यस्मात् पूर्वम् इत्थमिति करण एव भवति, अतस्तत्पदद्वयं न्यूनमित्यर्थः।

स्फटिकेति। सः पुरुषः कोऽपि विलक्षणः। कीदृशः? स्फटिकाकारवत् निर्मलः ज्ञाननैर्मल्यात्, अत एव प्रतिसंक्रान्तं प्रतिबिम्बितं निशातं निर्मलं शास्त्रतत्त्वं

---

(A) न्यूनपदत्वे वाचकपदस्यैव न्यूनत्वम्, अनभिहितवाच्यत्वे तु द्योतकपदस्येति भेद इत्यन्ये।

---

1. 'अविरुद्धसमन्वितोक्तियुक्तिः', 'अविरुद्धसमर्थितोक्तियुक्तः' इति पाठान्तरे। 2. 'हास्यरसविरोधिनः करुणरसस्य विरोधि' क, 'हास्यरसविरुद्धकरुणरसाननुगुणम्' ग।

अत्र आकृतिशब्दः। यथा वा—

इदमनुचितमक्रमश्च पुंसां
यदिह जरास्वपि [1]मान्मथो विकारः।
यदपि च न कृतं नितम्बिनीनां
स्तनपतनावधि जीवितं रतं वा ॥२२२॥

(A)अत्र कृतमिति। कृतं प्रत्युत प्रक्रमभङ्गमावहति। तथा च 'यदपि च न कुरङ्गलोचनानाम्' इति पाठे निराकाङ्क्षैव प्रतीतिः।

---

यत्र तादृशः। अविरुद्धं यथा स्यात् तथा समर्थिता उक्तियुक्तिर्येन तादृशः प्रतिमल्लानाम् अस्तमयः अस्तगमनं यत्र तादृशः, अत एव तेषु अदयः; अस्तमयस्य उदयो यस्मादिति व्याख्याने तु उदयपदमप्यधिकं स्यात्। अत्रेति, स्फटिकाकृतेः स्फटिकानतिरिक्तत्वात्। चक्रवर्त्ती तु—आकृतिः संस्थानम्, तच्च संयोगरूपमेव तत्र च नैर्मल्यबाधात् अधिकपदत्वमित्याह, तन्न; बाधे अभवन्मतयोगदोषस्यैव प्रसक्तेः, आकृतिपदस्य शरीरवाचकत्वेन तत्र तदबाधाच्च, अन्यथा प्रभातवाताहतिकम्पिताकृतिरित्यत्र संयोगे कथं कम्पः। प्रपञ्चयति—यथा वा इदमिति। कस्यचित् स्त्रीपुंसयोश्चरित्रानौचित्यकथनमिदम्। इह जगति पुंसां जरास्वपि यत् मान्मथो विकारः इदम् अनुचितम्, सामर्थ्याभावात्, अक्रमश्च शैशवे विद्या यौवने धनं वनितादिभोगश्च वार्द्धके धर्म इत्येवं क्रमस्य विरोधि च, तद्विकारस्याधर्मोत्पादकत्वात्। स्त्रीणामपि चरित्रानौचित्यमाह—यदपि चेति। न कृतम् अर्थात् विधिना, तदप्यनुचितमित्यर्थः अवधिरत्र उत्तरावधिः, तदुत्तरं मरणस्य रतित्यागस्यैव वा उचितत्वादिति भावः। अत्रेति 'कृतं' व्यर्थं; न इत्यनेनैव स्त्रीचरित्रानौचित्यलाभात्। प्रत्युतेति पुंधर्मानौचित्यकथनानन्तरं स्त्रीधर्मानौचित्यकथनोपक्रमस्यैव यदपि चेति चकारेण लाभः, विधिकृतत्वानौचित्यकथनात्तु तद्भङ्ग इत्यर्थः। पाठमदुष्टं रचयति—यदपि चेति। 'निराकाङ्क्षा' कथमिदमदुष्टं स्यादित्याकाङ्क्षारहिता।

---

(A) अत्र 'निष्प्रयोजनशब्दश्रवणेन श्रोतुर्वैमुख्यं दूषकताबीज'मिति प्रदीपकाराः।

---

1. 'मान्मथाः विकाराः' इति मुद्रितपुस्तकपाठः।

(८) कथितपदं यथा—

अधिकरतलतल्पं कल्पितस्वापलीला
परिमिलननिमीलत्पाण्डिमा गण्डपाली ।
सुतनु कथय कस्य व्यञ्जयत्यञ्जसैव
स्मरनरपतिलीलायौवराज्याभिषेकम् ॥२२३॥

अत्र लीलेति ।

(९) पतत्प्रकर्षं यथा—

कः कः कुत्र न घुर्घुरायितघुरीघोरो घुरेत्सूकरः
कः कः कं कमलाकरं विकमलं कर्तुं करी नोद्यतः ।
के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः
सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्त्तते ॥२२४॥

---

(८) कथितपदमिति, अनुप्रासाद्युत्कर्षानाधायकत्वे सति कथितपदपुनः-कथनं तत्त्वम् । अधिकरतलेति । करतले गण्डं कृत्वा चिन्तयन्तीं प्रति कस्यचिदुक्तिरियम् । हे सुतनु, तव गण्डपाली गण्डदेशः करतलरूपे तल्पे कल्पितस्वापलीला सती कस्य यूनः स्मरनरपतिलीलायौवराज्ये अभिषेकं व्यञ्जयति अञ्जसैव तत् कथय, स्मरनरपतेर्हि युवत्युन्मादनं लीला, नरपतिकार्यञ्च युवराजेन क्रियते तत्स्थानीयत्वात्, अतस्तादृशयौवराज्ये कः अभिषिक्तः, कस्तव उन्मादक इत्यर्थः । गण्डपाली कीदृशी ? परिमिलनेन करतलघर्षणेन निमीलन् पाण्डिमा विरहपाण्डुत्वं यस्याः तादृशी, घर्षणाद् रक्तिमोदयेन पाण्डिमनिमीलनम् । अत्रेति, अत्यन्तव्यवधानेन अनुप्रासस्याप्यभावात् ।

(९) पतत्प्रकर्षमिति, पादत्रयरूढस्यानुप्रासप्रकर्षस्य चतुर्थपादे पातस्तत्त्वम्, क्रमशो वर्द्धिताकाङ्क्षया विषयीकृतस्य तत्र पाते वैरस्याधानात् वृक्षाग्रात् पतन इव । एकद्विपादारूढतत्पाते तु वृक्षमूलात् पतन इव न तथा । कः कः कुत्रेति । पञ्चाननः सिंहः यतः सिंह्यां स्नेहाधीनविलासेन बद्धवसतिः कृतस्थितिः अद्य वर्त्तते अतः कः कः पशुः कं कं स्वैरविहारं न कुर्यादिति निगूढार्थः । घुर्घुरायिता घर्घुरशब्दकारिणी घुरी नासिका तया घोरः घुरेत् पर्यटेत् ।

(१०) समाप्तपुनरात्तं यथा—

केङ्कारः स्मरकार्मुकस्य सुरतक्रीडापिकीनां रवो
झङ्कारो रतिमञ्जरीमधुलिहां लीलाचकोरीध्वनिः।
तन्व्याः कञ्चुलिकापसारणभुजाक्षेपस्खलत्कङ्कण-
क्वाणः प्रेम तनोतु वो (A)नववयोलास्याय वेणुस्वनः ॥२२५॥

(११) द्वितीयार्धगतैकवाचकशेषप्रथमार्धं यथा—

मसृणचरणपातं गम्यतां भूः सदर्भा
विरचय सिचयान्तं मूर्ध्नि घर्मः कठोरः।

(१०) समाप्तेति, क्रियाकारकभावेन अन्वये समाप्तेऽपि विशेषानाधायक-विशेषणानुरोधेन विशेष्यानुषङ्गस्तत्त्वम्। विशेषणस्य विशेषाधायकत्वे तु न दोषः। तच्चाग्रे दर्शयिष्यामः। केङ्कार इति। कामिनः कामिष्वियमाशीः। कामुकेन कामिन्याः स्तनपिधानकञ्चुकापसारणे यस्तस्या भुजाक्षेपः तत्र स्खलतां चञ्चलानां कङ्कणानां क्वाणः ध्वनिः वः प्रेम तनोतु; युष्माकमप्येवं भावः स्यादित्यर्थः। तत्र क्वाणे उद्दीपकान्तराणि रूपयति केङ्कार इति, अव्यक्तानुकरणमिदम्। सुरतेति तत्-क्रीडोद्दीपनार्थं पोषितानां पिकीनामित्यर्थः। झङ्कार इति रतिरेव उत्तरोत्तरं विकसत्वात् मञ्जरी तदुद्दीपकमधुलिहामित्यर्थः। तथा लीलार्थं पोषितानां चकोरीणा-मित्यर्थः। अत्र तनोतु व इत्यन्तेन समापितेऽपि वाक्यार्थे नववयसो लास्यार्थस्य वेणुस्वनस्य रूपणार्थं विशेष्यस्य क्वाणस्यानुषङ्गः। स चात्र नाकाङ्क्षितः उद्दीपक-रूपणाकाङ्क्षाया बहूद्दीपकरूपणेनैव निवृत्तत्वात्, वेणुस्वनरूपणेन तदधिकविशेषाना-धानात्, विशेषाधायकत्वे तु तद्विशेषाधानार्थमेव आकाङ्क्षोत्थापनात् न दोषः। यथा 'उअ णिच्चल णिप्पन्दा' इत्यादौ अप्रातोपमालङ्काररूपविशेषाधानार्थम् उत्थापितया आकाङ्क्षया बलाकानुषङ्गः। यथा वा—

'अद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः'

इत्यत्र स्तनवेपथुजननार्थम् आकाङ्क्षितस्य प्रमाणाधिकत्वरूपविशेषस्याधानात् श्वासानुषङ्गः। एवमन्यत्र स्वयं विचार्यम्।

(११) अर्द्धान्तरैकवाचकपदार्थं व्याचष्टे—द्वितीयार्द्धेति, अर्द्धान्तरं प्रथमार्द्धतो भिन्नं द्वितीयार्धं तद्गतम् एकं वाचकं पदं शेषं समापकं यस्य वाक्यस्य तत् तथा,

(A) नवं वयो यौवनं तदेव पक्षी तस्य लास्याय नृत्यायेत्यर्थः।

तदिति जनकपुत्री लोचनैरश्रुपूर्णैः
पथि पथिकवधूभिर्वीक्षिता शिक्षिता च ॥२२६॥

(१२) अभवन् मतः इष्टः योगः सम्बन्धो यत्र तत्। यथा—

येषां तास्त्रिदशेभदानसरितः पीताः प्रतापोष्मभि-
(A)र्लीलापानभुवश्च नन्दनवनच्छायासु यैः कल्पिताः।
येषां हुंकृतयः कृतामरपतिक्षोभाः क्षपाचारिणां
किं तैस्[1]तत्परितोषकारि विहितं किंचित्प्रवादोचितम् ॥२२७॥

---

पूर्वार्द्धवाक्यीयम् एकं पदं यदि द्वितीयार्धे पततीत्यर्थः ; द्वित्रिपदपाते तु न दोषः कविसम्प्रदायस्य तथात्वे वैरस्यानाधानात्। मसृणेति। पथि जनकपुत्री पथिकवधूभिः अश्रुपूर्णैः लोचनैः वीक्षिता इति शिक्षिता च। किं शिक्षितेत्यत्र आह—मसृणेति। यतः भूः सदर्भा तत् तस्मात् अल्पचरणपातं यथा स्यात्तथा गम्यताम्। तथा यतः घर्मः सूर्यरश्मिः कठोरः तत् तस्मात् मूर्ध्नि सिचयस्य वस्त्रस्य अन्तं विरचयेति। अत्र पूर्वार्द्धवाक्यीयं तत्पदं परार्द्धे पतितम्। अत्र तत्पदस्य पूर्वार्द्धेऽन्वयाभिप्रायेणैव इदमुदाहरणं दूषितम्। यदि तु तदिति तदेतत् शिक्षितेत्येवं परार्द्ध एवान्वयस्तदा नेदमुदाहरणं किन्तु उदाहरणान्तरमेव अन्वेष्टव्यम्। यथा—

तस्याः कुचौ मदनभूपनिधानकुम्भौ
तद्रक्षणाय तनुलोमलताभुजङ्गी।
जागर्त्ति तां नखमणीभिरवीर्ययित्वा
केनापि तौ परमभाग्यवताऽद्य लब्धौ ॥ इति।

अत्र जागर्त्तीति परार्द्धगतम्। एतां ध्रुवं नखमणीभिरिति तु अदुष्टः पाठः।

(१२) अभवन्मतयोगपदार्थं व्याचष्टे—अभवन्निति विवक्षितान्वयासम्भव इत्यर्थः। स च कचिन्निराकाङ्क्षतया क्वचिदयोग्यतया। तथा वाच्यार्थयोरिव क्वचिद् व्यङ्ग्यार्थयोरपि तदसम्भवो बोध्यः। येषामिति। लङ्कादाहे सति वीरराक्षसानधिक्षिपतः कस्यचिदुक्तिरियम्। येषां क्षपाचारिणां प्रतापोष्मभिः ताः प्रसिद्धाः त्रिदशेभस्य ऐरावतस्य दानसरितः मदजलनद्यः पीताः शोषिताः, यैः क्षपाचारिभिः नन्दनवन-

---

(A) लीलेति। यैः नन्दनवने याः छायाः तासु स्थानानि लीलापानोपयोगीनि कृतानीत्यर्थः। एवं च षष्ठीसमासाभावात् छायाशब्दस्य न क्लीबत्वापत्तिरिति बोध्यम्।

---

1. '-स्तत्-' इति क्वचित् पाठः।

अत्र "गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्यात्" । ( जै० अ० ३ पा० १ अधि० २२ सू० २२, ) इत्युक्तनयेन यच्छब्दनिर्देश्यानामर्थानां परस्परमसमन्वयेन यैरित्यत्र विशेष्यस्याप्रतीतिरिति । 'क्षपा चारिभिः' इति पाठे युज्यते समन्वयः ।

---

तरुच्छायासु लीलया पानस्य भुवः उत्पत्तयः कृताः, येषां क्षपाचराणाञ्च हुङ्कृतयः कृतामरपतिक्षोभाः इन्द्रक्षोभकाः तैः तस्य वारणस्य परितोषकारि स्वीयख्यात्युचितं किञ्चित् कर्म किं विहितम् अपि तु नेत्यर्थः । अत्र यैरित्यस्य विशेष्यतया षष्ठ्यन्त-पदार्थानां क्षपाचारिणाम् अन्वयः निराकाङ्क्षत्वादसम्भवीति प्रतिपादयितुं परोक्तनयं दर्शयति—अत्र गुणानामिति । 'गुणानां' विशेषणानाम्, 'परार्थत्वात्' विभक्ति-भेदेन विशेष्यतो विभक्तिभेदघटितार्थभेदात्, असम्बन्धः विशेष्येण सममभेदान्वया-भाव इत्यर्थः ; 'समत्वात्' समविभक्तिकत्वात् 'स्यात्' अभेदान्वयः स्यादित्यर्थः । ननु विशेष्यविशेषणयोरन्वय एव समविभक्तिकत्वनियमः विशेषणानां परस्परमन्वये तु नायं नियम इत्यतो विशेषणानां यत्पदार्थानां परस्परमन्वयोऽस्तु इत्यत आह—यच्छब्देति, असमन्वये नियते सतीत्यर्थः । तथाच प्रकृते दोषं घटयति—यैरित्यत्रेति, क्षपाचारिणां षष्ठ्यन्तपदार्थत्वेन तृतीयान्तयत्पदार्थविशेष्यत्वासम्भवा-दित्यर्थः । केचित्तु 'गुणानां' विशेषणानां, 'परार्थत्वात्' विशेष्यान्वयबोधजनकत्वात् 'असम्बन्धः' परस्परमनन्वयः स्यात् ; अत एव अत्र हेतुः समत्वादिति, विशेष्या-काङ्क्षासाम्यादिति उक्तनयेन यच्छब्दनिर्देश्यविशेषणानां परस्परमसमन्वये नियते सतीत्यर्थः इति व्याचक्षते, तन्तु न रुचिरम् ; यैरित्यत्र विशेष्याप्रतीतेर्हेतुत्वेन यच्छब्द-निर्देश्यविशेषणानां परस्परानन्वयकथनासङ्गतेः विभक्तिभेदस्यैव तद्धेतुत्वात् । न च क्षपाचारिणामित्यत्र विभक्तिव्यत्ययेन क्षपाचारिभिरिति करणाद् यैरित्यत्र विशेष्य-प्रतीतिरस्तु इति वाच्यम्, पूर्वापरयोरव्यत्यये मध्यव्यत्ययस्याव्युत्पत्तेः । क्षपा-चारिभिरितीति । न च तथा पाठे येषामित्यत्र अनन्वयस्तदवस्थ एव इति वाच्यम्, क्षपाचारिभिरित्यस्य तैरित्यत्रैव विशेष्यत्वात्, यत्पदत्रयार्थबोधस्तु आपाततो निर्विशेष्यक एव तत्पदादेव पश्चाद्विशेष्यलाभात्, यथा यत्र यत्र धूमः स देशो वह्निमानित्यत्र [1]देशस्य यत्पदार्थविशेष्यतया प्रतीतिः । अत्र मध्येऽपि व्यत्यय-

---

१. 'निर्विशेष्यकयत्पदार्थस्यापाततः प्रतीतावपि विशेषणविशेष्यस्य यत्पदार्थेऽपि विशेष्यतया प्रतीतिः' क।

यथा वा—

त्वमेवंसौन्दर्या स च रुचिरतायाः परिचितः
कलानां [1]सीमान्तं परमिह युवामेव भजथः ।
अपि द्वन्द्वं दिष्ट्या तदिति सुभगे संवदति वाम्
अतः शेषं यत् स्याज्जितमिह तदानीं गुणितया ॥ २२८ ॥

अत्र यदित्यत्र तदिति तदानीमित्यत्र यदेति वचनं नास्ति । 'चेत् स्यात्' इति युक्तः पाठः । यथा वा—

[2]संग्रामाङ्गणसङ्गतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद् यत् समासादितम् ।

---

मभ्युपगच्छतां मते अपरितुष्यन्नाह—यथा वा त्वमेवमिति । योग्यवरप्राप्तां वधूं प्रति कस्यचिदुक्तिरियम् । एवं सौन्दर्यं यस्याः त्वं तादृशी, स च तव वरः रुचिरतायाः सौन्दर्यस्य परिचितः सम्बन्धी, कलानां वैदग्धीनां सीमान्तं परां सीमां परं केवलम् इह लोके युवामेव भजथः । हे सुभगे, अपि सम्भावनायाम् ; तत् तस्मात् वां युवयोः द्वन्द्वं दिष्ट्या भाग्येन संवदति परस्परयोग्यं भवति, अतः शेषं अतः परं यत् स्यात् अर्थात् उत्तरोत्तरमधिकाधिकं प्रेम, तदानीं गुणितया जितं गुणिताया एवोत्कर्ष इत्यर्थः । अत्र यदिति पदं न कालार्थकं तदानीमिति तु कालार्थकम्, अनयोरभेदान्वयो न सम्भवतीति मनसिकृत्य अनयोरनन्वयेन एतद्दोषं दर्शयन् खण्डयति—अत्रेति । यत् तदानीम् इत्यनयोर्नान्वयः, किन्तु अतः शेषं यत् यदा स्यात् तदानीं गुणितया जितमित्यन्वयेन "यत्" इत्यस्य आकाङ्क्षापूरकं "तत्" इति ; तदानीमित्यस्य आकाङ्क्षापूरकं यदेति स्यात्, तच्च "तद्" "यदा" इति पदद्वयाभावान्न सम्भवतीत्याह— अत्र यदित्यत्रेति । न च तयोरध्याहारः स्यादिति वाच्यं "यत् तदानीम्" इति पदद्वयसत्त्वे अन्यान्वये तात्पर्यस्याग्रहात् ; अन्यथा जलहृदे वह्निरिति वाक्यमपि नायोग्यं स्यात् जलहृदे जलं पर्वते वह्निरित्यन्वयस्य अध्याहारेण सम्भवात् । चेत् स्यादितीति चेच्छब्दस्य यद्यर्थकत्वेन तदानीमित्यनेन तदाकाङ्क्षापूरणसम्भवादिति भावः । पूर्ववाक्योत्थापिताकाङ्क्षासत्त्वे तत्पूरकस्य परवाक्यार्थस्य अनन्वयरूपमपि इमं दोषमुदाहरति—यथा वा संग्रामेति । हे देव संग्रामाङ्गणसङ्गतेन भवता चापे

---

1. 'सीमानं' इति मुद्रितपुस्तकेषु पाठः । 2. 'संग्रामाङ्गणमागतेन' इति मुद्रितपुस्तकपाठः ।

कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्त्तिरतुला कीर्त्या च लोकत्रयम् ॥२२९॥

अत्राऽऽकर्णनक्रियाकर्मत्वे कोदण्डं शरानित्यादि, वाक्यार्थस्य कर्मत्वे कोदण्डः शरा इति प्राप्तम्; न च यच्छब्दार्थस्तद्विशेषणं वा कोदण्डादि। न च केन केनेत्यादि प्रश्नः।

---

समारोपिते सति सहसा येन येन यद् यत् समासादितं तत्तत् आकर्णय। किं केन समासादितमित्यत्राह परार्द्धम्। अत्र तत्तदाकर्णयेति पूर्ववाक्येन किं किमाकर्णयामीति किं किमाकर्णनीयमिति वा आकाङ्क्षा उत्थाप्यते तत्सत्त्वे च केन किमासादितमित्याकाङ्क्षा नोदेति आकर्णनीयपदार्थानां विशेष्या (विशिष्या?) ज्ञाने तेषां केन किमासादितमित्याकाङ्क्षाया उदेतुमसामर्थ्यात्। (A)तथाच यदि किं किमाकर्णयामीत्याकाङ्क्षायां कोदण्डादिकमुक्तं स्यात् तदा आकर्णनकर्मणां कोदण्डादीनां द्वितीयान्तपदनिर्देशः स्यादित्याह—**अत्र आकर्णनक्रियेति**। तदा च कोदण्डशरादीनामासाद्यासादकभावप्रतीतिश्च न स्यादित्यपि बोध्यम्। यदि च किं किमाकर्णनीयमित्याकाङ्क्षायां वाक्यार्थकर्मविधया परार्द्धमुक्तं स्यात् तदा कर्मपदार्थानां (पदानां?) प्रथमान्ततया निर्देशः स्यादित्याह—**वाक्यार्थस्येति**, परार्द्धवाक्यार्थो यदि कर्म स्यादित्यर्थः। **कोदण्डः शरा** इति, दर्शिताकाङ्क्षायाः प्रथमान्तनिर्देशेनैव पूरणसम्भवादिति भावः। यथा—

ये ये वीराः समायातास्तांस्तान् शृणु महीपते।
भीष्मो द्रोणः कृपः कर्णः सौमदत्तिर्जयद्रथः॥ इति।

अत्रापि आसाद्यासादकभावप्रतीतिश्च स्यादित्यपि बोध्यम्। न च कर्मभूतानां कोदण्डादीनां कोदण्ड इत्यादिना निर्द्देशे तेषां परस्परानन्वयात् वाक्यत्वाभावात् कथं वाक्यार्थत्वमिति वाच्यम् अत्र पदसमूहमात्रस्यैव वाक्यत्वेनाभिमतत्वात्। नन्वाकर्णन(B)कर्मकाकाङ्क्षायां न परार्द्धं किन्तु येन येन यद् यत् समासादितमित्यत्र

---

(A) तथाचेति, केन किमासादितमित्याकाङ्क्षाया उदयासम्भवे सतीत्यर्थः। अतः परं क्वचिद् दृश्यमानः 'आकर्णनक्रियाकर्मीभावेन परार्द्धोत्थानानावश्यकत्वे' इत्यंशः टिप्पनी साऽपि न रुचिरेति प्रतिभाति।

(B) अत्र 'आकर्णनकर्माकाङ्क्षाया'मिति युक्तं बहुव्रीहिसमासाभावेन सककारपाठानौचित्यादिति विवेचनीयम्। एवमुत्तरत्रापि।

यथा वा—'चापाचार्यस्त्रिपुरविजयी' इत्यादौ भार्गवस्य निन्दायां तात्पर्यम्, कृतवतेति परशौ सा प्रतीयते। 'कृतवतः' इति तु पाठे मतयोगो भवति।

---

तृतीयान्तप्रथमान्तयत्तत्पदार्थौ एव कोदण्डेनेत्यादितृतीयान्तप्रथमान्तपदैर्विवृताः, ततश्च तत्तदित्यध्याहारात् आकर्णनकर्मकाकाङ्क्षापूरणं स्यादित्यत्राह—न च यच्छब्दार्थ इति, कोदण्डादि इत्यग्रेऽन्वयः। कोदण्डादि न च यच्छब्दार्थः कोदण्डत्वादिना यच्छब्दादप्रतीतेरिति भावः। ननु माऽस्तु यच्छब्दार्थः कोदण्डादि किन्तु विशेषणीभूतस्य यच्छब्दार्थस्य विशेष्यतयैव कोदण्डादिकं दर्शितमित्यत्राह—तद्विशेषणं वेति, स यच्छब्दार्थः विशेषणं यस्येति विग्रहेण तद्विशेष्यं वा कोदण्डादीत्यर्थः; तद्विशेष्यत्वे येन शरैरिति यच्छब्द इत्यादिश्च लिङ्गवचनभेदो न स्यादिति भावः। (A)तथाच आकर्णनकर्मकाकाङ्क्षायां न परार्द्धं तदाकाङ्क्षासत्त्वे च केन किमासादितमित्याकाङ्क्षा नोदेतीति आकर्णनकर्मकाकाङ्क्षापूरकस्य परार्द्धस्य पूर्वार्द्धे अनन्वय एवेति प्रकृतदोषो दर्शित इत्यवधेयम्। ननु केन किमासादितमिति प्रश्नवाक्यादाकाङ्क्षायामुदितायां परार्द्धोत्थानं भविष्यतीत्यत्राह—न च केन केनेति। [1]आदिना किं किमासादितमित्येतत्पर्यन्तं प्रश्नशरीरं बोध्यम्[1]*, [2]एतादृशप्रश्नवाचकशब्दस्तावन्नास्ति तदाकाङ्क्षा च आकर्णनीयकर्माकाङ्क्षासत्त्वे नोदेतीति भावः[2]*। वाच्यव्यङ्ग्ययोरन्वयासम्भवमप्युदाहरति—यथा वा चापाचार्य इति। व्याख्यातमिदं प्राक्। परशौ सेति, तस्यैव निन्दितकर्मकर्तृत्वेनोक्तत्वादिति भावः। न च तत्र कर्मणि परशोः करणतामात्रम् अतस्तत्कर्तृभार्गवस्यैव निन्दा स्यादिति वाच्यं परशोरेवात्र कर्तृत्वेन निर्दिष्टत्वात्। तथाच भार्गवे निन्दायोग इष्टो न सम्भवतीति भावः। अतो भार्गवस्यैव कर्तृत्वेन पाठं रचयति—कृतवत इतीति। ननु संग्रामाङ्गणेत्यादौ तात्पर्यवशात् केन किमासादितमिति प्रश्ने कल्पिते परार्द्धोत्थाने सति सम्भवत्येव विभक्तिव्यत्ययेन समासादितमिति क्रियायां शरादीनामन्वयः; चापाचार्य इत्यत्र तु करणे कर्तृत्वविवक्षामात्रं निन्दा तु तत्प्रेरयितु-

---

(A) उपसंहरति तथाचेति।

---

1. 'प्रश्नैकदेशकथनमिदम्, केन केन किं किमासादितमितीत्थं प्रश्नशरीरं बोध्यम्। 2. 'तादृशन्तु प्रश्नवाक्यं नास्तीति भावः। न च तस्य अध्याहार इति वाच्यम् आकर्णनकर्माकाङ्क्षोत्थापके प्रश्नवाक्ये आकाङ्क्षाभावेन अध्याहारासम्भवात् अनाकाङ्क्षितस्याध्याहाराभावात्' वा।

(A)यथा वा—

चत्वारो वयमृत्विजः स भगवान् कर्मोपदेष्टा हरिः
संग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता ।
कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्योपनिमन्त्रणाय रसति स्फातं(B) हतो दुन्दुभिः॥२३०॥

अत्राध्वरशब्दः समासे गुणीभूत इति न तदर्थः सर्वैः संयुज्यते ।

यथा वा—

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः ।
भर्तुर्नृत्यानुकारे जयति निजतनुस्वच्छलावण्यवापी-
सम्भूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः ॥२३१॥

---

भार्गवस्यैव प्रतीयते इत्यतोऽन्यदाह—**यथा वा चत्वार** इति। सहदेवं प्रति भीमस्योक्तिरियम् । वयं भीमाद्याः, नरपतिः युधिष्ठिरः, पत्नी द्रौपदी, व्रतं वेणीधारणादिकम्, सपत्नीकस्यैव [1]धर्माचरणनैयत्येन पत्न्या व्रतग्रहणस्यापि यज्ञाङ्गत्वात् । 'पशवः' छेद्यत्वात्, रणरूपराजसूयसामग्रीप्रदर्शनमिदम् । अत्रेति, ऋत्विगादीनामपि अध्वर इत्यत्र साकाङ्क्षत्वादिति भावः । **समासे गुणीभूत** इति, अन्यान्वयनिराकाङ्क्ष इत्यर्थः । तथाच निराकाङ्क्षतया अत्राध्वरे ऋत्विगादीनां योगासम्भव इति बोध्यम् । न चैवं चैत्रस्य दासभार्येत्यत्र भार्यासमासैकदेशे दासे कथं चैत्रस्यान्वय इति वाच्यम्, समासे एकविशेषणस्य विशेष्यान्तर एव निराकाङ्क्षत्वात् (C)न तु स्वविशेषणेऽपि, अत एव (D) चैत्रगृहं धनञ्चेति न भवति समासे गृहविशेषणस्य चैत्रस्य धनविशेषणत्वा-व्युत्पत्तेः ; प्रकृतेऽपि समासे दीक्षितविशेषणस्याध्वरस्य ऋत्विगादिविशेषणत्वा-

---

(A) परशुनिन्दामुखेन भार्गवनिन्दाधिक्यमेव भङ्ग्या द्योत्यते इत्याधुनिकमतादरेऽत्र दोषासम्भवादुदाहरणान्तरमाह—यथा वेति ।

(B) यशोदुन्दुभिरिति पाठे यशःप्रकाशको दुन्दुभिरित्यर्थः ।

(C) न तु स्वविशेषणेऽपीति, निराकाङ्क्षत्वमिति शेषः ।

(D) चैत्रगृहमिति । गृहधनयोर्द्वयोरपि चैत्रान्वयतात्पर्यस्थले इदं बोध्यम् ।

---

1. 'धर्माचरणौचित्येन पत्न्या व्रतप्रदर्शनम्' क।

अत्र दण्डपादगता निजतनुः प्रतीयते, भवान्याः सम्बन्धिनी तु विवक्षिता ।

(१३) अवश्यवक्तव्यमनुक्तं यत्र, यथा—

(A)अप्राकृतस्य चरितातिशयैश्च दृष्टै-
रत्यद्भुतैरपहृतस्य तथाऽपि नास्था ।
कोऽप्येष वीरशिशुकाकृतिरप्रमेय-
[1]सौन्दर्यसारसमुदायमयः पदार्थः ॥ २३२ ॥

---

सम्भवात् (B) । असमासे तु नैवं नियमः, तेन चैत्रस्य गृहं धनञ्चेति भवति । प्रपञ्चयति—**यथा वा जङ्घे**ति । व्याख्यातमिदं प्राक् । **अत्रे**ति, निजादिससम्बन्धिकपदार्थानां क्रियान्वयिनि कारक एवान्वयबोधनियमात्, दण्डपाद एव च क्रियान्वयी न तु भवानी । न च चैत्रस्य निजगृहं मैत्रः प्रविशतीत्यत्र (यथा) क्रियानन्वयिन्यपि चैत्रे षष्ठीबलात् निजपदार्थान्वयः, तथा अत्रापि षष्ठ्यर्थ (षष्ठ्यन्त?) पदार्थे भवान्यामन्वयः स्यादिति वाच्यम्, अन्यत्र अजनितान्वयबोधायाः षष्ठ्या एव तादृशबलात् ; अत्र तु दण्डपादे जनितान्वयबोधायास्तस्याः तादृशबलाभावात् । अत एव चैत्रस्य पुत्रो निजगृहं प्रविशतीत्यत्र जनितपुत्रान्वयबोधायाः षष्ठ्या बलात् न चैत्रे निजपदार्थान्वयः । [2]चैत्रस्य निजगृहं पुत्रः प्रविशतीत्यत्र तु प्रथमजनितान्वयबोधायाः षष्ठ्या बलाद् भवत्येव चैत्रे निजपदार्थान्वयबोधः । प्रकृते च दण्डपाद एव सान्निध्यादुपमेयत्वेन प्रकृतत्वाच्च प्रथमं षष्ठ्यन्तार्थान्वय इति तत्रैव निजपदार्थान्वयध्रौव्यमिति तत्त्वम्[2]* ।

(१३) अनभिहितवाच्यपदार्थं व्याचष्टे—**अवश्ये**ति । अत्र अनुक्तमित्यत्र अध्याहारेणाप्यलभ्यमिति विशेषणं बोध्यम्, तेन अध्याहारलभ्यानुक्तपदार्थात् न्यूनपदस्य भेदः । **अप्राकृतस्ये**ति । स्वयंदृष्टरामकृतधनुर्भङ्गस्य जनकस्य हर्षादना-

---

(A) अप्राकृतस्येति । वीरचरिते द्वितीयाङ्के परशुरामस्य स्वगतोक्तिरियमिति बालबोधिनीकारः ।

(B) असम्भवादिति पञ्चम्यन्तार्थस्य 'न तदर्थः सर्वैः संयुज्यते' इति वृत्तावन्वयो बोध्यः ।

---

1. 'माहात्म्य-' इति पाठान्तरम् । 2. 'तदिह प्रकृतेऽपि दण्डपादे जनितान्वयबोधायाः षष्ठ्या अपि न तादृशं बलम् । ननु तर्हि चैत्रस्य निजगृहं पुत्रः प्रविशतीत्यत्र पुत्रान्वयिन्या अपि षष्ठ्या बलात् कथं चैत्रस्य निजगृहप्रतीतिरिति चेन्न पुत्रान्वयात् प्रागेव सान्निध्यवशात् षष्ठ्या चैत्रे निजपदार्थान्वयबोधजननात्, तदानीमन्यत्राजनितबोधैव षष्ठी । दण्डपादौ भवान्या इत्यत्र तु सान्निध्यवशाद् दण्डपाद एवान्वयबोधकत्वं प्रथमं षष्ठ्या अतस्तत्र जनितान्वयबोधायाः षष्ठ्या निराकाङ्क्षत्वेन न तादृशं बलमित्यभिप्रायः' ख ।

अत्रापहृतोऽस्मि इत्यपहृतत्वस्य विधिर्वाच्यः, तथापीत्यस्य द्वितीयवाक्यगतत्वेनैवोपपत्तेः।

यथा वा—

एषोऽहमद्रितनयामुखपद्मजन्मा
प्राप्तः सुरासुरमनोरथदूरवर्त्ती।
स्वप्नेऽनिरुद्धघटनाधिगताभिरूप्य-
लक्ष्मीफलामसुरराजसुतां विधाय॥ २३३॥

अत्र मनोरथानामपि दूरवर्तीत्यप्यर्थो वाच्यः।

यथा वा—

त्वयि निबद्धरतेः प्रियवादिनः प्रणयभङ्गपराङ्मुखचेतसः।
कमपराधलवं मम पश्यसि त्यजसि मानिनि दासजनं यतः॥२३४॥

---

श्वासोक्तिरियम्। चकारः अप्यर्थे। दृष्टैरपि चरितातिशयैः अपहृतस्य मम तथाऽपि न आस्था दशरथपुत्रेणैव धनुर्भङ्गमित्याश्वासो नास्तीत्यर्थः। ननु तवैव वैदग्ध्याभावादयमनाश्वास इत्यत्राह—अप्राकृतस्येति, [1]प्राकृतः अविदग्धः तद्भिन्नस्येत्यर्थः। अनाश्वासे किं सम्भावयसीत्यत्राह—कोऽप्येष इति, कोऽपि ज्ञानागम्यः। **अत्रेति**, विधिः प्रथमान्ततया वाक्यभेदेन प्राधान्यम्, न तु एकत्रैव वाक्ये षष्ठ्यन्ततया विशेषणीभाव इत्यर्थः। अत्र हेतुमाह—**तथाऽपीत्यस्येति**[1]*। अत्र षष्ठीसत्त्वे प्रथमाया अध्याहारासम्भवो बोध्यः। नन्वत्र तथाऽपीत्यस्य षष्ठ्यन्ते निराकाङ्क्षत्वेन अन्वयासम्भवात् अभवन्मतयोगदोषसङ्कीर्णमिदम् इत्यतः अन्यदाह—**यथा वा एषोऽहमिति**। स्वप्ने उषानिरुद्धयोर्निगूढं सङ्गमं घटयितुं पार्वत्या वाङ्मात्रनिर्मितस्य पुरुषस्य तत् कर्म सम्पाद्य आगतस्य वाक्यमिदम्। स्वाप्ननिद्रायाम् अनिरुद्धेन सह घटनया प्राप्तम् आभिरूप्यलक्ष्म्याः सौन्दर्यसम्पदः फलं यया, असुरराजसुतां बाणकन्याम् उषां तादृशीं विधाय सुरासुराणां मनोरथस्यापि दूरवर्त्ती सन् एषः अहं प्राप्त आगत इत्यर्थः। मुखस्थवाङ्मात्रजनितत्वात् मुखपद्मेति, दाम्पत्यघटनायाः (A)पद्मयोनिविधिकार्यत्वात् तत्साद्गुण्यलाभाय मुखे पद्मरूपणम्। **अप्यर्थोऽत्र वाच्य इति**, तदभावे इन्द्रियान्तरगम्यत्वसम्भावनाया अनिवृत्तेः। अत्र समासमध्ये अपिकाराध्याहारा-

---

(A) पद्मयोनिविधिः प्रजापतिरित्यर्थः।

---

1. अयमंशः ख-पुस्तके नास्ति।

अत्रापराधस्य लवमपीति वाच्यम् ।

(१४) अस्थानस्थपदं यथा—

प्रियेण संग्रथ्य विपक्षसन्निधा-
वुपाहितां वक्षसि पीवरस्तने ।
स्रजं न काचिद्विजहौ जलाविलां
वसन्ति हि प्रेम्णि गुणा न वस्तुषु ॥ २३९ ॥

अत्र काचित् न विजहाविति वाच्यम् ।

---

सम्भवो बोध्यः। प्रपञ्चयति—यथा वा त्वयीति (A)। अनुरागरहितः अप्रियवादी अनुरागभङ्गेऽभीतश्च जन एव त्यक्तुं योग्यः अतथाभूतस्य मम कम् अपराधस्य लवं कणम् अपि पश्यसि इत्यर्थः। (B)अत्रेति, अपिकाराभावे स्थूलापराधदर्शन-सम्भावनाया अनिवृत्तेः। न च अत्र लवशब्दोत्तरम् अपिकाराध्याहारः सम्भवत्येवेति वाच्यम्, अपराधलवयोः समाससत्त्वे अध्याहृतापिकारेणापि अपराधीयस्थूलभाग-समुच्चयासम्भवात् किन्तु वस्त्वन्तरस्यैव समुच्चयात् ।

(१४) अपदस्थपदसमासमित्यत्र प्रथमपदशब्दः स्थानार्थक इत्याह—अस्थानस्थेति, स्वान्वयिपदासान्निध्यात् अन्यान्वयित्वभ्रमजनकस्थानस्थपदत्वं तत्त्वम्। क्लिष्टे तु असान्निध्यमात्रं न अन्यान्वयित्वभ्रम इति भेदः। प्रियेणेति। जलक्रीडायां जलाविलामपि स्रजं काचित् नायिका न विजहौ। कुत इत्याह—प्रियेणेति, संग्रथ्य पीवरस्तने वक्षसि यतो विपक्षस्य सपत्नीजनस्य सन्निधौ प्रियेण उपाहिताम् अर्पिताम्। अत्र अर्थान्तरं न्यस्यति—वसन्ति हीति, गुणग्रहस्य प्रेमान्वयव्यतिरेकानु-विधायित्वात्। प्रेम्ण्येव गुणसत्त्वमारोप्येदमुक्तम्। तथाच जलाविलत्वेन सौरभ-सौन्दर्यगुणाभावेऽपि प्रेमसत्त्व एव गुणवत्तया ग्रहादत्यागः। अत्र नञः विजहावित्यस्य असान्निध्यात् नकाचित् इत्यलुप्तनञ्समासभ्रमः। नन्वत्र नञोऽलोप एव भ्रम-

---

(A) त्वयीति, विक्रमोर्वशीस्थं पद्यमिदम्, तत्रश्च ख-पुस्तके इहैव स्थितम्। 'मानिनीं प्रति कामुकस्योक्तिरिय'मिति न रुचिरम्, सामान्येन कथनानौचित्यात् उर्वश्यास्तदानीमदृश्यत्वात् तद्भ्रमेणैव गिरिनदीं प्रति उक्तत्वाच्च इति ध्येयम्।

(B) अनभिहितवाच्ये दूषकताबीजन्तु क्वचिदभिमताप्रतीतिः क्वचिच्च विरुद्धार्थप्रतीतिरित्ति, एवञ्च नित्यदोषोऽयमिति प्राचीनाः।

यथा वा—

(A)लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे
मुद्राङ्कः शितिकन्धरेन्दुशकलेनान्तःकपोलस्थलम् ।
पार्वत्या नखलक्ष्मशङ्कितसखीनर्मस्मितव्रीडया
प्रोन्मृष्टः करपल्लवेन कुटिलाताम्रच्छविः पातु वः ॥ २३६ ॥

अत्र नखलक्ष्मेत्यतः पूर्वं कुटिलाताम्र इति वाच्यम् ।

---

निवारक इत्यतोऽन्यदाह—**यथा वा लग्न** इति। महेशस्य कपोले नखचिह्नाकारं चन्द्रघर्षणचिह्नं दृष्ट्वा स्वदत्तनखचिह्नतया सखीनां शङ्कां वारयितुं पार्वत्या करतलेन प्रोन्मृज्यमानस्य चन्द्रचिह्नस्य वर्णनमिदम् । लग्न इति अन्तर्भूतकारितार्थम्, लगित इत्यर्थः । तथाच शितिकन्धरस्य महेशस्य इन्दुखण्डेन तस्यैव अन्तःकपोलस्थलं कपोलस्थलस्य मध्ये लगितः मुद्राङ्कः चिह्नः नखलक्ष्मशङ्कायुक्तसखीनां भाविना नर्मस्मितेन व्रीडा यस्याः तादृश्याः पार्वत्याः करपल्लवेन प्रोन्मृष्टः वः पातु । शिरःस्थितेन इन्दुशकलेन कथं कपोले मुद्राङ्कार्पणमित्यत्राह—केलीति। श्लथया जटया हेतुना लम्बमानेनेत्यर्थः, जटासु बद्धत्वात् । चन्द्रचिह्नस्य नखलक्ष्मशङ्काजननहेतुमाह—कुटिलेति । कुटिलश्चासौ आताम्रच्छविश्चेति विग्रहः । **अत्रेति**। प्रथमं शङ्कोत्पादकहेत्वज्ञाने सखीनां शङ्कितत्वे बाधोदयेन बोद्धॄणां शङ्कितत्वज्ञानानुदयादिति भावः। करपल्लवेन कुटिलेति सान्निध्यादत्र करपल्लवाधीनकौटिल्यभ्रमः ।

---

(A) लग्न इति। पार्वत्या नखलक्ष्मशङ्कितानां तव कपोलस्थले प्रियेण दत्तमिदं नखचिह्नमित्याशङ्कमानानां सखीनां नर्मस्मिताद् व्रीडावत्या लज्जितया सत्या, हीतयेति पाठोऽपि स्पष्टार्थः, करपल्लवेन प्रोन्मृष्टः प्रोन्मृज्यमान इत्यर्थः, अन्तःकपोलस्थलं स्वीयकपोलमध्यभागे स्थितः मुद्राङ्कः वस्त्वन्तरसम्पर्कात् समुदितं चन्द्राकृतिचिह्नं वो युष्मान् पात्वित्यर्थः । तादृशमुद्राङ्कस्य लज्जाजनकत्वमुपपादयितुमुत्पत्तिप्रकारमाह—लग्न इत्यादि । केलिकाले यः कचग्रहस्तेन श्लथानां जटानामालम्बेन विशिष्टे निद्राया अवकाशे, अनुरागातिरेकात् श्लथजटाजालं मुष्टिनाऽऽपीड्यैव प्रियतमललाटे स्वकपोलं निधाय सुरतश्रमेण गाढनिद्रावसरे इत्यर्थः, शितिकन्धरस्य महेश्वरस्य इन्दुशकलेन ललाटस्थचन्द्रखण्डेन लग्नः अर्पितः । नखचिह्नभ्रमहेतुमाह, कुटिलेति—वक्रः ताम्रवर्णश्चेत्यर्थः । न चात्र 'कण्ठ-कक्ष-कुच-पार्श्व-भुजोरः-श्रोणि-सक्थिषु नखास्पदमाहुः' इति शास्त्रविरुद्धतया कपोले नखचिह्नं नाशङ्कनीयमिति वाच्यं 'प्रवृत्ते रतिचक्रे तु न च शास्त्रं न च क्रमः' इति कामशास्त्रानुशासनेन उद्भटरतौ तत्सम्भवात् मतान्तरे गण्डस्यापि नखास्पदत्वेनोक्तत्वाच्च । अत एव उद्भटरतिसूचनेन सखीनां स्मितं पार्वत्या व्रीडा च सुष्ठु सङ्गच्छते इति रसिकैर्विभावनीयम् ।

(१५) अस्थानस्थसमासं यथा—

अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवाऽऽलोहितः ।
प्रोद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणात्
फुल्लत्कैरवकोषनिःसरदलिश्रेणीकृपाणं शशी ॥ २३७ ॥

अत्र क्रुद्धस्योक्तौ समासो न कृतः, कवेरुक्तौ तु कृतः ।

(१६) संकीर्णम्—यत्र [1]वाक्यान्तरपदानि वाक्यान्तरमनुप्रविशन्ति । यथा—

किमिति न पश्यसि कोपं पादगतं बहुगुणं गृहाणेमम् ।
ननु मुञ्च हृदयनाथं कण्ठे मनसस्तमोरूपम् ॥ २३८ ॥

अत्र पादगतं बहुगुणं हृदयनाथं किमिति न पश्यसि इमं कण्ठे गृहाण मनसस्तमोरूपं कोपं मुञ्चेति । एकवाक्यतायां तु क्लिष्टमिति भेदः ।

---

(१५) **अस्थानस्थेति** । तद्रसीयगुणव्यञ्जकस्य समासस्य तद्रसाव्यञ्जकदले पातस्तत्त्वम् । **अद्यापीति** । सन्ध्याकाले स्फुटतः कैरवकोषान्निःसरतां श्रेणीभूतानामलीनां वर्णनमिदम् । प्रोद्यन् शशी फुल्लतः स्फुटतः कैरवकोषात् निःसरताम् अलीनां श्रेणीरूपं कृपाणं खड्गं कर्षति । कोषपदश्लेषात् कुड्मलस्य खड्गपिधानत्वं बोध्यम् "कोषोऽस्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके" इति कोषात् । शशी कीदृशः ? दूरतरे प्रसारितः करः रश्मिरेव तादृशः हस्तो यस्य तादृशः, खड्गाकर्षणे हस्तस्यापि तथात्वात् । किमर्थं कृपाणाकर्षणमित्यत्राह—अद्यापीति ममोदयेऽपीत्यर्थः । अन्यदा दुर्गमाश्रित्य तिष्ठतु ममोदयेऽपि तत्र स्थातुं वाञ्छति तत् मां धिगिति क्रोधादिव आलोहित इत्युत्प्रेक्षा । **अत्रेति**, दीर्घसमासो हि रौद्ररसगुणव्यञ्जनात् तदनुगुणः, तद्व्यञ्जकस्थानन्तु क्रुद्धस्योक्तिः न तु कवेरुक्तिरित्यर्थः । 'समासः' दीर्घसमासः ।

(१६) **वाक्यान्तरपदानीति** । वाक्यस्यानुप्रवेशे तु गर्भितत्वं वक्ष्यति । **किमितीति** । अस्य वृत्तावेव व्याख्या । अत्र भिन्नवाक्यीयस्य कोपमित्यादेर्भिन्नवाक्येऽनुप्रवेशः । अस्य क्लिष्टतो भेदमाह—**एकेति** ।

---

1. '-वाक्यान्तरस्थ पदानि' इति क्वचित् पाठः ।

(१७) गर्भितम्—यत्र वाक्यस्य मध्ये वाक्यान्तरमनुप्रविशति ।

यथा—

परापकारनिरतैर्दुर्जनैः सह सङ्गतिः ।
वदामि भवतस्तत्त्वं न विधेया कदाचन ॥ २३९ ॥

अत्र तृतीयपादो वाक्यान्तरमध्ये प्रविष्टः ।

यथा वा—

लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्ट्यारिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती ।
तत्सक्तोऽयं न किञ्चिद्गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगाद्गदितुमिव गतेत्यम्बुधिं यस्य कीर्त्तिः ॥२४०॥

अत्र विदितं तेऽस्तु इत्येतत् कृतम्, प्रत्युत लक्ष्मीस्ततोऽपसरतीति विरुद्धमतिकृत् ।

---

(१७) परापकारेति । दुर्जनैः सह सङ्गतिः न विधेयेत्यन्वयः । लग्नमिति । असियष्टिः श्रीः कीर्त्तिश्चात्र स्त्रीत्वेनाध्यासिता बोध्याः स्त्रीलिङ्गशब्दार्थत्वात्, तत्र श्रीः सपत्नी, असियष्टिः उपपत्नी, कीर्त्तिः प्रेष्या । यस्य राज्ञः कीर्त्तिः अम्बुधिं गता, तत्रोत्प्रेक्ष्यते श्रीनियोगादिति गदितुमिवेति । स्वपितर्यम्बुधौ भर्त्तुरपचारकथनार्थं श्रियो नियोगः । गदनीयं तदपचारमाह—लग्नमिति । यया असियष्ट्या उपपत्न्या रुधिररक्तिमैवानुरागः तदावृताङ्ग्या इह जगति अरिकण्ठ एव सुदृढं लग्नम्, या च असिलता मातङ्गानां हस्तिनामेव मातङ्गानां षिड्गानाम् उपरि पतन्ती परपुरुषैः शत्रुपुरुषैरेव प्रकृष्टपुरुषैः दृष्टा, एतेन अत्रार्थे प्रकृष्टसाक्षिसत्त्वं दर्शितम् । तत्सक्तः अयं मम भर्त्ता राजा न किञ्चिद् भद्राभद्रं गणयति[1], तेन भद्राभद्रागणनेन हेतुना अहमपि भृत्येभ्यः दत्ता इति ते मम पितुरम्बुधेः विदितम् अस्त्विति गदितुमिवेत्यर्थः । भृत्येभ्यो लक्ष्मीदानकथनात् भृत्या अपि लक्ष्मीवन्तः कृताः, असियष्टिसक्तत्वेन किञ्चिदगणनात् शत्रुतोऽभीतत्वम्, अम्बुधौ कीर्त्तिगमनाद् दूरगामिनी कीर्त्तिश्चेति व्याजस्तुतिः । अत्रेति गर्भितं कृतमित्यर्थः । न च न गणयतीत्येकं वाक्यम्, तदुत्तरपतितस्य विदितं तेऽस्तु इत्यस्य कथं गर्भितत्वमिति वाच्यं तेनास्मीत्यनेन

---

1. अतः परं 'असन्नायिकासक्तत्वेन भद्राभद्रागणनात्' इत्यंशः ख-ग-पुस्तकयोरधिकः ।

मञ्जीरादिषु रणितप्रायं पक्षिषु च कूजितप्रभृति ।
स्तनितमणितादि सुरते मेघादिषु गर्जितप्रमुखम् ॥

(१८) इति प्रसिद्धिमतिक्रान्तम् । यथा—

महाप्रलयमारुतक्षुभितपुष्करावर्त्तक-
प्रचण्डघनगर्जितप्रतिरुतानुकारी मुहुः ।
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः ॥ २४१ ॥

अत्र रवो मण्डूकादिषु प्रसिद्धो न तूक्तविशेषणके सिंहनादे ।

---

अगणनपरामर्शात् तयोरेकवाक्यत्वेन तन्मध्यपातेन अस्य गर्भितत्वात् । ननु दृढप्रत्यायने गर्भितत्वादुष्टत्वस्य वक्ष्यमाणत्वादत्रापि पितुर्दृढप्रत्यायनार्थं तथा कृतमित्यत्राह—प्रत्युतेति । पितरि पत्यपचारदृढप्रत्यायनं हि लक्ष्म्यास्ततत्परित्यागे पितृकर्त्तृकस्य गञ्जनस्य परिहारार्थम्, तथाच लक्ष्मीस्ततोऽपसरतीत्यायातमित्यर्थः । विरुद्धमतीति, वक्ष्यमाणस्य प्रकाशितविरुद्धदोषस्य मतिकृदित्यर्थः, प्रकाशितेन दृढप्रत्यायनेन तादृशविरुद्धबोधजननात्; पूर्वोक्तो विरुद्धमतिकृद्दोषस्तु नायं दर्शितः, अर्थवशादेव एवमभ्युदयात् न तु पदस्यान्वयवशात् ।

(१८) प्रसिद्धिधुतं व्याख्यातुं ससम्बन्धिकपदविशेषाणां सम्बन्धिविशेष एव प्रसिद्धिं दर्शयति—मञ्जीरादिष्विति, मञ्जीरादिषु सम्बन्धिष्वित्यर्थः । एवमुत्तरत्रापि । एवं रवशब्दोऽपि न चण्डसम्बन्धिषु प्रयोक्तव्यस्तत्र तत्पदप्रयोगे तु दोष इत्यभिप्रायेणाह—महाप्रलयेति । रणस्थले सिंहनादं श्रुत्वा (A)भीमस्येयं पृच्छा । अभूतपूर्वः पूर्वमभूतः समरोदधेः अयं रवः कुतोऽद्य । कीदृशः? महाप्रलयमारुतेन क्षुभितस्य पुष्करावर्त्तकमेघस्य यत् प्रचण्डं घनं निविडञ्च गर्जितं तत्प्रतिध्वनिसदृशः । द्यावापृथिव्योऽरन्तरालं रोदसी सैव कन्दरा गुहा आच्छादिततत्क इत्यर्थः । अत्रेति 'उक्तविशेषणके' महाप्रलयेत्याद्युक्तविशेषणके[1] ।

---

(A) अत्रादर्शपुस्तकेषु भीमस्येति पाठो लिपिकृत्प्रमादकृत एव, वेणीसंहारे अस्य वक्ता अश्वत्थामेत्युपलभ्यते ।

---

1. अतः परं क-खपुस्तकयोः 'ईदृशशब्दस्य चण्ड एव सम्बन्धः' इत्यधिकं वर्त्तते ।

(१९) भग्नः प्रक्रमः प्रस्तावो यत्र। यथा—

नाथे निशाया नियतेर्नियोगादस्तं गते हन्त निशापि याता।
कुलाङ्गनानां हि दशानुरूपं नातः परं भद्रतरं समस्ति॥ २४२॥

अत्र 'गता' इति प्रक्रान्ते 'याता' इति प्रकृतेः। 'गता निशाऽपि' इति तु युक्तम्।

ननु, (A)'नैकं पदं द्विः प्रयोज्यं प्रायेण' इत्यन्यत्र, कथितपदं दुष्टमिति च इहैवोक्तम्, तत् कथमेकस्य पदस्य द्विः प्रयोगः? उच्यते—उद्देश्य-प्रतिनिर्देश्यव्यतिरिक्तो विषय एकपदप्रयोगनिषेधस्य, तद्वति [1]तु विषये प्रत्युत तस्यैव पदस्य सर्वनाम्नो वा प्रयोगं विना दोषः। तथा हि—

(१९) भग्नप्रक्रमपदार्थमाह—भग्न इति। 'प्रस्तावः' आकाङ्क्षितप्रकारकोऽर्थः, तस्य तद्रूपेणानुक्तिरेव भङ्गः। तथा च प्रथमोक्त्युत्थापिताकाङ्क्षाविषयीकृतेन प्रकारेणानुक्तिस्तत्त्वम्। **नाथ** इति। हन्त हर्षे। याता इत्यत्रापि अस्तमित्यनुषङ्गः। अत्र अर्थान्तरं न्यस्यति—कुलाङ्गनानां हीति। दशा वैधव्योत्पत्तिदशा। अतः परं पत्यनुगमनात् परम्, न समस्ति नास्ति। **अत्रेति**। अस्तं गते इति साकाङ्क्षवाक्येनोत्थापिता निशाया अप्यस्तगमने आकाङ्क्षा निशाऽपीत्यपिकारेण ग्राहिता सा च पूर्वोक्तशब्दविशिष्टमस्तगमनमेव विषयीकरोति, अनुभवबलेन उद्देश्यप्रतिनिर्देश्यतास्थले तथैव नियमस्य वक्ष्यमाणत्वात्; अत आकाङ्क्षिताया गमधातुरूपप्रकृतेः प्रकारस्य या-धातुनिर्देशाद्भङ्ग इत्यर्थः। इममेवार्थं व्यवस्थापयितुमाशङ्कते—**नन्विति**। 'अन्यत्र' वामने। 'इहैव' प्रकृतग्रन्थ एव। **उद्देश्येति**। उद्देश्यप्रतिनिर्देश्यता च त्रिविधा, एकविधेयार्थमुद्दिष्टस्य विधेयान्तरेऽप्युद्देश्यतया प्रतिनिर्देश इत्येका। यथा—

'उदेति सविता ताम्रस्ताम्र एवास्तमेति च'

इत्यत्र उदयविधावुद्दिष्टस्य ताम्रसवितुरस्तगमनविधावपि उद्देश्यतया प्रतिनिर्देशः। एकोद्देशेन विहितस्य उद्देश्यान्तरेऽपि विधेयतया प्रतिनिर्देशः इति द्वितीया। यथा अत्रैव श्लोके निशानाथोद्देशेन विहितस्यास्तगमनस्य निशोद्देशेनापि विधेयतया प्रतिनिर्देशः। एकोद्देशेन विहितस्य विधेयान्तरे उद्देश्यतया प्रतिनिर्देश इति तृतीया। यथा—'कोदण्डेन शराः शरैररिशिर' इत्यादौ कोदण्डाद्युद्देशेन विहितानां शरादीनाम् अरिशिरआदिविधावुद्देश्यतया प्रतिनिर्देशः। **सर्वनाम्नो वेति**, सर्वनाम्नाऽपि पूर्वोक्त-

(A) नैकमिति काव्यालङ्कारसूत्रम्, प्रायोगिकनाम्नि पञ्चमाधिकरणे ५ माध्याये १म-सूत्रमिदम्।

1. 'तु' इति क्वचिन्नास्ति।

उदेति सविता ताम्रस्ताम्र एवास्तमेति च।
सम्पत्तौ च विपत्तौ च महतामेकरूपता ॥ २४३ ॥

अत्र रक्त एवास्तमेतीति यदि क्रियेत तदा पदान्तरप्रतिपादितः स एवार्थोऽर्थान्तरतयेव प्रतिभासमानः प्रतीतिं स्थगयति।

यथा वा—

यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसङ्ख्यामतिवर्त्तितुं वा।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥२४४॥

अत्र प्रत्ययस्य। 'सुखमीहितुं वा' इति युक्तः पाठः।

ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम्।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥२४५॥

---

शब्दविशिष्टस्यैव परामर्श इति भावः। अत्रार्थे अनुभवं प्रमाणयति—**तथा हीति**। अत्र उदयास्तगमनविध्योस्ताम्रसविता उद्देश्यः। **अर्थान्तरतयेति**। अयं भावः—

न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते।
न सोऽस्ति प्रत्ययो लोके यत्र शब्दो न भासते॥
(वाक्यपदीये १म-काण्डे १४० श्लोकः)

इत्यानुभविकः सिद्धान्तः, अयं घट इति प्रतीतौ एतत्कालीनत्वघटशब्दयोर्वैशिष्ट्यानुभवात्; तथाच ताम्ररक्तशब्दरूपविशेषणभेदाद् भेदावभास इति। 'स्थगयति' विलम्बयति। प्रत्ययक्रमभङ्गमाह—**यशोऽधीति**। (A)अर्जुनं प्रति द्रौपद्या उक्तिरियम्। यशः अधिगन्तुं निरुत्सुकानां निरुत्कण्ठानाम् अथ च तदधिगमार्थम् अभियोगभाजाम् अनुकूलचेष्टावतां जनानाम् अङ्कं क्रोडं लक्ष्मीः समुत्सुकेव उत्कण्ठितेव उपैति। एवमपरद्वयेऽपि व्याख्या। मनुष्यसंख्यातिवर्त्तनं सर्वमनुष्याधिकीभावः। अत्र इच्छार्थकतुमुप्रत्ययोपक्रमस्य तदर्थकसन्प्रत्ययेन भङ्गः। अत्र हि यशोऽधिगमनोद्देशेन विहिताया इच्छाया सुखलाभोद्देशेनापि विधेयतया प्रतिनिर्देशः। सर्वनामक्रमभङ्गमाह—**ते हिमालयमिति**। ते सप्तर्षयः, सिद्धम् अर्थं

---

(A) अत्र क-ख-पुस्तकयोः 'उद्वेजिकां द्रौपदीं प्रति युधिष्ठिरस्योक्तिरियम्' इति पाठो लिपिकृत्प्रमादकृत एव, किरातार्जुनीये तृतीयसर्गेऽस्य द्रौपद्युक्ततयैवोपलम्भात्। ग-पुस्तके तु वक्त्रादिकं किमपि नोल्लिखितम्।

अत्र सर्वनाम्नः । 'अनेन विसृष्टाः' इति तु वाच्यम् ।

महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् ।
अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा ॥ २४६ ॥

अत्र पर्यायस्य । 'महीभृतोऽपत्यवतोऽपि' इति युक्तम् । 'अत्र

---

पार्वतीपरिणयघटनारूपम् ; अस्मै शूलिने, तद्विसृष्टाः शूलिविसृष्टाः । अत्र इदम्पदेन सिद्धार्थनिवेदनविधावुद्दिष्टस्य शूलिनो विसर्गविधावप्युद्देश्यतया प्रतिनिर्देशस्तच्छब्देन कृत इति इदम्पदक्रमभङ्गः । [1]न च सर्वनाम्ना प्रतिनिर्देशे अदोषताकथनेन विरोध इति वाच्यम्, पूर्वोक्तरूपेण क्रमेण परामर्शकसर्वनामविशेषेण प्रतिनिर्देशस्यैव तथात्वात्, अत्र शूलिपदोपस्थापितस्य पुरःप्रायकत्वबोधकेदम्पदेन उद्दिष्टस्य शूलिनः पूर्वानुभूतपरोक्षार्थकतत्पदेन परामर्शनातिदोषादेवेति भावः[1]* । सामान्यरूपेणोपक्रमे तदीयविशेषरूपेणैव पश्चादुक्तौ यत्राकाङ्क्षा कुतोऽप्युदेति तत्रापि तथाऽनिर्देशे तत्क्रमभङ्ग इत्याह—**महीभृत** इति । तस्मिन् अपत्ये पार्वतीरूपे, तृप्तिं दिदृक्षाविच्छेदम् । अत्र प्रतिवस्तूपमामाह——**अनन्ते**ति । मधोः वसन्तस्य द्विरेफमाला इत्यन्वयः । **अत्रे**ति । [2]यद्यपि एकरूपेणैकार्थशब्दयोरेव पर्यायत्वं तथाऽपि अत्र सामान्यविशेषरूपाभ्यामेकार्थबोधकेऽपि पर्यायशब्दो लक्षणया प्रयुक्तः । तथाच पुत्रत्वात्मकसामान्यरूपेणोपक्रान्तस्य पुत्रसामान्यस्य पुत्रान्तरमेव विशेषरूपेणाकाङ्क्षितम्, तादृशविशेषत्वेनानिर्देशात्तादृशपर्यायस्य भङ्ग इत्यर्थः । तद्रूपेणाकाङ्क्षा च परार्द्धेनोत्थापिता । तथा हि परार्द्धेऽनन्तपुष्पसामान्यसत्त्वेऽपि पुष्पविशेषे द्विरेफमालायाः सस्पृहत्वकथनात् सामान्यसत्त्वेऽपि तद्विशेषसस्पृहत्वकथने आकाङ्क्षोत्थापिता, अतः पुत्रसामान्यमुपक्रम्य तद्विशेषे सस्पृहत्वाकथनाद्भङ्ग इति भावः[2]* । ननु कन्यावर्णने तस्याः पुत्रविशेषत्वाभावात् कथं तत्र आकाङ्क्षेति चेत् परार्द्धोत्थापितत्वात्, अतस्तन्निवृत्तये अपत्यसामान्यमेवोपक्रम्यतामित्यभिप्रायेणाह—**अपत्यवतोऽपी**ति । [3]अत्र उपादेयत्वेनैव सामान्यरूपेणोपक्रान्तस्य उपादेयविशेष एवाकाङ्क्षा परार्द्धेनोत्थापिता, तथाच

---

1. अयमंशः क-ख-पुस्तकयोर्नास्ति । 2. 'पर्यायशब्दोऽत्र उपक्रान्तसामान्यस्य विशेषपरः, तथात्वेनाकाङ्क्षितस्य तथात्वेनानिर्देशात्भङ्ग इत्यर्थः । तथा हि परार्द्धे अनन्तपुष्पसामान्यसत्त्वेऽपि पुष्पविशेषे सविशेषसङ्गत्वकथनात् सामान्यसत्त्वेऽपि तद्विशेषे सस्पृहत्वकथने आकाङ्क्षा पुत्रवतोऽपीति सामान्यपुत्रवत्ताकथनात् दुहितापुत्रविशेषे सस्पृहत्वकथनाभावात्तु तत्क्रमभङ्गः' क । 3. 'एकोपादेयत्वे उपादेयविशेषे सस्पृहताकथन एव आकाङ्क्षा परार्द्धेनोत्थापिता न तु सामान्यविशेषभाव इत्यतो न दोष इति' क ।

सत्यपि पुत्रे कन्यारूपेऽप्यपत्ये स्नेहोऽभूत्' इति केचित् समर्थयन्ते ।

विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः ।
नियता लघुता निरायतेरगरीयान् न पदं नृपश्रियः ॥ २४७ ॥

अत्रोपसर्गस्य पर्यायस्य च । 'तदभिभवः कुरुते निरायतिम् । लघुतां भजते निरायतिर्लघुतावान्न पदं नृपश्रियः' इति युक्तम् ।

काचित्कीर्णा रजोभिर्दिवमनुविदधौ मन्दवक्त्रेन्दुलक्ष्मी-
रश्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः ।

---

पुत्ररूपोपादेयत्वसामान्यरूपेणोपक्रमे उपादेयविशेषकन्यानिर्देशान्न प्रक्रमभङ्ग इति"* केचित् समादधति, तन्मतमाह—अत्र सत्यपीति, पुत्र एक उपादेयः तस्मिन् सत्यपीत्यर्थः। कन्या तूपादेयविशेषः। इदञ्च समाधानं सम्यगेवेति न दूषितम्। उपसर्गस्य नाम्नश्च क्रमभङ्गमाह—विपद इति। (A)युधिष्ठिरं प्रति भीमस्य उक्तिरियम्। विपदः आपदः कर्त्र्यः, आयतिः उत्तराभीष्टफलम्, आपदुपेतं जनं रहयति त्यजति, अगरीयान् लघुः, न पदं न भाजनम्। अत्रेति, व्युपसर्गविशिष्टस्योपक्रमस्य आपदुपेतमित्याङुपसर्गविशिष्टेन प्रतिनिर्देशान् भङ्ग इत्यर्थः। पर्यायस्य चेति, अत्र निर्देशादिति पूरणीयम्। तथाच लघुतापर्यायस्य अगरीयःपदस्य निर्देशात्तदुपक्रमस्य भङ्ग इत्यर्थः। अत्र अविक्रमोद्देशेन विपदभिभवविधिः तदुद्देशेन आयतित्यागविधिरित्येवं रीत्या उद्देश्यप्रतिनिर्देश्यता बोध्या। पाठपरावृत्त्या दोषं परिहरति—तदभिभव इति। तथाच सर्वनाम्ना प्रतिनिर्देशाददोषता। अत्र प्रकृतदोषपरिहारमात्रे तात्पर्यम्, अतश्छन्दोभङ्गदोषोऽत्र नाशङ्कनीयः। सकर्मकोपक्रमभङ्गदोषमपि परिहरति—लघुतामिति। न पदमित्यत्र सकर्मकत्वासम्भवात् न तत्र सकर्मकत्वेन निर्देशे आकाङ्क्षेत्यभिप्रायः। एकवचनोपक्रमे तदाकाङ्क्षितस्य तथैव निर्देशस्य बहुवचननिर्देशाद्भङ्गमुदाहरति—काचिदिति। युद्धे यात्रां कुर्वतां राज्ञां स्त्रीकृत्येनामङ्गलसूचनवर्णनमिदम्। पार्थिवानां प्रस्थाने यात्रायां नार्यः इति अनेन प्रकारेण पुरः भावि अशिवं शशंसुः। तत्र का का नारी केन केन प्रकारेण शशंसेत्यत्राह—काचिदिति। पतिविश्लेषदुःखेन भूमिपातात् रजःकीर्णा मन्दवक्त्रेन्दुलक्ष्मीः

---

(A) अत्रादर्शपुस्तकेषु 'युधिष्ठिरमुद्देजयन्त्या द्रौपद्या उक्तिरियम्' इति पाठो लिपिकृत्प्रमादकृत इति परिवर्त्तितः।

श्रेमुर्वात्या इवान्याः प्रतिपदमपरा भूमिवत् कम्पमानाः
प्रस्थाने पार्थिवानामशिवमिति पुरो भावि नार्यः शशंसुः ॥२४८

अत्र वचनस्य। 'काश्चित्कीर्णा रजोभिर्दिवमनुविदधुर्मन्दवक्त्रेन्दुशोभा निःश्रीकाः' इति, 'कम्पमानाः' इत्यत्र 'कम्पमापुः' इति च पठनीयम्।

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यताम्।
विश्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥ २४९ ॥

अत्र कारकस्य। 'विश्रब्धा रचयन्तु (A)शूकरवरा मुस्ताक्षतिम्' इत्यदुष्टम्।

---

काचित् तादृशविशेषणां दिवम् आकाशम् अनुविदधौ स्वसदृशीं चकार, तथाच नार्येव मन्देन्दुश्रीका रजःकीर्णा च द्यौर्बभूवेत्यर्थः। दिवस्तथात्वञ्च यात्रायाममङ्गलम्। एवम् अश्रीकत्वं दिग्दाहः प्राण्युद्भ्रमाश्च अमङ्गलम्। तादृशदिक्तुल्या नार्य एव ता बभूवुरित्यर्थः। सत्त्वं प्राणाः प्राणी च। एवं वात्या भ्रमो भूमिकम्पश्चामङ्गलम्। अत्रेति, एकवचनोपक्रमस्य काश्चिदित्यत्र भङ्ग इत्यर्थः। उपक्रममेव बहुवचनेन रचयति—काश्चिदिति। शोभा अश्रीका इति करणे बन्धशैथिल्यापत्तेः परिहरति—निःश्रीका इति। कम्पमाना इत्यत्र विधेयस्य कम्पस्योद्देश्यतया प्रतीत्या(B) विधेयाविमर्षं परिहरति—कम्पमाना इत्यत्रेति। प्रत्ययोक्तकारकक्रमभङ्गमाह—गाहन्तामिति। आश्रमे शकुन्तलादर्शनान्निवृत्ततद्दिनमृगयाभिलाषस्य दुष्मन्तस्य सेनापतिं प्रत्युक्तिरियम्। अद्य सर्वे पशवो निर्भयं स्वच्छन्दं विहरन्तु अस्मद्धनुश्च शिथिलज्याबन्धं सद् विश्राम्यत्विति समुदायार्थः। निपानम् अल्पसरः। कदम्बकं समूहः। (C)रोमन्थं हनुचलनम्। अत्रेति, प्रत्ययोक्तकर्तृकारकोपक्रमस्य वराह-

---

(A) शूकरशब्दः क्वचिद् दन्त्यादिरपि दृश्यते। तथाच—'तालव्या अपि दन्त्याश्च साम्ब-सूकर-पांसवः' इति बालबोधिन्याम्। अत्रोद्द्योतकाराः—शूकरशब्दस्य ग्राम्यत्वाद्बन्धशैथिल्याच्च—'विश्रब्धः कुरुतां वराहनिवहो मुस्ताक्षतिम्' इति युक्तं पठितुम्। एवं चात्मनेपदप्रक्रमभङ्गोऽपि नेति वदन्ति।

(B) अत्र प्रदीपकारेण 'शतृशानचोर्गुणीभूतक्रियान्तराभिधायकत्वनियमा'दिति हेतुरुक्तः।

(C) उद्गीर्णचर्वणं रोमन्थ इति कोषः।

अकलिततपस्तेजोवीर्यप्रथिम्नि यशोनिधा-
ववितथमदाध्माते रोषान्मुनावभि[1]धावति।
अभिनवधनुर्विद्यादर्पक्षमाय च कर्मणे
स्फुरति रभसात् पाणिः पादोपसंग्रहणाय च ॥ २५० ॥

अत्र क्रमस्य। पादोपसंग्रहणायेति पूर्वं वाच्यम्। एवमन्यदप्यनुसर्त्तव्यम्।

(२०) अविद्यमानः क्रमो यत्र। यथा—

द्वयं गतं संप्रति शोचनीयतां
समागमप्रार्थनया कपालिनः।
कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी ॥ २५१ ॥

---

पतिभिरित्यत्र भङ्गः, अत्र कर्मण एवोक्तत्वात्। यथासंख्यान्वयाकाङ्क्षायां तत्क्रमभङ्गमाह—अकलितेति। परशुरामागमने रामस्येयं भावना। मुनौ परशुरामे रोषात् अभिधावति आगच्छति सति मम पाणिः अभिनवेत्यादिकर्मणे युद्धाय पदोपसंग्रहणाय च रभसात् सहसा स्फुरति। तत्तत्कर्मोपयुक्तं मुनिविशेषणमाह—अकलितेति। अकलितयोः अनिर्वचनीययोः तपस्तेजसोः वीर्येण प्रथिमा महिमा यस्य तादृशे। अत्रेति, प्रथमोक्ततपोवीर्येणाकाङ्क्षितस्य पादोपसंग्रहणस्य पश्चादुक्त्या तत्क्रमभङ्ग(A) इत्यर्थः।

(२०) अक्रममाह—अविद्यमान इति। क्रमोऽत्र स्वार्थान्वितार्थकपदोत्तरपातितानियमरूपः, तद्रहितमित्यर्थः। द्वयमिति। अत्र त्वं च इत्यन्वये त्वंपदानन्तरं चकारानिर्देशाद् यथोक्तमक्रमत्वम्। [2]तद्धितान्तपदस्यापि तथा नियमात् तत्राप्य-

---

(A) क्रमभङ्गे दूषकताबीजमुक्तं प्रदीपे—'अत्र सर्वत्रैकरूपप्रसृतायाः प्रतीतेः स्थगनमुपघातो वा दूषकताबीजम्। यदुक्तम्—प्रक्रमस्यान्यथात्वेन प्रतीतौ प्रस्खलद्गतौ। ह्लादः स्फुरणास्वादी यत्र ग्लानत्वमश्नुते। दोषः प्रक्रमभेदाख्यः शब्दानौचित्यभूश्च सः॥ इति। अत एव नित्यदोषोऽय'मिति।

---

1. 'गच्छति' इति पाठान्तरम्। 2. 'एतत्पदस्यापि' क-ख।

अत्र त्वंशब्दानन्तरं चकारो युक्तः। यथा वा—

शक्तिर्निस्त्रिंशजेयं तव भुजयुगले नाथ दोषाकरश्री-
र्वक्त्रे पार्श्वे तथैषा प्रतिवसति महाकुट्टनी खड्गयष्टिः।
आज्ञेयं सर्वगा ते विलसति च पुरः किं मया वृद्धया ते
प्रोच्येवेत्थं प्रकोपाच्छशिकरसितया यस्य कीर्त्या प्रयातम् ॥२८२॥

अत्र 'इत्थं प्रोच्येव' इति न्याय्यम्। तथा—

'लग्नं रागावृताङ्ग्या' इत्यादौ 'इति श्रीनियोगात्' इति वाच्यम्।

---

क्रमत्वमुदाहरति—शक्तिरिति। अत्र शक्त्यादिस्त्रीलिङ्गपदार्थाः स्त्रीत्वेनाध्यासिता बोध्याः। यस्य राज्ञः कीर्त्या स्त्रिया प्रकोपाद् इत्थं प्रोच्येव प्रयातम् अर्थाद् दूरम्। कौरूप्याद्दौर्भाग्येण गमनं निरस्यति—शशिकरेति। किं प्रोच्येव इत्यत्राह—शक्तिरित्यादि। हे नाथ शक्त्याद्यसन्नायिकाचतुष्कं तव सन्निहितमस्ति अतः वृद्धया प्रौढयैव श्लेषात् जरत्या मया किं ते इति प्रोच्येवेति समुदायार्थः। शक्त्यादीनामसन्नायिकात्वमुपपादयति—शक्तिरिति। शक्तिः सामर्थ्यं स्त्री निस्त्रिंशजा खड्गजैव, श्लेषात् ऊनत्रिंशत् पुरुषजन्या वेश्यापुत्री, भुजयुगले तत्सत्त्वात् कोपः। त्रिंशो हि त्रिंशतः पूरणः, स निर्गतो यस्मात् समूहात्(A) स ऊनत्रिंशत् पुरुषरूपः समुदायः। चक्रवर्त्ती तु—'निस्त्रिंशो निर्दये खड्गे' इति कोषात् निर्दयजन्येति व्याचष्टे, तन्न, तावता कोपानौचित्यात्। तथा दोषाकरस्य चन्द्रस्य श्रीरेव श्लेषाद् दोषनिधानश्रीः नायिका, वक्त्रे तत्सत्त्वात् कोपः। तथा महाकुट्टनी(B) महच्छेदिका खड्गयष्टिरेव महाकुट्टनी व्यभिचारस्य महादूती, पार्श्वे तत्सत्त्वात् कोपः। तथा आज्ञा स्त्री ते सर्वगा सर्वोपरि स्थिता सैव सर्वगा सर्वपुरुषगामिनी स्वैरिणी पुरतस्तद्विलासात् कोपः। अत्रेति, वृद्धया ते इत्यन्तस्य परामर्शकं हि 'इत्थम्' पदं तदुत्तरपातित्वनियतम्, इवकारतः परपातात्तु अक्रमत्वम्(C)। तथा लग्नमितीति विदितं तेऽस्त्वित्यन्तपरामर्शकत्वाद् इतिकारस्य।

---

(A) निस्त्रिंशपदनिष्पत्तौ निर्गतस्त्रिंशत इति वाक्यम् 'क्रान्तादौ निरादेः प्याः' इति सूत्रेण च समास इति रामतर्कवागीशः।

(B) महच्छेदिका शत्रूणामुत्सवनाशिनीत्यर्थः।

(C) अक्रमत्वमिति, अपदस्थपदादस्य भेद उक्तः प्रदीपे—'वयन्तु ब्रूमः, अव्यवधानेनैव यत्राभिमतप्रतीतिजननसामर्थ्यं तदेतस्य विषयः। यदुक्तं महिमभट्टेन—

(२१) अमतः प्रकृतविरुद्धः परार्थो यत्र। यथा—

राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी।

गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥२८३॥

अत्र (A)प्रकृते रसे विरुद्धस्य शृङ्गारस्य व्यञ्जकोऽपरोऽर्थः॥

अर्थदोषानाह—

(७६) [१]अर्थोऽपुष्टः [२]कष्टो [३]व्याहत[४]पुनरुक्त[५]दुष्क्रम[६]ग्राम्याः ॥ ५५ ॥

[७]सन्दिग्धो [८]निर्हेतुः [९]प्रसिद्धि[१०]विद्याविरुद्धश्च ॥

[११]अनवीकृतः [१२]सनियमानियम[१३]विशेषा[१४]विशेष[१५]परिवृत्ताः ॥५६॥

---

(२१) अमतपरार्थपदं व्याचष्टे—अमत इति। 'प्रकृतविरुद्धः' प्रकृतरसविरोधिरसव्यञ्जकः, 'परार्थः' अप्रकृतः रूप्यमाणादिरर्थः, न तु अप्रकृतरसविभावादिरूपः, तस्य वक्ष्यमाणप्रतिकूलविभावादिग्रहदोषरूपत्वात्। राम मन्मथेति। राम एव मन्मथः, निशाचरी राक्षसी ताडका सैव निशाचरी अभिसारिका, दुर्गन्धवद्रुधिरमेव सुगन्धिद्रव्यविशिष्टं रक्तचन्दनम्, जीवितेशः यम एव स्वप्राणेश्वर उपनायकः। अत्र एते रूप्यमाणा अर्था अप्रकृताः प्रकृतबीभत्सरसविरोधिशृङ्गारव्यञ्जका इत्याह—अत्रेति।

अर्थदोषानाहेति। अर्थान्वयव्यतिरेकानुविधायित्वादर्थदोषता। सनियमादि-

---

अत एव व्यवहितैर्बुधा नेच्छन्ति चादिभिः।
सम्बन्धं ते हि शक्तिं स्वामुपदध्युरनन्तरे॥ इति

न च नञोऽप्यव्यवहितस्यैव तथात्वम्, अतः 'स्रजं न काचिद् विजहौ' इत्यादिकमप्यक्रमभेदः स्यादिति वाच्यं 'न खलु न खलु बाणः सन्निपात्योऽयमस्मिन्' इत्यादौ व्यवधानेऽपि प्रतीतिविशेषाभावात्' इति।

(A) प्रकृते रस इति, अत्र पूर्वापरपर्यालोचनया रामवृत्त्युत्साहस्थायिभावको वीररसः, प्राचीनटीकाकृद्गणसम्मतस्ताडकाशरीरालम्बनो वा बीभत्सरसोऽभिप्रेत इति चिन्तनीयम्।

[१६] साकाङ्क्षो[१७]ऽपदयुक्तः [१८] सहचरभिन्नः [१९] प्रकाशितविरुद्धः ।
[२०] विध्य[२१]नुवादायुक्त[२२]स्त्यक्तपुनःस्वीकृतो[२३]ऽश्लीलः ॥ ५७ ॥

दुष्ट इति सम्बध्यते । (A)क्रमेणोदाहरणानि—

(१) अतिविततगगनसरणिप्रसरणपरिमुक्तविश्रमानन्दः ।
मरुदुल्लासितसौरभकमलाकरहासकृद् रविर्जयति ॥ २५४ ॥

अत्रातिविततत्वादयोऽनुपादानेऽपि प्रतिपाद्यमानमर्थं न बाधन्त इत्यपुष्टाः, न त्वसङ्गताः पुनरुक्ता वा ।

(२) सदा मध्ये यासामियममृतनिस्यन्दसुरसा
सरस्वत्युद्दामा वहति बहुमार्गा परिमलम् ।
प्रसादं ता एता घनपरिचिताः केन महतां
महाकाव्यव्योम्नि स्फुरितमधुरा यान्तु रुचयः ॥ २५५ ॥

---

चतुष्टये परिवृत्तपदार्थान्वयाद् दोषचतुष्टयम् । विध्यनुवादयोरयुक्तपदार्थान्वयाद् दोषद्वयम् । दुष्ट इतीति, दुष्टं पदमित्यतो लिङ्गव्यत्ययेनेत्यर्थः ।

(१) अपुष्टो यथेति, विशेष्योत्कर्षानाधायकविशेषणवत्त्वं तत्त्वम् । अतिविततेति । रविः जयति । कीदृशः ? अतिविततायां गगनसरणौ प्रसरणे गमने परित्यक्तविश्रान्तिरूपानन्दः, मरुदुल्लासितसौरभस्य कमलाकरस्य हासकारी च । अत्रेति, नन्वतिदीर्घपथगमनेऽपि विश्रान्तित्यागेन प्रतिपाद्यमानस्य रवेर्भवत्येवोत्कर्षः अनुपादाने तु बाध्यत एवेति चेत्, न ; प्रत्यक्षसिद्धसदाप्रसरणस्य रवेर्दीर्घे दीर्घे वा पथि तुल्यश्रमेण पथोऽतिविततत्वेन तस्योत्कर्षानाधानात्, कदाचित् प्रसरत एव तत उत्कर्षाधानात् । आदिना मरुदुल्लासितेत्यादिपरिग्रहः । केचित्तु अतिविततत्वादय इत्यत्र अतद्गुणसंविज्ञानबहुव्रीहिणा मरुदुल्लासितेत्यादावेव अपुष्टार्थत्वमाहुः । स्वच्छन्दोच्छलदित्यादिकन्तु अस्य निर्विवादमुदाहरणम् ।

(२) कष्टो यथेति । आसत्त्यादिसत्त्वेऽपि विलम्बबोध्यार्थत्वं तत्त्वम् । विलम्बबीजञ्च क्वचित् सामान्यशब्दस्य विशेषपरत्वे तात्पर्यस्य क्वचित्तु लक्ष्यार्थविशेषपरत्वे तात्पर्यस्य च ग्राहकाभाव एव, उदाहरणे च तथात्वमवधेयम् । सदा मध्य

---

(A) यद्यपि टीकायाम् अपुष्टो यथेत्यादिदर्शनात् तदनुसारेण वृत्तावपि तथैव पाठो ग्रहीतुमुचितस्तथाऽपि टीकाकृता नासौ रीतिः सर्वत्रानुसृतेति मुद्रितपुस्तकसंवादी पाठो गृहीतः ।

अत्र यासां कविरुचीनां मध्ये सुकुमारविचित्रमध्यमात्मक-त्रिमार्गा भारती चमत्कारं वहति, ता गम्भीरकाव्यपरिचिताः कथमितरकाव्यवत् प्रसन्ना भवन्तु। यासामादित्यप्रभाणां मध्ये त्रिपथगा वहति, ता मेघपरिचिताः कथं प्रसन्ना भवन्तीति संक्षेपार्थः।

(३) जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये।

---

इति, स्वीयकाव्येन बौद्धकविश्रद्धानां मेघाच्छन्नादित्यप्रभाणाञ्च प्रसादनोपाये कस्यचिदियं भावना। वृत्तावेव अस्य संक्षेपेण व्याख्यासत्त्वेऽपि तदव्याख्यातांशविस्तारार्थं व्याख्यायते। यथा—यासां बौद्धकविरुचीनां मध्ये विषयतायां कवित्वरूपा सरस्वती सुकुमारविचित्रमध्यमाख्यविदर्भगौडपञ्चालात्मकबहुमार्गा परिमलं चमत्कारं वहति जनयति, कीदृशी? अमृतनिस्यन्दवत् सरसा। सरसमिति पाठे तु वहनक्रियाविशेषणम्। उद्दामा उद्भटगुणा। ता एता बौद्धकवीनां रुचयः केन मदीयकाव्येन प्रसादं यान्तु, यतः ता महतां कालिदासादीनां [1]सर्गबन्धरूपमहाकाव्यरूपे व्योम्नि यद् घनं प्रत्येकपद्यात्मकं गम्भीरकाव्यं तत्परिचिताः तद्विषयाः, विस्तृतत्वात् महाकाव्यस्य व्योमरूपणम्। तथा स्फुरितमधुरा विषयीकृतशृङ्गारादिमधुररसाः, स्वस्य तादृशकाव्यकरणासामर्थ्यात् तदुपायभावना। तथा यासाम् आदित्यप्रभाणां मध्ये बहुमार्गा त्रिपथगा गङ्गा परिमलं पद्मादिसौरभं वहति, आकाशगङ्गाया आदित्यप्रभावेष्टितत्वात् मध्यवर्त्तित्वम्। तथा—अमृतस्य जलस्य निस्यन्देन सरसाः रसस्य प्रीतेः जनिकाः। 'सरसमिति' पाठे तु वहनक्रियाविशेषणम्। पुनः कीदृशी? (A)सरस्वती पृथिव्यामागत्य सरोवरवती उद्दामा वेगशालिनी, ता आदित्यप्रभा घनेन मेघेन परिचिताः सम्बद्धाः महतां महाकाव्यतुल्ये व्योम्नि केन प्रसादं यान्तु। कीदृश्यः? स्फुरितः मधुरः मनोज्ञपदार्थो याभ्यः तादृश्यः। वृत्तौ इतरकाव्यवदित्यत्र इतरकाव्ये इवेत्यर्थः।

(३) व्याहतमुदाहरति—जगतीति। निन्दितस्य पुरस्कारेण निन्दाया व्याहतिः, एवं पुरस्कृतस्य निन्दया पुरस्कारस्य व्याहतिश्च तत्त्वम्। मालत्यां माधवस्यानङ्ग-

---

(A) सरस्वतीशब्दो नदीसामान्यमपि बोधयतीति बहुमार्गा-सरस्वतीतिपदद्वयेन गङ्गा लभ्यत इत्यन्ये।

---

1. 'सर्गबन्धात्मक-' ख।

मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकः स एव महोत्सवः ॥ २५६ ॥

अत्रेन्दुकलादयो यं प्रति पस्पशप्रायाः स एव चन्द्रिकात्वमुत्कर्षार्थमारोपयतीति व्याहतत्वम् ॥

(४) कृतमनुमतमित्यादि ॥ २५७ ॥

अत्रार्जुनार्जुनेति भवद्भिरिति चोक्ते सभीमकिरीटिनामिति किरीटिपदार्थः पुनरुक्तः ।

यथा वा—

अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन् मम पितरि गुरौ सर्वधन्वीश्वराणाम् ।

---

लेखोऽयम् । नवेन्दुकलादयः ते ते भावाः, प्रकृत्या मधुराः अत एव जयिनः उत्कृष्टाः अन्ये च ये मनः मदयन्ति ते जगति सन्त्येव न तु मम महोत्सवहेतव इत्यर्थः । तर्हि तव किं महोत्सवहेतुरित्याह—मम तु इति । इयं मालत्येव विलोचनचन्द्रिका यत् नयनस्य विषयं विषयत्वं याता प्राप्ता अस्मिन् जन्मनि स एव एको महोत्सवहेतुरित्यर्थः । उत्सवः उत्सवहेतुः । अत्रेति (येन) नवेन्दुकलादय इत्यत्रादिपदात् चन्द्रिकाऽपि निन्दिता, तेनैव माधवेन मालत्यां चन्द्रिकारूपणात् पुरस्कृता, रूप्यमाणनिष्ठोत्कर्षलाभार्थमेव अन्यत्र तद्रूपणात् । 'यं' माधवम्, 'पस्पशाः' तुच्छाः । पुरस्कृत्य निन्दने तु—

'देवि त्वन्मुखपङ्कजेन शशिनः शोभातिरस्कारिणा
पश्याब्जानि विनिर्जितानि सहसा गच्छन्ति विच्छायताम्' ॥

इत्युदाहरणम्, मुखे रूपणेन पुरस्कृतस्य पङ्कजस्य मुखेनैव निर्जयकथनेन निन्दितत्वात् ।

(४) पुनरुक्तमुदाहरति—कृतमिति । व्याख्यातमिदं प्राक् । किरीटिपदार्थ इति, सम्बोध्यस्य तस्य भवत्पदेनैव लाभादिति भावः ।

अस्त्रज्वालेति । अज्ञात द्रोणमरणवार्त्तस्याश्वत्थाम्नः पलायमानसैन्याश्वासनमिदम् । अस्मिन् सर्वधन्वीश्वराणां गुरौ मम पितरि द्रोणाचार्ये सेनानाथे स्थिते सति कर्ण अलमित्यादि । सम्भ्रमो भयम् । हार्दिक्यः कृतवर्मा । मम पितरि कीदृशे ?

कर्णाऽलं सम्भ्रमेण व्रज कृप समरं मुञ्च हार्दिक्य शङ्कां
ताते चापद्वितीये वहति (A)रणधुरं को भयस्यावकाशः ॥२५८॥

अत्र चतुर्थपादवाक्यार्थः पुनरुक्तः ।

(५) (B)भूपालरत्न निर्दैन्य प्रदानप्रथितोत्सव ।
विश्राणय तुरङ्गं मे मातङ्गं वा मदालसम् ॥ २५९ ॥

अत्र मातङ्गस्य प्राङ्निर्देशो युक्तः ।

(६) स्वपिति यावदयं निकटे जनः स्वपिमि तावदहं किमपैति ते ।
तदयि साम्प्रतमाहर रूपकं त्वरितमूरुमुदश्चय कुञ्चितम् ॥२६०॥

एषोऽविदग्धः ।

(७) मात्सर्यमुत्सार्येत्यादि ॥ २६१ ॥

---

अस्त्रज्वालया अवलीढं प्रतिपक्षबलमेव जलधिः, तस्य अन्तरौर्वाग्नितुल्ये । अत्रेति, इदञ्चापातत एव, न भेतव्यं न भेतव्यमितिवत् भीताश्वासने पुनरुक्तेरदोषत्वात्, किन्तु पूर्वोक्त उदाहरण एव तात्पर्यं बोध्यम् ।

(५) दुष्क्रम इति प्रार्थनादौ तदुचितक्रमेणानिर्दिष्टार्थत्वं तत्त्वम् । भूपालेति, निर्गतम् अर्थिनां दैन्यं यस्मात् हे तादृश, विश्राणय देहि । अत्रेति प्रार्थितबहुमूल्यवस्त्वप्राप्तिसम्भावनया अल्पमूल्यवस्तुप्रार्थनस्यैव औचित्यात्, न तु तदधिकमूल्यवस्तुप्रार्थनस्य ।

(६) ग्राम्य इति, वैदग्ध्यीराहित्येन उच्यमानार्थत्वं तत्त्वम् । स्वपितीति, नवोढां प्रति कामिन उक्तिरियम् । अयं जनः तव सखी, तत् तस्मात् । अयि सम्बोधने । रूपकं शरीरम् । कूर्परमिति पाठे कफोणिम्, "स्यात् कफोणिस्तु कूर्परः" इति कोषात् । आहर संवृणु ।

---

(A) रणधुरमिति समासविधेरनित्यत्वं सूचयति ।

(B) भूपालेति । निर्दैन्येन दानशूरतया विषादरहितेन प्रदानेन अर्थवितरणेन प्रथित उत्सवो यस्य, तत्सम्बोधनम् । शेषं सुगमम् ।

अत्र प्रकरणाद्यभावे सन्देहः शान्तशृङ्गार्यन्यतराभिधाने तु निश्चयः।

(८) गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाद् यस्याभून्न खलु तव कश्चिन्न विषयः।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भयाद्
विमोक्ष्ये शस्त्र त्वामहमपि ततः[1] स्वस्ति भवते ॥२६२॥

अत्र द्वितीयशस्त्रविमोचने हेतुर्नोपात्तः।

---

(७) सन्दिग्ध इति। व्यङ्ग्यार्थविशेषे वक्तुस्तात्पर्यसंशयस्तत्त्वम्। **मात्सर्य-मिति।** व्याख्यातमिदम्। **अत्रेति,** प्रकरणाद्यभावेन वक्तुः शान्तत्वशृङ्गारित्वैकतर-निश्चयाभावात् स्त्रीनितम्बसेवने भूधरनितम्बसेवने वा वक्तुरभिप्राय इति सन्देह इत्यर्थः। [2]तदभिप्रेतार्थे तदीयनिश्चयस्तु अन्यतरनिश्चयत्वेनैव व्यङ्ग्य इत्येव (A)गुणी-भूतव्यङ्ग्ये शान्तशृङ्गार्यन्यतरनिश्चयस्य व्यङ्ग्यत्वमुक्तम्[2]*। **अन्यतराभिधान इति** 'अन्यतरस्य' शान्तत्वादिना निश्चितस्य 'अभिधाने' 'निश्चयः' तत्तत्तात्पर्यस्य इत्यर्थः।

(८) निर्हेतुरिति। हेत्वाकाङ्क्षासत्त्वे तदनभिधानं तत्त्वम्। **गृहीतमिति।** कर्णोपरि क्रोधात् त्यज्यमानं शस्त्रं सम्बोध्य अश्वत्थाम्न उक्तिरियम्। हे शस्त्र, येन मम पित्रा नोचितमपि ब्राह्मणजात्यनुचितमपि त्वं द्रुपदरूपशत्रुपरिभवभयाद् गृहीतम् आसीः, यस्य मम पितुः प्रभावात् तव न विषयः कश्चित् न अभूत् इन्द्रस्यापि तत्पात-विषयत्वात्, तेन मम पित्रा सुतशोकात् मृतत्वेन श्रुतमच्छोकात् त्वं परित्यक्तमसि भयात्तु न, अहमपि त्वां विमोक्ष्ये, ततः कारणात् भवते स्वस्तीत्यर्थः। **अत्रेति,** पितुः शस्त्रत्यागे सुतशोकस्य हेतुत्वकथनाद् अपिकारेण स्वशस्त्रत्यागेऽपि हेत्वाकाङ्क्षो-त्थापनात्। न च अहमपि ततो विमोक्ष्ये इत्यन्वयेन पितृशस्त्रत्यागस्य पितृमरणस्य पितृशोकस्यैव वा हेतोः कथनमस्तीति वाच्यम्, पितृशस्त्रत्यागस्य स्वशस्त्रत्यागं प्रति हेतुत्वस्यैवाभावात् पितृमरणपितृशोकयोस्तु पूर्वानुक्तत्वेन तत्पदस्य तत्परामर्श-कत्वस्यैव अभावात् तयोः क्रोधोद्दीपकत्वेन प्रत्युत शस्त्रधारण एव हेतुत्वाच्च।

---

(A) गुणीभूतव्यङ्ग्ये तन्निरूपणपरपञ्चमोल्लासे इत्यर्थः।

---

1. 'यतः' इति पाठान्तरम्। 2. 'एकतरनिश्चयत्वेन सामान्येन तन्निश्चयस्तु व्यङ्ग्य इति गुणीभूतव्यङ्ग्यत्वमुक्तम्' ख, 'तदभिप्रायसन्देहात्तन्मूलभूतनिश्चयस्य व्यङ्ग्यत्वं बोध्यम्, तेन गुणीभूतव्यङ्ग्ये यच्छान्तशृङ्गार्यन्यतरनिश्चयस्य व्यङ्ग्यत्वमुक्तं तन्नानुपपन्नम्' ग।

(९) इदं ते केनोक्तं कथय कमलातङ्कवदने
यदेतस्मिन् हेम्नः कटकमिति धत्से खलु धियम् ।
इदं तद्दुःसाध्याक्रमणपरमास्त्रं स्मृतिभुवा
तव प्रीत्या चक्रं करकमलमूले विनिहितम् ॥२६३ ॥

अत्र कामस्य चक्रं लोकेऽप्रसिद्धम् ।

यथा वा—

उपपरिसरं गोदावर्याः परित्यजताध्वगाः !
सरणिमपरो मार्गस्तावद्भवद्भिरिहेक्ष्यताम् ।
इह हि विहितो रक्ताशोकः कयाऽपि हताशया
चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः ॥ २६४ ॥

अत्र पादाघातेनाशोकस्य पुष्पोद्गमः कविषु प्रसिद्धो न पुनरङ्कुरोद्गमः ।

---

(६) प्रसिद्धीति, कविप्रसिद्धिविरुद्ध इत्यर्थः । इदं ते इति । कमलस्य आतङ्को यस्मात् हे एतादृशवदने एतस्मिन् तव हस्तस्थे वस्तुनि यत् हेम्नः कटकमिति धियं धत्से इदं ते केन उक्तं तत् कथय ईदृशबुद्धिजनिका कस्य मिथ्योक्तिरित्यर्थः । तत् किमिदमित्यत्राह—इदं तदिति । स्मृतिभुवा कामेन (तव) प्रीत्या तत् स्वीयं चक्रं तव करकमलमूले विनिहितम् । कीदृशम् ? दुःसाध्यस्य जनस्य आक्रमणार्थं परमास्त्रम् । अत्रेति । 'लोके' कविलोके, अन्यलोकप्रसिद्धेः प्रकृतानुपयुक्तत्वात् ।

प्रपञ्चयति—यथा वेति । हे अध्वगाः अर्थात् विरहिणः गोदावर्याः उपपरिसरं परिसरस्य तटस्य समीपे सरणिं पन्थानं परित्यजत भवद्भिस्तावत् अपरो मार्ग इह देशे ईक्ष्यताम्, यतः कयाऽपि हताशया इह पथि रक्ताशोकः चरणनलिनन्यासेन उदञ्चन्नवाङ्कुररूपकञ्चुकः विहितः[1] । तथाच—तादृशोद्दीपकदर्शनाद् भवतां मृत्युः स्यादिति भावः । अत्रेति । ननु—

'कुसुमं कृतदोहदस्त्वया यदशोकोऽयमुदीरयिष्यति'

---

1. अतः परं क-पुस्तके सर्वाङ्गव्यापकत्वात् कञ्चुकस्य कवचस्य रूपणम्' इत्यधिकम् ।

सुसितवसनालङ्कारायां कदाचन कौमुदी-
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद् विधुः।
तदनु भवतः कीर्त्तिः केनाप्यगीयत येन सा
प्रियगृहमगान्मुक्ताशंका क्व नासि शुभप्रदः॥ २६५॥

अत्रामूर्तोऽपि कीर्त्तिः ज्योत्स्नावत् प्रकाशरूपा कथितेति लोकविरुद्धमपि कविप्रसिद्धेर्न दुष्टम्।

(१०) सदा स्नात्वा निशीथिन्यां सकलं वासरं बुधः।
नानाविधानि शास्त्राणि व्याचष्टे च शृणोति च॥ २६६॥

अत्र [1]ग्रहोपरागं विना रात्रौ स्नानं धर्मशास्त्रेण विरुद्धम्।

---

इति कालिदासकाव्ये दोहदस्यापि वर्णनात् कथं पुष्पोद्गम एव कविषु प्रसिद्धः, नाङ्कुरोद्गम इति चेत्, न; अत्र नवाङ्कुरपदेन पत्रनवाङ्कुरस्यैव उक्तत्वात् अशोकपुष्पनवाङ्कुरस्य तु पुष्पाच्छादितरक्तिमत्वेन उद्दीपकत्वाभावात् पत्रनवाङ्कुरस्यैव शुकचञ्चुतुल्यस्य उद्दीपकत्वात् तद्दर्शनस्यैवात्र निषिद्धत्वात्। अत एव पथि पथि शुकचञ्चूचारुराभाऽङ्कुराणामिति पत्राङ्कुराणामुद्दीपकत्वमुक्तं तस्य च पादाघातेन कविष्वप्रसिद्धिरेव।

(A)कविप्रसिद्धिविरोध एवात्र दोषः, तत्प्रसिद्धिसत्त्वे तु नान्यलोकप्रसिद्धिविरोधो दोष इत्याह—सुसितेति। कौमुदी चन्द्रिका तद्रूपे महसि तेजसि सति कदाचन श्वेतवस्त्रालङ्कारायां सुदृशि नायिकायां स्वैरं यान्त्यां शङ्काराहित्येन अभिसारार्थं स्वच्छन्दं गच्छन्त्यां सत्यां विधुः अस्तं गतः अभूत्, तथा च तस्याः श्वेतवस्त्राभरणे लोकदृश्यत्वशङ्का जाता इति अर्थादूह्यम्। तदनु भवत इत्यादि, येन कीर्त्तिगानेन ज्योत्स्नावत् प्रकाशकरणात् सा त्यक्ताशङ्का सती प्रियगृहम् अगात्। अत्र अर्थान्तरं न्यस्यति—क्व नासीति।

(१०) विद्याविरुद्धे उदाहर्त्तव्ये स्मृतिविद्याविरुद्धमाह—सदेति। सकलं वासरं

---

(A) कविप्रसिद्धयश्च—'मालिन्यं व्योम्नि पापेऽयशसि' इत्यादिदर्पणकृदुक्त्या बोध्याः। अन्यच्च—

स्त्रीणां स्पर्शात् प्रियङ्गुर्विकसति वकुलः सीधुगण्डूषसेकात्
पादाघातादशोकस्तिलककुरुवकौ वीक्षणालिङ्गनाभ्याम्।
मन्दारो नर्मवाक्यात् पटु मधुहसनात् चम्पको वक्त्रवाताच्
चूतो गीतान्नमेरुर्विकसति च पुरो नर्त्तनात् कर्णिकारः॥ इति

---

1. "ग्रहोपरागादिकम्" इति मुद्रितपुस्तकपाठः।

अनन्यसदृशं यस्य बलं बाह्वोः समीक्ष्यते ।
षाड्गुण्यानुसृतिस्तस्य सत्यं सा निष्प्रयोजना ॥ २६७ ॥

एतद् अर्थशास्त्रेण ।

(A)विहाय दूरे केयूरमनङ्गाङ्गनमङ्गना ।
बभार कान्तेन कृतां करजोल्लेखमालिकाम् ॥ २६८ ॥

अत्र केयूरपदे नखक्षतं न विहितमिति एतत् कामशास्त्रेण ।

(B)अष्टांगयोगपरिशीलनकीलनेन
दुःसाध्यसिद्धिसविधं विदधद्विदूरे ।

---

दिनं व्याप्येत्यर्थः । ग्रहोपरागं विनेति

दिवाकरकरैः पूतं दिवा स्नानं प्रशस्यते ।
अप्रशस्तं निशि स्नानं राहोरन्यत्र दर्शनात् ॥

इति धर्मशास्त्रम् ।

नीतिशास्त्रविरुद्धमाह—अनन्येति । षाड्गुण्यं मन्त्रणा तदनुसृतिः तदनुसरणम्, सा प्रसिद्धा । 'अर्थशास्त्रं' नीतिशास्त्रं तेन सह विरुद्धमित्यर्थः, मन्त्रणासहितस्यैव बलस्य सिद्धिहेतुत्वेन तेनोक्तत्वात् ।

कामशास्त्रविरुद्धमाह—विहायेति । अनङ्गाङ्गनमिति करजोल्लेखमालिका-विशेषणम् । केयूरपदे इति,—

नखक्षतस्य स्थानानि कक्षो वक्षस्तथा गलः ।
पार्श्वौ जघनमूरू च स्तनगण्डललाटिकाः ॥

---

(A) विहायेति । अस्य प्रथमार्द्धं 'विधाय दूरे केयूरमनङ्गाङ्गदमङ्गना' इति पठित्वा 'अङ्गना केयूरं प्रसिद्धमङ्गदं दूरे विधाय अनङ्गाङ्गदरूपां कान्तेन कृतां करजानां नखानामुल्लेखानां क्षतानां मालिकां पङ्क्तिं बभार धृतवतीत्यन्वयः । अनङ्गाङ्गदमिति अनङ्गाय अङ्गप्रदमेवानङ्गसम्बन्धि बाहुभूषणमिति श्लेषेणार्थः' इत्युक्तमुदाहरणचन्द्रिकाकारैः ।

(B) अष्टाङ्गेति । व्याख्यातमिदमुद्द्योतकारैः—यम-नियमासन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधयोऽष्टौ योगाङ्गानि । तादृशाङ्गकयोगस्य परिशीलनं मुहुराचरणं तेन यत् कीलनमभ्यासदार्ढ्यं तेन दुःसाध्या दुष्प्रापा या सिद्धिर्मुक्तिस्तस्याः सविधं समीपवर्त्तिनमसम्प्रज्ञातलक्षणं पुरुषमात्रविश्रान्तमनोवृत्तिरूपं योगं दूरे विदधत् तमनपेक्ष्यैव अभिमतामिष्टां विवेकख्यातिं प्रकृतपुरुषयोर्भिन्नत्वज्ञानरूपामासादयन्नसौ समाधिधनानां योगिनां मौलिमणिरुत्कृष्टो विमुक्त इत्यन्वयः । सम्प्रज्ञातयोगः ( प्रकाशे तु योगपदस्थाने समाधिपदमस्ति ) सविकल्पकसमाधिः यत्राऽऽत्मा विषयान्तरं च भासते आत्ममात्रं वा । असम्प्रज्ञातसमाधिः सर्ववृत्तिनिरोधरूपः, तत्र हि स्वरूपमात्रेऽवस्थानमिति ।

आसादयन्नभिमतामधुना विवेक-
ख्यातिं समाधिधनमौलिमणिर्विमुक्तः ॥ २६९ ॥

अत्र विवेकख्यातिस्ततः संप्रज्ञातसमाधिः पश्चादसंप्रज्ञातस्ततो मुक्तिर्न तु विवेकख्यातौ । एतद् योगशास्त्रेण । एवं विद्यान्तरैरपि विरुद्धमुदाहार्यम् ।

(११) प्राप्ताः श्रियः सकलकामदुघास्ततः किं
दत्तं पदं शिरसि विद्विषतां ततः किम् ।
सन्तर्पिताः प्रणयिनो विभवैस्ततः किं
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥ २७० ॥

अत्र ततः किमिति न नवीकृतम् । तत्तु यथा—

यदि दहत्यनलोऽत्र किमद्भुतं यदि च गौरवमद्रिषु किं ततः ।
लवणमम्बु सदव महोदधेः प्रकृतिरेव सतामविषादिता ॥२७१॥

(१२) यत्रानुल्लिखि[1]ताख्यमेव निखिलं निर्माणमेतद्विधे-
रुत्कर्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः परा ।

---

इति वात्स्यायनोक्तस्थानभिन्नत्वात् । योगशास्त्रविरुद्धमाह—अष्टाङ्गेति । समाधिधनानां योगिनां मौलिमणिः सः अधुना विवेकख्यातिं सम्प्रज्ञातसमाधिम् आसादयन् प्राप्नुवन् विमुक्तः । कीदृशः ? अणिमलघिमादियोगोपसर्गरूपदुःसाधसिद्धीनां सविधं सान्निध्यं दूरे विदधत् । दूरे तद्विधानस्य उपायमाह—अष्टाङ्गेति । यमनियमाद्योऽष्टौ योगाङ्गानि, कीलनं संस्कारदार्ढ्यम् । दुःसाधसिद्धिः अणिमलघिमादिसिद्धिः योगोपसर्गरूपा मुक्तिप्रतिबन्धिका । अत्रेति । सम्प्रज्ञातासम्प्रज्ञातौ समाधिविशेषौ । 'विद्यान्तरं' वैद्यकादि ।

(११) अनवीकृतमाह—प्राप्ता इति । बहुशः प्रतिपादनीयस्यार्थस्य भङ्गीपरावृत्तिं विना एकयैव भङ्ग्या कथनं तत्त्वम् । अत्र ततः किम् इत्यस्यानन्तरं यदि मुक्तिर्न जातेति शेषः । नवीकृतं प्रत्युदाहरति—तत्तु यथेति । अविषादिता सतां प्रकृतिः स्वभाव एव । तत्र प्रतिवस्तूपमामाह—यदीति । अत्र 'किम् अद्भुतम्', 'किं ततः', 'सदैव' इत्येषां त्रयाणामपि स्वाभाविकत्वे पर्याप्तिः भङ्गीमात्रपरावृत्तिः ।

---

1. '-तार्थमेव' इति पाठान्तरम् ।

याताः प्राणभृतां मनोरथगतीरुल्लङ्घ्य यत्संपद्-
स्तस्याभासमणीकृताश्मसु मणेरश्मत्वमेवोचितम् ॥ २७२ ॥

अत्र 'छायामात्रमणीकृताश्मसु मणेस्तस्याश्मतैवोचिता' इति सनियमत्वं वाच्यम् ।

(१३) वक्त्राम्भोजं सरस्वत्यधिवसति सदा शोण एवाधरस्ते
बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः ।
वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं
स्वच्छेऽन्तर्मानसेऽस्मिन् कथमवनिपते तेऽम्बुपानाभिलाषः ॥२७३॥

---

(१२) सनियमपरिवृत्तमाह—यत्रानुल्लिखितेति। नियम इतरव्यवच्छेदः, तद्वत्तया वक्तव्ये अनियमेन कथनं तत्त्वम्। यत्रेति, यत्र चिन्तामणौ अनुल्लिखिताख्यं विशिष्य अनिर्देश्यतत्तद्गुणनामकम् एतत् सकलं विधेर्निर्माणम्, तथा अमुकापेक्षया अयमुत्कृष्ट इत्येवमुत्कर्षप्रतियोगिकल्पनमपि यस्य परा न्यक्कारस्य कोटिः काष्ठा सर्वोत्कृष्टत्वात्। तथा यत्सम्पदः प्राणभृतां मनोरथगतीः उल्लङ्घ्य याताः मनोरथ-विषयतोऽप्यधिका इत्यर्थः। तस्य चिन्तामणेः आभासमणीकृताश्मसु मध्ये गणनाया-मिति शेषः, अश्मत्वं शिलात्वमेव न तु चिन्तामणित्वमित्यर्थः, निकृष्टमध्यगण्यत्वे निकृष्टसाधारणधर्मेणैव निर्देष्टुमौचित्यादिति भावः। अत्रेति। आभासो हि कान्तिः तद्विशिष्टमणयः चिन्तामणयोऽपि भवन्ति तन्मध्ये गण्यत्वे अश्मत्वानौचित्येन चिन्ता-मणिव्यावृत्तये छायामात्रेति सनियमत्वं वाच्यमित्यर्थः। एतादृशपाठे च तस्य इत्यस्याभावेन तत् प्रतिपत्ति—तस्याश्मतैवेति। अत्र च स्त्रीलिङ्गमणीशब्दाभिप्रायेणैव इदं दूषितम्, च्विप्रत्ययान्तत्वपक्षे तु अतथाभूततद्भावादेव चिन्तामणिव्यावृत्तौ नेदं दूषणमिति मन्तव्यम्। तदा च

'तस्याभासमणित्वशालिदृषदां मध्येऽश्मतैवोचिता'

इति पाठ एव एतद्दूषणमिति मन्तव्यम्।

(१३) अनियमपरिवृत्तमाह—वक्त्राम्भोजमिति। अनियमेन वक्तव्ये सनिय-मेन कथनं तत्त्वम्। वक्त्रेति, मृगयायां पिपासुं नृपतिं प्रति कस्यापि कवेरियमुक्तिः। हे अवनीपते, कथं ते अम्बुपानाभिलाषः? यतः ते वक्त्राम्भोजं सरस्वती भारत्येव सरस्वती नदी अधिवसति, शोणः रक्त एव शोणनदः, स एव ते अधरः। बलवत्तया

अत्र 'शोण एव' इति नियमो न वाच्यः ।

(१४) (A)श्यामां श्यामलिमानमानयत भोः सान्द्रैर्मषीकूर्चकै-
मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां श्रियम् ।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके
येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्रमुद्राङ्किताः ॥ २७४ ॥

अत्र 'ज्यौत्स्नीम्' इति श्यामाविशेषो वाच्यः ।

---

काकुत्स्थस्य रामस्य वीर्यस्मारकः समुद्रः मुद्रासहितश्च ते दक्षिणो बाहुरेव सेतुबन्धेन रामवीर्यस्मारको दक्षिणसागरः । वाहिन्यः सेना एव वाहिन्यो नद्यः क्षणमपि पार्श्वं नैव मुञ्चति । अन्तरपि जलसत्तां दर्शयति—स्वच्छेति, मानसे मनस्येव स्वच्छे निर्मले मानससरसि अन्तः सति च । अत्रेति । बहुजलसत्त्वप्रतिपादने शोणमात्रसत्त्वप्रतिपादनानौचित्यात्, क्रियासङ्गत्यभावाच्च नात्यन्तायोगव्यवच्छेदपरत्वमिति भावः ।

(१४) विशेषपरिवृत्तमाह श्यामामिति । विशिष्य वक्तव्यस्य सामान्यतोऽभिधानं तत्त्वम् । श्यामामिति, विरहिणः पुरूरवस उक्तिरियम् । श्यामां रात्रिम्, श्यामलिमानं श्यामलत्वम्, भोः इति आकाशसम्बोधनम्, (B) कूर्चकैः चूर्णैः, तन्त्रम् औषधम्, येन एवंविधकरणेन, तद्वक्त्रमुद्राङ्किताः तद्वक्त्रचिह्निताः, दश दिशः द्रष्टुम् अहं क्षमे ; भावनोपनीतं तद्वक्त्रं 'दशदिक्षु पश्यामि, एभिरन्धीकरणात्तु द्रष्टुं न क्षमे अत एवं कुरुध्वमित्यर्थः । अत्रेति, तमस्विन्याः स्वतः श्यामत्वेन श्यामीकरणासम्भवात् ।

---

(A) श्यामामिति । व्याख्यातमिदमुद्द्योते—विद्धशालभञ्जिकायां तृतीयेऽङ्के मृगाङ्कावलीवियोगातुरस्य राज्ञो विद्याधरमल्लदेवस्येयमुक्तिः । भो इत्याकाशसम्बोधनम् । श्यामा रात्रिः, सान्द्रैर्निबिडैर्मषीकूर्चकैर्मषीयुक्ततूलिकाभिः । तन्त्रं वैद्यकादिशास्त्रोक्तमौषधमित्यर्थः । अथमिति । शब्दो वार्थे । क्वचित्तु अपीति पाठः, तत्र समुच्चयः । चन्द्रस्यैवानयोः शोभाहेतुत्वात्तं द्वेष्टि चन्द्रमुद्रा चिह्नम्, एवं हि मुद्राङ्कयोरन्यतरवैयर्थ्यं स्यात् । तस्माद्वक्त्रमेव मुद्राङ्कः संजातो यास्विति व्याख्येयम् । अन्यसम्बन्धादन्यत्र समुदितं चिह्नं मुद्राङ्कः । भावनोपनीतं मुखं दशसु दिक्षु पश्यतश्चन्द्रादिभिरुद्दीपकतया सन्तापकैः क्रियमाणं प्रतिबन्धमुक्तरीत्या अपहरतेत्यर्थः' इति ।

(B) अत्र चूर्णैरिति विवरणदर्शनेन मूले टीकायां च कूर्चकैरित्यत्र चूर्णकैरिति पाठः टीकाकृत्सम्मतः, लिपिकृत्प्रमादात्तु एवं परिवर्त्तनं जातमिति सम्भाव्यते ।

---

1. 'प्रतिदिशि' क-ग ।

(१५) कल्लोलवेल्लितदृषत्परुषप्रहारै
रत्नान्यमूनि मकरालय माऽवमंस्थाः ।
किं कौस्तुभेन विहितो भवतो न नाम
याच्ञाप्रसारितकरः पुरुषोत्तमोऽपि ॥ २७५ ॥

अत्र 'एकेन किं न विहितो भवतः स नाम' इति सामान्यं वाच्यम् ।

(१६) (A)अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः प्रत्युत
द्रुह्यन् दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया ।
उत्कर्षं च परस्य मानयशसो[1]र्विस्रंशनं चात्मनः
स्त्रीरत्नं च जगत्पतिर्दशमुखो देवः कथं मृष्यते ॥ २७६ ॥

(१५) अविशेषपरिवृत्तमाह—कल्लोलेति । सामान्येन वक्तव्यस्य विशिष्याभिधानं तत्त्वम् । हे मकरालय समुद्र, तरङ्गचालितशिलानिष्ठुरप्रहारैः अमूनि रत्नानि मा अवमंस्थाः मा अवमानय । रत्नानि मम कथमुपादेयानीत्यत्राह—किमिति । पुरुषोत्तमः सर्वपुरुषश्रेष्ठः परमेश्वरोऽपि भवतः स्थाने याचनार्थं प्रसारितकरः किं कौस्तुभेन न विहितः अपि तु विहित एव, अत उपकारकत्वादुपादेयान्येव रत्नानीत्यर्थः । अत्रेति । सर्वरत्नसामान्येन धर्मेण कौस्तुभस्य उपकारकत्वे वक्तव्ये कौस्तुभत्वेन विशिष्य तथात्वप्रदर्शनाद् दोषः । पाठपरिष्कारेण दोषं परिहरति—एकेनेति । यद्यपि एकत्वमपि न सर्वसाधारणं तथाऽपि रत्नानामेकेनेत्यर्थः । तथाच अन्यरत्नस्याप्येवं भाव इति लभ्यते ।

(१६) साकाङ्क्षत्वमुदाहरति—अर्थित्व इति । अन्यान्वयित्वभ्रमेण प्रयुक्तस्यानुपात्तपदार्थसाकाङ्क्षत्वं तत्त्वम् । न्यूनपदे तु नेदृशो भ्रमः । सीतां प्रार्थ्य निराशस्य रावणदूतस्य शौष्कलस्य वाक्यमिदम् । फलं सीतापरिणयः । प्रभोरित्यनेन आज्ञयैव नेतुं सामर्थ्यं दर्शितम् । प्रत्युत वैपरीत्येन द्रुह्यन् सुबाहुसुकेत्वादिवधाद् द्रोहकारी, तया प्रार्थितया कन्यया, युक्तः सम्बन्धार्थं योजितः । परस्य शम्भोः ईदृशमुत्कर्षम् आत्मनश्च मानयशसोर्विस्रंशनं स्त्रीरत्नञ्च देवः राजा जगतां पतिः दशमुखः

(A) अर्थित्व इति, वीरचरिते द्वितीयाङ्के रावणार्थं सीतां सम्प्रार्थ्य तत्प्राप्तौ निराशस्य रावणामात्यस्य माल्यवत उक्तिरियम् ।

1. 'विध्वंसनम्' इति मुद्रितपुस्तकपाठः ।

अत्र स्त्रीरत्नम् 'उपेक्षितुम्' इत्याकाङ्क्षति, नहि परस्येत्यनेन सम्बन्धो योग्यः ॥

(१७) (A)आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी ।
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग् वरो लभ्यते
स्याच्चेदेष न रावणः क्व नु पुनः सर्वत्र सर्वे गुणाः ॥ २७७ ॥

---

कथं मृष्यते कथं न द्वेष्टीत्यर्थः । अत्रेति । द्वेषयोग्य एव इयमुक्तिरुपपद्यते स्त्रीरत्नञ्च न द्वेषयोग्यमित्यतस्तदुपेक्षायामेव द्वेषयोग्यायामाकाङ्क्षा इत्यत आह—उपेक्षितुमितीति । कर्मत्वयोत्तरचकारत्वयेण तु वक्तु(श्रोतु ?)र्मृष्यतिक्रियाया अन्वयभ्रमो जन्यते । चक्रवर्त्ती तु आकाङ्क्षितार्थकपदस्याध्याहारेणापि विवक्षितान्वयानिर्वाहो न्यूनपदत्वस्य भेदकः ; तथाहि, स्त्रीरत्नञ्च उपेक्षितुमित्यध्याहारेऽपि चकारबलात् परोत्कर्षादावप्युपेक्षितुमित्यन्वयध्रौव्ये परोत्कर्षादेरुपेक्षायामन्वयोऽयोग्य एवेत्याह, तन्न ; स्त्रीरत्नमुपेक्षितुञ्च इत्येवं चकारात् पूर्वमध्याहारे विवक्षितान्वयनिर्वाहादेव दोषाभावात् अनभिहितवाच्यतोऽविशेषापत्तेश्च । ननु परस्य स्त्रीरत्नं द्वेषयोग्यमेव तथाच तदुपेक्षायां कथमाकाङ्क्षेत्यत्राह—न हीति । 'न हि योग्यः' न ह्युचितः आत्मन इत्यनेन व्यवधानादिति भावः ।

(१७) अपदयुक्तमाह—आज्ञेति । युक्तं समापितम् ; अनुपयुक्तस्थाने समापितपदार्थत्वं तत्त्वम् । रावणार्थं तद्दूतेन शौष्कलेन सीताप्रार्थने कृते जनकपुरोहितस्य शतानन्दस्य रावणप्रशंसापूर्वकतदुपेक्षावाक्यमिदम् । प्रणयिनी सहचरी, मणिरिव रावणाज्ञाऽपि शक्रेण शिखायां धार्यते इत्यर्थः । शास्त्राण्येव नवं चक्षुः शास्त्रदृष्ट्यैव कर्मकरणात्, भूतपतौ सर्वप्राणीश्वरे, लङ्केति नाम दिव्या पुरी पदं स्थानम्, स्याच्चेदिति, रावयति पीडनेन सर्वार्त्तनादकारकः दुर्वृत्तत्वेन ख्याततन्नामा च यदि न स्यादित्यर्थः ; न केवलं तस्यैव दोषमिश्रिता गुणा अपि तु सर्वस्यैवेत्याह—क्व नु इति । सर्व एव पुंसो धर्माः क्व नु गुणाः कश्चिद्धर्मो दोषोऽपीत्यर्थः ; न तु क्व नु सर्वे गुणा इत्यर्थः सर्वगुणासत्त्वस्य पूर्वमनुक्तत्वेन तत्समर्थनासम्भवात् कस्यचिद्धर्मस्य

---

(A) आज्ञेति । बालरामायणे प्रथमेऽङ्के जनकं प्रति तत्पुरोहितस्य शतानन्दस्योक्तिरियम् ।

अत्र 'स्याच्चेदेष न रावणः' [1]इत्यन्तमेव समाप्यम्(A)।

(१८) श्रुतेन बुद्धिर्व्यसनेन मूर्खता
मदेन नारी सलिलेन निम्नगा।
निशा शशाङ्केन धृतिः समाधिना
नयेन चालंक्रियते नरेन्द्रता॥ २७८॥

अत्र श्रुतादिभिरुत्कृष्टैः सहचरितैर्व्यसनमूर्खतयोर्निकृष्टयोभिन्नत्वम्।

(१९) लग्नं रागावृताङ्ग्या॥ २७९॥

इत्यत्र विदितं तेऽस्त्वित्यनेन श्रीस्तस्मादपसरतीति विरुद्धं प्रकाश्यते।

---

दोषत्वेन च पूर्वं प्रतिपादितत्वात्। इदञ्च न रावणोपेक्षायामुपयुक्तमित्यत एतत्पर्यन्तम् अपदम्, तत्र पद्यार्थसमापनमयुक्तमित्याह—अत्रेति।

(१८) सहचरभिन्नमाह—श्रुतेनेति। प्रशस्यमानैरुत्कृष्टैः सह निकृष्टस्य एवं निन्द्यमानैर्निकृष्टैः सह उत्कृष्टस्य च एकक्रियान्वयित्वेन निर्दिष्टत्वं तत्त्वम्। तत्र उत्कृष्टैः सह निकृष्टस्याह—श्रुतेनेति, श्रुतेन वेदाध्ययनेन बुद्धिः अलङ्क्रियते इत्येवं सर्वत्रान्वयः। 'व्यसनम्' अकार्यम्, 'समाधिः' आपदः प्रतिकार्यत्वाप्रतिकार्यत्वप्रणिधानम्, तथाच प्रतिकार्ये गृहदाहादौ धृतिर्न कार्येत्यर्थः। अत्रेति, 'भिन्नत्वम्' एकक्रियान्वयेन निर्देशानर्हत्वम्। निकृष्टसहचरभिन्नमुत्कृष्टं यथा—

दुष्टसङ्गेन दौःशील्यं विपत्तिर्व्यसनेन च।
अपथ्यचर्यया व्याधिर्विद्याऽभ्यासेन वर्द्धते॥ इति

(१९) प्रकाशितविरुद्धमाह—लग्नमिति। प्रकाशितस्यार्थस्य पर्यालोचनया व्यञ्जितस्यार्थस्य प्रकृतविरुद्धत्वं तत्त्वम्[2]। अत्र अर्थेन विरुद्धार्थव्यञ्जनम्, अनुचितार्थे तु पदेन, विरुद्धमतिकृति तु अन्यान्वितपदेनेति भेदः।

---

(A) अयम्भावः, रावणस्य प्रत्याख्यानं यद्यभीष्टं तदा अरुचिहेतुभूतस्तस्य दोषोऽवश्यं वक्तव्यः, स च रावणपदेन भङ्ग्या उक्त एव, ततः परं यदि पुरुषमात्र एवान्तत एकस्यापि दोषस्य सत्ताऽवश्यम्भाविनीति निश्चीयते तदा अपरिहार्यत्वेन नासौ प्रत्याख्याने हेतुः, परमुपादेयत्वे हेतवो वीर्यातिशय-महाकुलप्रभवत्वादयोऽन्यत्र दुर्लभा इति रावणपक्ष एव समर्थितो भवति, तत्र नेष्टमिति तस्य दोषकीर्त्तन एव वाक्यविश्रान्तिरुचितेति।

---

1. 'इत्यत एव' 'इतान्त एव' इति पाठान्तरे। 2. अतः परं क-पुस्तके 'प्रकाश्यते न दृढप्रत्यायनेन, व्यञ्जनया बोधितो लक्ष्म्यपसरणरूपोऽर्थः प्रकृत-विरुद्ध इत्यर्थः'। इत्यधिकः पाठः।

(२०) (A)प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा-
मकेशवमपाण्डवं भुवनमद्य निःसोमकम् ।
इयं परिसमाप्यते रणकथाऽद्य [1]दोःशालिना-
मपैतु [2]रिपुकाननातिगुरुरद्य भारो भुवः ॥ २८० ॥

अत्र 'शयितः प्रयत्नेन बोध्यसे' इति विधेयम् । यथा वा—

वाताहारतया जगद्विषधरैराश्वास्य निःशेषितं
ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः ।

---

(२०) विध्ययुक्तमाह—प्रयत्नेति । विधेयतापर्याप्त्ययोग्ये तत्पर्यापणं तत्त्वम् । पर्याप्तिः निराकाङ्क्षता । प्रयत्नेति, अश्वत्थाम्नो दुर्योधनाश्वासनमिदम् । अद्य त्वं निशां व्याप्य शेषे शयिष्यसे निद्रास्यसि, भविष्यत्सामीप्ये वर्त्तमाना । कीदृशः ? स्तुतिभिः प्रयत्नपरिबोधितः तादृशं निद्रास्यसि यथा स्तुतिभिः प्रयत्नेन परिबोधितः स्या इत्यर्थः । सोमकाः पाञ्चालाः । अपैतु अपगच्छतु । अत्रेति, शयनपरिबोधनयोर्द्वयोर्विधेयत्वेऽपि शयनानन्तरमेव परिबोधात् परिबोधविधावेव आख्यातेन विधेयतापर्याप्तिरुचिता, शयनविधौ तु तत्करणाद् दोष इत्यर्थः । न चाद्य प्रयत्नपरिबोधितः परदिने शेषे निशां व्याप्य इत्यन्वयाददोष इति वाच्यं चिन्तया ह्यो रात्रौ सुखनिद्रामनाप्तस्य जाग्रतः सम्बोध्यस्य च प्रयत्नपरिबोधितत्वबाधात् [3]स्वानधीनस्य तादृशपरिबोधस्य आश्वसनानौचित्याच्च[3]* ।

अत्र च प्रयत्नपरिबोधितत्वस्य '[4]विधेयस्य विधेयत्वाप्रतीत्या'[4]* अविमृष्टविधेयांशसङ्कीर्णमिदमुदाहरणम् इत्यतः अन्यदाह—यथा वेति । वाताहारेति । जाल्मः निकृष्टः जनः दम्भस्य स्फुरितम् असत्फलं विदन् जानन् अपि गुणान् अर्थात् दम्भोपयोगिनो गुणान् ईहते । तदेव दर्शयति—वातेति, विषधरैः वाताहारतया आश्वास्य जगत् निःशेषितम्, भक्षितत्वात् । अत्र दम्भकृतपरहिंसाफलज्ञानेऽपि जगदाश्वासहेतुवाताहार-

---

(A) अत्र निशां रात्रीणां शेषे अवसाने प्रयत्नपरिबोधितो भविष्यसीति व्याख्याने रात्रौ सुखनिद्रालाभेन विवक्षितार्थप्रतिपत्तिसम्भवः, उक्तदोषाभावश्चेत्यत उदाहरणान्तरमाह—यथा वेति ।

---

1. 'दोःशालिना व्यपैतु' इति पाठान्तरम् । 2. '-नृपका-' इति पाठान्तरम् । 3. अयमंशः ग-पुस्तके नास्ति । 4. 'उद्देश्यतयैव प्रतीता' ख ।

तेऽपि क्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकै-
र्दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते ॥२८१॥

अत्र वाताहारादित्रयं व्युत्क्रमेण वाच्यम् ।

(२१) अरे रामाहस्ताभरण भसलश्रेणिशरण
स्मरक्रीडाव्रीडाशमन विरहिप्राणदमन ।
सरोहंसोत्तंस प्रचलदल नीलोत्पल सखे
सखेदोऽहं मोहं श्लथय कथय क्वेन्दुवदना ॥ २८२ ॥

अत्र 'विरहिप्राणदमन' इति नानुवाद्यम् ।

---

रूपगुणचेष्टा । बर्हिणामपि तथा चेष्टामाह—ते ग्रस्ता इति । ते पुनरित्यन्वयः । कणिका-पदमत्र तद्भक्षणपरम् । अत्र अभ्रतोयकणिकाभक्षणरूपगुणचेष्टा । तथा व्याधानामपि तथा चेष्टामाह—तेऽपीति, हरिणचर्मावृता व्याधा मयूरान् नाशयन्ति । क्रूरं कर्कशम्, चमूरुः हरिणः । अत्र चर्मवसनरूपगुणचेष्टा । अत्रेति, वाताहार-कणभक्षण-चर्म-वसनत्रयं व्युत्क्रमेण विधेयतापर्याप्तिपरावृत्त्या वाच्यमित्यर्थः । तथाच जगत् निःशेषयितुं वाताहारः कृतः, तान् ग्रसितुं कणाभक्षणव्रतं कृतम्, तान् क्षयं नेतुं चर्मवसनं कृतमित्येवंरीत्या वाच्यम्, गुणानीहते इत्यत्र गुणचेष्टायामेव विधेयतापर्याप्तेरुक्तत्वेन तदुदाहरणरूपेषु एष्वपि गुणचेष्टारूपेषु तथैवौचित्यादिति भावः । चक्रवर्त्ती तु—उत्तरोत्तरगुरुव्रतस्यैव वक्तुमौचित्येन चर्मवसनादिलघुव्रतक्रमेणैव वाच्यमित्यर्थ इति व्याचष्टे, तन्न, भिन्नकर्तृकव्रतेषु तथा नियमाभावात् एककर्तृकव्रतेष्वपि अनुष्ठान एव तथा नियमात् (A)न तूक्तौ, तथात्वे प्रकृतोदाहरणत्वाभावाच्च, ईदृशक्रमोल्लङ्घने दुष्क्रमत्वदोषस्यैवापत्तेश्च ।

(२१) अनुवादायुक्तत्वमाह— अरे इति । अनुवाद्यविशेषणस्य विधिविरोधित्वं तत्त्वम् । अरे इति, (B)उर्वशीहस्तभ्रष्टं नीलोत्पलं दृष्ट्वा तत् सम्बोध्य पुरूरवस उक्तिरियम् । रामा उर्वशी, भसलाः भ्रमराः, स्मरक्रीडायां व्रीडायाः शमनत्वम् उद्दीपकत्वात् । सरसि उत्पलतलेन हंसानां गमनात् उत्पलानां तदुत्तंसत्वम् । अत्रेति, विरहिणो मोहश्लथने विधीयमाने विरहिप्राणदमनत्वस्य अनुवाद्योत्पल-विशेषणस्य तद्विधिविरोधित्वादित्यर्थः ।

---

(A) न तूक्ताविति तथा नियमोऽस्तीति शेषः ।
(B) अस्मदुपलब्धविक्रमोर्वशीपुस्तके तु नेदं पद्यं दृश्यते ।

(२२) लग्नं रागावृताङ्ग्येत्यादि ॥ २८३ ॥

अत्र 'विदितं तेऽस्तु' इत्युपसंहृतोऽपि तेनेत्यादिना पुनरुपात्तः ।

(२३) हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः ।

[1]यथाऽऽशु जायते पातो न तथा पुनरुन्नतिः ॥ २८४ ॥

अत्र पुंव्यञ्जनस्यापि प्रतीतिः ।

यत्रैको दोषः प्रदर्शितस्तत्र दोषान्तराण्यपि सन्ति, तथाऽपि तेषां तत्राप्रकृतत्वात् प्रकाशनं न कृतम् ।

(७७) कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः ।
सन्निधानादिबोधार्थम्—

अवतंसादीनि कर्णाद्याभरणान्येवोच्यन्ते, तत्र कर्णादिशब्दाः कर्णादिस्थितिप्रतिपत्तये ।

---

(२२) त्यक्तपुनःस्वीकृतमाह—लग्नमिति । आकाङ्क्षितस्य कारकस्य क्रियान्वयेन समाप्तावपि पुनस्तत्कारकोपादानं तत्त्वम् । समाप्तपुनरात्तन्तु विशेष्यानुषङ्ग एव । अत्रेति, वेदनीयस्य कर्मकारकस्य गणयतिपर्यन्तस्य विदितक्रियान्वयेन समाप्तावपि वेदनीयान्तरस्य तेनास्मीत्यादेः पुनरुपादानात् ।

(२३) अश्लीलमर्थमाह—हन्तुमेवेति । विवेचनारहितस्य योद्धुर्वर्णनमिदम् । स्तब्धस्य विवेचनारहितस्य, विवरं परच्छिद्रं पराभियोगावसर इति यावत् । अत्र च इच्छैव न तु विवेचनमिति बोध्यम् । पातः पराजयः । अत्रेति, अश्लीलपक्षे हन्तुं सुरते तदुपयोगि प्रहर्त्तुम्, स्तब्धस्य अनम्रस्य, विवरं योनिच्छिद्रम्, पातः रत्युत्तरं नम्रता । ननु अरे रामाहस्तेत्यादौ सखेदोऽहमिति गर्भितं, खेकारे अश्रव्यत्या हतवृत्तश्च, एवमन्येष्वपि दोषान्तराणि सन्ति, तत् कथं तत्प्रदर्शनं न कृतमित्यत आह—यत्रैक इति ।

इदानीमुक्तदोषान् प्रतिप्रसवितुं पुनरुक्तदोषमादौ प्रतिप्रसूते—कर्णावतंसेति । 'ध्वनिः' [2]शब्दः, 'निर्मितिः' प्रयोगः । स्थितिप्रतिपत्तय इति । स्थितिप्रतिपत्तिश्च व्यञ्जनयैवेति चक्रवर्त्ती, तन्न ; पौनरुक्त्येन शक्यार्थान्वयाबोधकस्य व्यञ्जकत्वासम्भवात् [3]अभिधालक्षणान्यतरवृत्त्या अन्वयबोधकत्वेनैव सार्थकपदस्य व्यञ्जनाप्रवृत्तेः (A)हुङ्कारस्तु

---

(A) सार्थकस्येत्युक्तेः फलमाह—हुङ्कार इति । अभिधालक्षणान्यतरवृत्त्याऽर्थाबोधकोऽपि हुङ्कारः सम्मतिव्यञ्जक इत्यर्थः ।

---

1. 'यथाऽस्य' इति पाठान्तरम् । 2. 'पदम्' क-ग । 3. 'अभिधालक्षणाऽनुगमेनैव व्यञ्जनाप्रवृत्तेः' ग ।

यथा—

अस्याः कर्णावतंसेन जितं सर्वं विभूषणम् ।
तथैव शोभतेऽत्यर्थमस्याः श्रवणकुण्डलम् ॥ २८५ ॥

अपूर्वमदिरामोदप्रमोदितदिशस्ततः ।
आययुर्भृङ्गमुखराः शिरःशेखरशालिनः ॥ २८६ ॥

अत्र कर्ण-श्रवणशिरःशब्दाः सन्निधानप्रतीत्यर्थाः ।

विदीर्णाभिमुखारातिकराले सङ्गरान्तरे ।
धनुर्ज्याकिणचिह्नेन दोष्णा [1]विस्फुरितं तव ॥ २८७ ॥

अत्र धनुःशब्द आरूढत्वावगतये ।

---

निरर्थक एव[3]*। उच्यते—[3]स्थितिस्तत्पुरुषे लुप्तषष्ठ्यर्थः, तत्पुरुषे सम्बन्धिलक्षणापक्षे तु कर्णसम्बन्धिलक्षणायां स्थितिरूपसम्बन्धो लक्ष्यतावच्छेदकतया तदर्थः[2]*। न चैवमपि कर्णस्थितकर्णभूषेत्यर्थे सैव पुनरुक्तिरिति वाच्यं कर्णयोग्यभूषा(A)वाचकत्वादेव अवतंसपदस्येत्यपौनरुक्त्यात्। कर्णावतंसादीत्यादिपदग्राह्यमुदाहरति—यथा अस्या इति। ननु श्रवणकुण्डलमित्यत्र कथं पुनरुक्तिः घटत्वस्येव संस्थानविशेषव्यङ्ग्यस्य कुण्डलत्वरूपजातिविशेषस्यैव कुण्डलपदशक्यतावच्छेदकत्वात्, सत्यम्; कुण्डलत्वस्य शक्यतावच्छेदकत्वेऽपि कुण्डलपदेन स्वशक्यं कुण्डलत्वमिव स्वाशक्यं कर्णयोग्यत्वमपि स्मार्यते, ततश्च तावतैव श्रवणयोग्यतालाभे श्रवणपदमधिकमित्यधिकपददोषोद्धार एव श्रवणकुण्डलमित्यत्र कृत इति बोध्यम्। एवं शिरःशेखरपदेऽपि शिरःपदाधिक्यमुद्धरति—अपूर्वमदिरेति। मधुरामोदेति पाठे स्वाङ्गस्थपुष्पगन्धादेव आमोदः। शेखरः किरीटम्। एवंरीत्या धनुर्ज्येत्यत्रापि धनुःपदाधिक्यमपि उद्धरति—विदीर्णेति। सङ्गरान्तरे तव दोष्णा हस्तेन विस्फुरितं दीप्तम्। सङ्गरान्तरे कीदृशे? शरविदीर्णैः अभिमुखैः अरातिभिः कराले व्याप्ते भीषणे वा।

---

(A) अत्र वाचकत्वमेवेति प्रथमान्तपाठो युक्तः 'इति'शब्दसमभिव्याहारादिति चिन्त्यम्।

---

1. 'विस्फूर्जितम्' इति पाठान्तरम्। 2. 'स्थितिस्तत्पुरुषे षष्ठ्यर्थः। नैयायिकमते तु 'तत्पुरुषैर्लक्षणयैव लभ्या, परन्तु तन्मते लक्ष्यतावच्छेदकस्य लक्षणाऽगम्यत्वेन लक्ष्यतावच्छेदिका स्थितिरुदासीनतयैव भासते इति। तात्पर्यलक्षणामते तु स्थितिर्लक्षणागम्यैव' क, 'स्थितिस्तत्पुरुषे लुप्तषष्ठीलभ्या, कर्णस्थितलक्षणालभ्या वा, परन्तु नैयायिकमते लक्ष्यतावच्छेदके लक्षणाभावेन लक्ष्यतावच्छेदका स्थितिरुदासीनतयैव भासते इति विशेषः। तात्पर्यात्मकलक्षणावादे तु लक्षणाविषय एव' ख।

(A)अन्यत्र तु—

ज्याबन्धनिष्पन्दभुजेन यस्य विनिश्वसद्वक्त्रपरम्परेण ।

कारागृहे निर्जितवासवेन लङ्केश्वरेणोषितम् आ प्रसादात् ॥२८८

इत्यत्र केवलो ज्याशब्दः ।

प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः ।

मुक्ताहारेण लसता हसतीव स्तनद्वयम् ॥ २८९ ॥

अत्र मुक्तानामन्यरत्नामिश्रितत्वबोधनाय मुक्ताशब्दः ।

सौन्दर्यसम्पत् तारुण्यं यस्यास्ते ते च विभ्रमाः ।

षट्पदान् पुष्पमालेव कान् नाकर्षति सा सखे ॥ २९० ॥

---

अत्रापि ज्यात्वं जातिः, पूर्ववदाधिक्योद्धारः। यत्र तु धनुरारूढत्वं पदान्तरादेव लभ्यते तत्र न धनुःपदं प्रयोज्यमित्याह—अन्यत्र त्विति। यस्य कार्तवीर्यार्जुनस्य कारागृहे बन्धनागारे निर्जितवासवेनापि लङ्केश्वरेण आ प्रसादात् प्रसादपर्यन्तम् उषितं स्थितम्। कीदृशेन? ज्याघातेन निष्पिष्टा घृष्टा भुजा यस्य, विनिश्वसती वक्त्रपरम्परा च यस्य तादृशेन। ज्याबन्धेति पाठे तु ज्याबन्धः धनुर्बद्धा ज्या कृदभिहितभावत्वात्। अत्र आघातबन्धान्यतरेणैव धनुरारूढत्वप्रतीतिस्तदारोहणं विना तदुभयासम्भवात्, अतस्तत्र न धनुःपदप्रयोग इत्याह—केवल इति। अत्र कारापदस्यापि रूढिहेतुकया बन्धनमात्रलक्षणया गृहपदस्य पौनरुक्त्यमुद्धरणीयम्। एवं करिबृंहित-मयूरकेकादावपि बोध्यम्।

'मुक्ता ग्रैवेयकं हारः' इति कोषात् हारपदादेव मुक्तालाभे मुक्तापदपौनरुक्त्यमुद्धरति—प्राणेश्वरेति। प्राणेश्वरस्य पत्युः परिष्वङ्गेण या विभ्रमस्य प्रतिपत्तयः प्राप्तयः ताभिः लसता मुक्ताहारेण तस्याः स्तनद्वयं हसतीव, हासवत्त्वज्ञापकत्वे तृतीया, मुक्ताहार एव हास इत्यर्थः। अत्रेति, तथाच तादृशार्थे निरूढलाक्षणिकमेव मुक्तापदमिति भावः। मालापदस्यापि पुष्पस्रग्वाचित्वात् पुष्पमालापदे पुष्पपदपौनरुक्त्यमुद्धरति—सौन्दर्येति। अस्तु तावदाकारसौष्ठवम्, यस्याः तारुण्यं ते ते विभ्रमाश्च

---

(A) अन्यत्रेति। यत्र आरूढत्वावगतिर्निष्प्रयोजनिका तत्रेत्यर्थः, तथैवोदाहरति ज्याबन्धेति, पराजितस्य यस्य रावणस्य भुजा धनुषो भ्रंशितया मौर्व्या बन्धेन निष्पन्दास्तादृशेनेत्यर्थः। शेषं सुगमम्।

अत्रोत्कृष्टपुष्पविषये पुष्पशब्दः। निरुपपदो हि मालाशब्दः पुष्पस्रजमेवाभिधत्ते।

(७८) ——— स्थितेष्वेतत्समर्थनम्॥ ५८।

न खलु कर्णावतंसादिवज्जघनकाञ्चीत्यादि क्रियते।

'जगाद मधुरां वाचं विशदाक्षरशालिनीम्'

इत्यादौ क्रियाविशेषणत्वेऽपि विवक्षितार्थप्रतीतिसिद्धौ "गतार्थस्यापि विशेष्यस्य विशेषणदानार्थं क्वचित्प्रयोगः कार्यः" इति न युक्तम्। युक्तत्वे वा—

---

सौन्दर्यसम्पत् हे सखे सा कान् पुरुषान् न आकर्षति पुष्पमाला षट्पदानिवेत्यर्थः। [1]यद्वा यस्याः सौन्दर्यसम्पदादयस्तत्तद्विभ्रमान्ताः सन्ति सा कान् नाकर्षतीत्यर्थः[1]*। अत्रेति, मालाशब्दार्थैकदेशो यत् पुष्पम् उत्कृष्टतद्विषय इत्यर्थः। तथा च पुष्पपदमुत्कृष्टे लाक्षणिकमित्यर्थः। पौनरुक्त्यं प्रसञ्जयति—निरुपपदो हीति। उपपदन्तु नातः पुष्पवाचकं किन्तूत्कृष्टे लाक्षणिकमेवेत्यर्थः। स्फटिकमालेत्यादौ तु मालापदमेव [2]ग्रथितश्रेणीमात्रे लाक्षणिकमिति बोध्यम्।

नन्वेवं जघनकाञ्च्यादिकमपि जघनादिपदे विपुलादिलक्षणया प्रयुज्यतामित्यत्राह—स्थितेष्विति, (A)रूढ्या स्थितेष्वित्यर्थः। [3]रूढ्यसत्त्वे तु नेदृशं समर्थनमित्याह[3]* न खल्विति। वाक्कर्मककण्ठताल्वाद्यभिघातवाचकाद् गदधातोरेव कर्मभूताया वाचो लाभे जगाद मधुरां वाचमित्यादौ वाचमित्यस्य पौनरुक्त्यं ये प्रकारान्तरेणोद्धरन्ति तन्मतं दूषयितुमाह—जगादेति। मधुरामित्यस्य विशेषणस्य दानार्थं वाचमित्यस्य प्रयोगः कार्य इति तु न युक्तमुक्तमित्यर्थः। तदयुक्तत्वे हेतुमाह—क्रियेति, मधुरं जगाद इत्युक्त्याऽपि प्रतीतिसिद्धावित्यर्थः, विशेषणदानार्थत्वे पौनरुक्त्यानुद्धारादिति भावः। नन्वेवं गतार्थस्य विशेष्यस्य विशेषणदानार्थं प्रयोगः किं सर्वथैवायुक्त इत्यत्राह—

---

(A) अत्र दर्पणकृतः 'प्रयोक्तव्याः स्थिता अमी' 'धनुर्ज्यादयः सत्काव्यस्थिता एव निबद्धव्याः, न त्वस्थिता जघनकाञ्चीकरकङ्कणादयः' इति कथयन्ति।

---

1. अयमंशः ग-पुस्तके नास्ति। 2. 'सन्ताने' क-ग। 3. 'जघनकाञ्च्यादौ न रूढिरित्याह' ग।

चरणत्रपरित्राणरहिताभ्यामपि द्रुतम् ।
पादाभ्यां दूरमध्वानं व्रजन्नेष न खिद्यते ॥ २९१ ॥

(A)इत्युदाहार्यम् ।

( ७९ ) ख्यातेऽर्थे निर्हेतोरदुष्टत्वम्—

यथा—

चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥२९२॥

अत्र रात्रौ पद्मस्य सङ्कोचः, दिवा चन्द्रमसश्च निष्प्रभत्वं लोकप्रसिद्धमिति 'न भुंक्ते' इति हेतुं नापेक्षते ।

( ८० )————अनुकरणे तु सर्वेषाम् ।

सर्वेषां श्रुतिकटुप्रभृतीनां दोषाणाम् ।

यथा—

मृगचक्षुषमद्राक्षमित्यादि कथयत्ययम् ।
पश्यैष च गवित्याह सुत्रामाणं यजेति च ॥ २९३ ॥

---

युक्तत्वे वेति । चरणत्रं पादुका तत्करणकं यत् कण्टकवेधादितश्चरणस्य परित्राणं तद्रहिताभ्यामपीत्यर्थः । इत्युदाहार्यमिति, पदान्तरार्थत्वेन यत्र गतार्थता तत्रैव नोदाहार्यं चरणत्रेत्यादौ तु व्रजधात्वर्थतया न (B)पादप्राप्तिः । अत्र चरणत्रेत्यादिविशेषणदानार्थं पादाभ्यामित्युदाहार्यमित्यर्थः । न चैवं "जगाद वाक्यं-गिरिराजपुत्री" इत्यत्र "ऊचे वचस्तापसकुञ्जरेण" इत्यत्र "नृपमूचे वचनं वृकोदर" इत्यत्र कीदृश्युपपत्तिरिति वाच्यं गद्वचधात्वोः कण्ठताल्वाद्यभिघातमात्रे लक्षणाया एवोपपत्तित्वात् ।

ख्याते इति । हेतोः ख्यातिलभ्यत्व इत्यर्थः । चन्द्रमिति । अभिख्यां शोभाम् । भोगश्च तत्सम्पृक्तत्वमेव । नानाश्रयगमनात् लोलत्वम् ।

अनुकरणे त्विति, सर्वेषामदुष्टत्वमित्यनुषङ्गः मृगचक्षुषमिति । अद्राक्षम् दृष्टवान् अस्मि । अत्र मृगचक्षुषमित्यत्र अप्रयुक्तत्वम् अद्राक्षमित्येतत्साहास्यात्

---

(A) कर्तृविशेषणत्वेनैवोपपत्तेरिदमपि न युक्तमुदाहृतमिति प्रदीपकाराः ।

(B) न पादप्राप्तिरिति, गमनस्य यानेनाश्वेन हस्तिना वा सम्भवादिति भावः ।

**(८१) वक्त्राद्यौचित्यवशाद्दोषोऽपि गुणः क्वचित् क्वचिन्नोभौ ॥५६॥**

वक्तृ-प्रतिपाद्य-व्यङ्ग्य-वाच्य-प्रकरणादीनां महिम्ना दोषोऽपि क्वचिद् गुणः क्वचिन्न दोषो न गुणः। तत्र वैयाकरणादौ वक्तरि प्रतिपाद्ये च, रौद्रादौ च रसे व्यङ्ग्ये कष्टत्वं गुणः। क्रमेणोदाहरणम्—

[1]दीधीवेवीट्समः कश्चिद् गुणवृद्ध्योरभाजनम्।
क्विप्प्रत्ययनिभः कश्चिद् यत्र सन्निहिते न ते ॥ २९४ ॥

यदा त्वामहमद्राक्षं पदविद्याविशारदम्।
उपाध्यायं तदास्मार्षं समस्प्राक्षं च सम्मदम् ॥ २९५ ॥

---

[2]श्रुतिकटुत्वञ्च। गौरिति वक्तव्ये निर्विभक्तिकगोपदप्रयोगात् च्युतसंस्कृतित्वम्, सुत्रामाणमित्यत्रापि अप्रयुक्तत्वम्, अनुकरणे न दोषः।

**वक्त्रादिति।** अत्रादिपदग्राह्यानाह—**प्रतिपाद्येति।** **वैयाकरणादा**वित्यादिपदात् शुष्कतार्किकपरिग्रहः। **दीधीवेवीडिति।** कश्चित् जनः गुणवृद्ध्योः सौन्दर्यादिगुणसमृद्ध्योः अभाजनम् अनाश्रयः दीधीवेवीधातुद्वयेडागमैः समः, तेषामपि व्याकरणे गुणनिषेधात् (A)[3]तत एव वृद्ध्यभावाच्च[3]*। कश्चित् जनः क्विप्प्रत्ययनिभः, यत्र जने सन्निहिते सति तत्सन्निहितजनस्य ते गुणवृद्धी न स्तः, क्विप्प्रत्ययसन्निहितधातोरपि तदुभयाभावात्। अत्र वैयाकरणो वक्ता, वेवीट्सेति क्विप्प्रेत्ति च श्रुतिकटुत्वमदोषः। न चैवं भट्टिकाव्यस्यापि वैयाकरणवक्तृकत्वात् कथं सोऽध्यैष्टेत्यादिकं दूषितमिति वाच्यं तदुक्त्या वैयाकरणत्वख्यापके वक्तरीत्येवार्थात्, तत्र तु वक्ता वैयाकरण एव न तु तथात्वख्यापकः। वैयाकरणे प्रतिपाद्ये त्वाह—**यदा त्वामिति।** अद्राक्षं दृष्टवान् अस्मि, पदविद्या व्याकरणम्, अस्मार्षं स्मृतवान् अस्मि, अस्प्राक्षम् स्पृष्टवान् अस्मि। अत्र दृश्यमानस्य पदविद्याविशारदत्वविशेषणात् प्रतिपाद्यस्य तस्य वैयाकरणत्वम्, [4]न चात्र वक्ताऽपि वैयाकरण इति वाच्यं प्रतिपाद्यस्य

---

(A) अत्र गुणनिषेधस्य वृद्ध्यभावे हेतुत्वासम्भवात् तत एवेत्यस्य व्याकरणानुशासनाभावादित्यर्थः कथञ्चित् स्वीकार्य इति बोध्यम्।

---

1. 'दीधीङ्वेवीङ्समः' इति प्रदीपे मुद्रितः, 'दीधीवेवीसमः' इति च दर्पणसम्मतः पाठः। 2. 'श्रुतिकटु च' ख। 3. 'अत एव तद्बाधकेडागमनिषेधाच्च वृद्ध्यर्थशासनाभावात्' ग। 4. 'वक्तुस्तु वैयाकरणत्वेऽपि न तत्ख्यापयिषा, तथात्वे प्रतिपाद्यस्य पदविद्याविशारदत्वेन उपादानानुपयोगात्' ख।

अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण-
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम् ।
पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लसद्-
व्यालोलस्तनभारभैरववपुर्[1]दर्पोद्धुरं धावति ॥ १९६ ॥

वाच्यवशाद् यथा—

मातङ्गाः किमु वल्गितैः किमफलैराडम्बरैर्जम्बुकाः
सारङ्गा महिषा मदं व्रजथ किं शून्येषु शूरा न के ।
कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः [2]शनैः
सिन्धुध्वानिनि हुङ्कृते स्फुरति यत्तद्गर्जितं गर्जितम् ॥१९७॥

अत्र सिंहे वाच्ये परुषाः शब्दाः ।

---

वैयाकरणत्वबुभुत्सयैव एतादृशप्रयोगात् न तु तस्य वैयाकरणत्वचिख्यापयिषया, तथात्वनिश्चयाभावेऽपि पाक्षिकतथात्वेन उदाहरणत्वसम्भवात्[4]* ।

व्यङ्ग्यरसवशादाह—अन्त्रेति । रसस्य व्यङ्ग्यता च भट्टलोल्लटमते ; अभिनवगुप्ताचार्यमते तु साक्षात्कारतः पूर्वं रसग्रन्थोक्तरीत्या व्यङ्ग्यता बोध्या । प्राकरणिकी ताडका दर्पोद्धुरं धावति । उद्धुरम् उद्भटम् । कीदृशी ? कपालं ललाटास्थि, नलकं हस्तास्थि, अन्त्रग्रथितैर्बृहद्भिस्तैः क्रूरं क्वणन्ति यानि कङ्कणप्रायाणि प्रेङ्खितानि भूरिभूषणानि तेषां रवैः अम्बरम् आघोषयन्ती, तथा प्रथमं पीतानां ततः छर्दितानां वान्तानां रक्तकर्दमानां घनेन निविडेन प्राग्भारेण सेकेन घोरा च तथा उल्लसता व्यालोलेन स्तनभारेण भैरववपुश्च । अत्र रक्तकर्दमव्यङ्ग्ये बीभत्सरसे श्रुतिकटुत्वं गुणस्तदीयौजोगुणव्यञ्जकत्वात् । मातङ्गा इति । जम्बुकाः शृगालाः, सारङ्गाः हरिणाः । अत्र बल्गितादीनि [3]गर्जितपूर्वकाणीति बोध्यम् , अन्यथा सिंहहुङ्कृत्यसत्त्वे बल्गितादिसाफल्यस्यैव वक्तुमौचित्येन गर्जितसाफल्यकथनानौचित्यादिति भावः[3]* । सिंहस्य शनैरपि हुङ्कृते सति यद् वल्गितादि स्फुरति तद् गर्जितमेव

---

1. '-र्दर्पोद्धत'मिति मुद्रितपाठः । 2. 'पुरः' 'पुन'रिति च पाठः । 3. गर्ज्जितसहितानि बोध्यानि अन्यथा सिंहहुङ्कृतासत्त्वे गर्ज्जितवैयर्थ्यस्यानुक्तत्वात् तद्गर्ज्जितप्रशंसाऽनुपपत्तेः, वल्गितादेरेव प्रशंसौचित्यात्' ख, 'गर्ज्जितसहजातानि बोध्यानि अन्यथा गर्ज्जितविशेषसार्थककथनात् गर्ज्जितान्तरवैफल्यकथनानुपपत्तेः' ग ।

प्रकरणवशाद् यथा—

रक्ताशोक कृशोदरी क्व नु गता त्यक्त्वाऽनुरक्तं जनं
नो दृष्टेति मुधैव चालयसि किं वातावधूतं शिरः।
उत्कण्ठाघटमानषट्पदघटासङ्घट्टदष्टच्छद-
स्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ॥२९८॥

अत्र शिरोधूननेन कुपितस्य वचसि।

क्वचिन्नीरसे न गुणो न दोषः।

---

गर्जितं सफलमित्यर्थः। हुङ्कृते कीदृशे? ध्वानोऽत्र गम्भीरः स्वरः सिन्धाविव तेन विशिष्टे। इभारेः कीदृशस्य? कोपस्य आटोपेन परिपाट्या उत्कटा सटाकोटिर्यस्य तादृशस्य। प्रकरणेति। प्रक्रान्तमेव अत्र प्रकरणं प्रथमप्रतिपन्नमित्यर्थः, प्रतिपत्तिश्च शक्त्या व्यञ्जनया वेत्यविशेषः। रक्ताशोकेति। प्रफुल्लमशोकं दृष्ट्वा विरहिणः पुरूरवस उक्तिरियम्(A)। हे रक्ताशोक 'शोणवर्णव्यञ्जन एव'[1]*, अनुरक्तशोकनाशक चेत्यर्थः। कृशोदरी उर्वशी अनुरक्तं जनं मां त्यक्त्वा क्व गता इति पृच्छा। वातचलितं तन्मूर्द्धानं दृष्ट्वा पुनराह—नो दृष्टेतीति, वाय्वाहतमेव वातव्याध्याहततया क्रोधात् निन्दितम्। मुधात्वं साधयति—उत्कण्ठेति। पुष्पोद्गम उद्गतानि पुष्पाणि कृदभिहितभावत्वात्। कीदृशः? उत्कण्ठया घटमानेन मिलता षट्पदसमूहेन संघट्टदष्टच्छदः निविडमिलितदष्टदलः [2]मकरन्दलोभेन छदा अपि दष्टा इत्यर्थः; सोऽयं पुष्पोद्गमः तत्पादाहतिमन्तरेण भवतः कुत इत्यर्थः। अत्र कामिनीपदाघातेनैव अशोकस्य पुष्पोद्गमः। कामिनी च उर्वश्येवेति तेनावगतत्वादिदमुक्तम्। अत्रेति, शिरोविधूननेन व्यङ्ग्यस्य कोपस्य प्रथमं प्रतिपन्नत्वेन तस्यात्र प्रकरणत्वम्।

क्वचिन्नोभाविति विवृणोति—क्वचिन्नीरस इति ओजस्विरसरहितभाव-

---

(A) श्लोकोऽयमस्मदुपलब्धविक्रमोर्वशीत्रोटके नास्ति। बालबोधिनीकारस्तु पाठान्तररूपेण क्वचिन्मुद्रितपुस्तके उपलभ्यत इदमित्याह, तद्विवरणञ्च चतुर्थोल्लासे 'क्वाकार्य्य'मित्यत्र द्रष्टव्यम्।

---

1. 'शोणव्यञ्जक एव' क, 'शोणवर्णत्व एव स्वभावात्' ख। 2. 'मकरन्दाभिलाषि' क, 'मकरन्दलोभि' ग।

शीर्णघ्राणाङ्घ्रिपाणीन् व्रणिभिरपघनैर्घर्घराव्यक्तघोषान्
दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन् यः ।
घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्ते-
र्दत्तार्घाः सिद्धसङ्घैर्विदधतु घृणयः शीघ्रमंहोविघातम् ॥२९९॥

अप्रयुक्तनिहतार्थौ श्लेषादावदुष्टौ । यथा—

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत् ।

---

काव्ये इत्यर्थः, [1]न तु रसपदस्यासंलक्ष्यक्रमपरतया भावादिरहितेऽपीत्यर्थः[1]* (A) । तत्र सूर्यविषयभावे उदाहरति—शीर्णघ्राणेति । तस्य घर्मांशोः सूर्यस्य घृणयः रश्मयः वः अंहोविघातं पापनाशनं शीघ्रं विदधतु । कीदृशस्य ? अन्यदेवताऽपेक्षया द्विगुणाया घनघृणायाः निबिडकृपायाः निघ्ना अधीना निर्विघ्ना विघ्नविघातिका वृत्ति-र्यस्य तादृशस्य । घृणयः कीदृशाः ? सिद्धसङ्घैः दत्तार्घाः । यो घर्मांशुः एकः व्रणिभिः अपघनैः कुष्ठक्षतिभिः शरीरैः विशिष्टान् जनान् अत एव शीर्णघ्राणाङ्घ्रि-पाणीन् स्खलितनासिकादीन् अत एव च घर्घराव्यक्तघोषान् यतः अघौघैः पापसमूहैः दीर्घकालम् आघ्रातान् उल्लाघयन् निर्गदीकुर्वन् पुनरपि घटयति अर्थात् शीर्णैः (अशीर्णैः ?) घ्राणादिभिः सम्बध्नाति, 'उल्लाघो निर्गतो गदा'दिति कोषः । अत्र सूर्य-विषयभावो माधुर्यगुणवानेवेति तत्र ओजोगुणव्यञ्जका उद्धतवर्णा न गुणः अनुप्रासा-धानाच्च न कष्टत्वं दोषः । [2]'न च अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि मामित्यत्र अनुप्रासाधानेऽपि प्रतिकूलवर्णदोषस्य उदाहृतत्वात् प्रतिकूलवर्णत्वमत्र दोषः स्यादिति वाच्यं तस्य रसमात्रदोषत्वात् न तु भावे, तस्य च अनुप्रासाधानेऽपि प्रातिकूल्य-मिति भावः'[2]* ।

श्लेषादावित्यादिपदाद् यमकपरिग्रहः । येन ध्वस्तमिति सर्वदः सर्वदाता

---

(A) अतः परं 'तदा सगुणत्वघटितकाव्यलक्षणाव्याप्त्यापत्तेः, भावेऽपि गुणस्वीकारात्तु नाव्याप्तिः' इति ख-पुस्तके दृश्यमानोंऽशः 'कविन्नोभौ' इति प्रकृते काव्यलक्षणाव्याप्तिचिन्ताया-ऽनौचित्यात् प्रागप्येतस्यार्थस्यालोचितत्वाच्च रसपदस्यासंलक्ष्यक्रमपरत्वे दोषप्रदर्शनपरा टिप्पनी इति प्रतिभाति ।

---

1. 'न तु सर्वथैव नीरसे, तत्र सगुणत्वाभावेन काव्यत्वाभावात्; असंलक्ष्यक्रमस्यात एव गुणस्वीकारात्तु उदाहरिष्यमाणेऽपि भावसत्त्वाद्गुणवत्ता' क, ग-पुस्तकेऽपि प्रायश एवमेव । 2. 'प्रतिकूलवर्णत्वं तु रसमात्रे दोषो न भावे, तत्र चानुप्रासाधानेऽपि रसप्रातिकूल्याद्दोषत्वमित्यतोऽनुप्रासवद् 'अकुण्ठोत्-कण्ठयेत्यादिकं तदुदाहरणमुक्तम्' ख ।

यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः
पायात् स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ॥ ३०० ॥

अत्र माधवपक्षे शशिमदन्धकक्षयशब्दावप्रयुक्तनिहतार्थौ ।

(A)अश्लीलं क्वचिद् गुणः । यथा सुरतारम्भगोष्ठ्याम्,

---

स माधवः सर्वदा उमाधवः पार्वतीपतिश्च त्वां पायात् । अत्र माधवपक्षे येन माधवेन अनः शकटं ध्वस्तम् । अभवेन अनुत्पत्तिना, अवतारीयशरीरभिन्ननित्यशरीरवत्त्वात्[1] ; तथा बलिजेता स्वकायश्च पुरा मोहिनीरूपस्त्रीकृतः, अत्रापि एकस्यैव शरीरस्याविर्भाव-मात्रादभेदः ईश्वरीयशरीरत्वेन अभेदारोपो वा । यश्च उद्वृत्तस्य भुजङ्गस्य अघासुरस्य हन्ता रवस्य नादात्मकब्रह्मणः लयः लीनता यत्र तादृशः । अगं गोवर्द्धनं गां पृथिवीं च कूर्मवराहमूर्त्या यः अधारयत्, शशिमथः राहोः शिरोहर इति स्तुत्यं नाम यस्य अमराः आहुः । स कीदृशः ? स्वयम् अन्धकवंशे क्षयकरः निवासकृत्, क्षि निवास-गत्योरिति धातुः । उमाधवपक्षे ध्वस्तमनोभवेन नाशितकामेन येन बलिजितः विष्णोः कायः पुरस्य त्रिपुरस्य दाहकास्त्रीकृतः त्रिपुरबधे विष्णोः कायस्य शरीकृतत्वात् । यश्च दुर्वृत्तभुजङ्गरूपहारकङ्कणः शिरसि गङ्गां च योऽधारयत्, यस्य शिरः शशिमत् चन्द्रयुक्तम्, हर इति स्तुत्यं नाम यस्य अमरा आहुः, स कीदृशः ? अन्धकासुरस्य स्वयं क्षयकरः नाशकृत् । अत्रेति, शशिमच्छब्दो राहावप्रयुक्त एव, अन्धकशब्दस्तु "वृष्ण्यन्धकयदूनाञ्च ते वीरा युधि दुर्जयाः" इत्यादिप्रयोगात् नाप्रयुक्तः, किन्तु प्रसिद्धेनान्धकासुररूपेणार्थेन व्यवधानात् निहतार्थः, एवं क्षयशब्दोऽपि ।

सुरतारम्भेति सुरतस्य आरम्भाः चेष्टाः यस्यां तादृश्यां गोष्ठ्याम्,

---

(A) अश्लीलं क्वचिद्गुण इति । जुगुप्साव्यञ्जकस्य प्रतिप्रसवस्तु दण्ड्याचार्यैः—

निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् ।
अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते ॥

इत्यनेन कृतः । परमस्मिन्नर्थे तैरनुभूता युक्तिस्तु नास्माकं बुद्धिपथमधिरोहति । इदन्तु बोध्यम्—अश्लीलदोषो न नियतः, किन्तु देशकालप्रतिपत्तृभेदेन भिन्नेषु व्यङ्ग्यार्थेषु यस्य पुंसो यदा यादृशव्यङ्ग्यार्थोपस्थि[illegible] व्रीडादिर्जायते तं प्रत्येव तदा तन्निबन्धनो दोषः । उक्तं हि—'व्यङ्ग्यस्य बहुविधत्वात् क्वचिदेव कस्यचिदेव औचित्येनोपपद्यत एव विभागव्यवस्था' इति 'प्रतीयमानस्तु तत्तत्प्रकरणवक्तृप्रतिपत्त्रादिविशेषसहायतया नानात्वं भजते' इति च । अत एव—

---

1. अतः परं क-पुस्तके 'विष्णुशरीरस्य नित्यत्वात्, कृष्णादिशरीरस्य तदंशाविर्भावरूपत्वात् अनो भञ्जनमपि तदभिन्नस्य कृष्णस्येत्यविरोधः' इत्यधिकम् ।

"द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु"

इति कामशास्त्रस्थितौ—

करिहस्तेन सम्बाधे प्रविश्यान्तर्विलोडिते ।
उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते ॥ ३०१ ॥

शमकथासु—

उत्तानोच्छूनमण्डूकपाटितोदरसंनिभे ।
क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते ॥ ३०२ ॥

---

'रहस्यं' गोप्यं वस्तु 'द्व्यर्थैः पदैः पिशुनयेत्' सूचयेदित्यर्थः । 'कामशास्त्रस्य स्थितौ' नियमे सतीत्यर्थः । **करिहस्तेनेति** । साधनस्य सेनायाः अन्तः मध्ये प्रविश्य उपसर्पन् गच्छन् पुंसां ध्वजः पताका विराजते, अन्तः कीदृशे ? सम्बाधे नराश्वादिबाहुल्यात् आवृते, तथा च तत्र प्रवेशोपायमाह—करीति, करिणां हस्तेन शुण्डया विलोडिते स्फारीकृते । अत्र पुंव्यञ्जनस्यापि प्रतीत्या अश्लीलम् , तथाहि साधनस्य योनेः अन्तः प्रविश्य उपसर्पन् गतागतं कुर्वन् पुंसो ध्वजः लिङ्गं विराजते । साधनान्तः कीदृशे ? सम्बाधे बालिकाया योनित्वात् सङ्कुचिते । तत्प्रवेशोपायमाह—करीति,

तर्जन्यनामिके युक्ते मध्यमा स्याद् बहिर्यदि ।
करिहस्त इति ख्यातः कामशास्त्रविशारदैः ॥

इति परिभाषितेन करिहस्तेन विलोडिते । अत्र अश्लीलार्थबोधस्यैव उद्देश्यत्वाद् गुणत्वम् ।

जुगुप्साश्लीलमाह—**उत्तानेति** । उत्तानः मृतोच्छूनश्च यो मण्डूकः तस्य पाटितं

---

"संवीतस्य हि लोकेऽस्मिन् न दोषान्वेषणं क्षमम् ।
शिवलिङ्गस्य संस्थाने कस्यासभ्यत्वभावनम् ॥
भगिनी-भगवत्यादि सर्वत्रैवानुमन्यते ।"

इति दण्ड्याचार्यैरप्युक्तम् । अत एव च 'रुचिङ्कुरु' इति सन्धौ अश्लीलोदाहरणं काव्यप्रकाशकर्तुः काश्मीरदेशीयत्वमनुमापयतीत्यनुसन्धातारः । तेषां च "चिङ्कुपदं काश्मीरादिभाषायामश्लीलार्थबोधकम्' इति विश्वनाथकृतकाव्यप्रकाशदर्पणपङ्क्तिः उपजीव्यमित्यनुमीयते । 'लाटभाषायां चिङ्कुपदं योन्यन्तर्वर्त्यङ्कुरवाचकम्' इति सरस्वतीतीर्थादयः" इति बालबोधिन्याम् ।

अस्माकन्तु एतदर्थानुसन्धानात् प्राक् सहस्रशश्चिङ्कु-तुडनी-तुल्ली-प्रभृतिशब्दश्रवणमपि तत्तदर्थानुपस्थित्या न व्रीडामावहतीति अत्र दोषानुभवोऽपि दुष्कर एव । ग्रन्थकाराश्च येभ्यः शब्देभ्यो यादृशाश्लीलार्थाः प्रायेणोपतिष्ठन्ते तत्रैवोदाहरणं प्रदर्शितवन्त इत्यलं पल्लवितेन ।

निर्वाणवैरदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥३०३॥

अत्र भाव्यमङ्गलसूचकम् ।

सन्दिग्धमपि वाच्यमहिम्ना क्वचिन्नियतार्थप्रतीतिकृत्त्वेन व्याजस्तुतिपर्यवसायित्वे गुणः ।

यथा—

पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं संप्रति सममावयोः सदनम् ॥ ३०४ ॥

---

दारितं यत् उदरं तत्सन्निभे क्लेदयुक्ते च स्त्रीणां व्रणाकारत्वेन व्रणे अर्थाद् योनौ अक्रमैः क्रमिभिन्नस्य कस्य सक्तिः आसङ्गः जायते क्रमैरेव व्रतासङ्गात् । अत्र एतादृशकुत्सया शान्तेरेव वृद्धेर्गुणत्वम् ।

अमङ्गलाश्लीलगुणत्वमाह—**निर्वाणेति** । कुरूणाममङ्गलसूचनार्थं नटस्योक्तिरियम् । अरीणां दुर्योधनादीनां प्रशमात् शान्त्यवलम्बनात् पाण्डुतनयाः निर्वाणवैररूपाग्नयः सन्तः माधवेन सह नन्दन्तु, कुरुराजसुताश्च अनुरक्ताय स्वीकृतभूमण्डलाः त्यक्तयुद्धाः सभृत्याः स्वस्थाः निर्वृता भवन्त्विति वाच्यार्थः । अमङ्गलसूचनन्तु पूर्वार्द्धे अरीणां प्रशमात् मरणात्, परार्द्धे तु रक्तेन रुधिरेण मण्डितभूमण्डलाः क्षतशरीराः कुरुराजसुताः स्वस्थाः स्वर्गस्था भवन्त्विति । (A)अघोषपरे सकारे विसर्गलोपः ।

**सन्दिग्धमपीति**, सन्देहयोग्यमपीत्यर्थः । सन्देहरूपफलाभावात्तु अदोषतां स्वयमेव दर्शयति—**वाच्यमहिम्नेति**; प्राकरणिकत्वेन अर्थद्वयरूपयोर्वाच्ययोः महिम्नेत्यर्थः । **नियतेति**, प्राकरणिके अर्थद्वये अन्वितयोः प्रतिनियतयोरर्थयोः प्रतीतिकारित्वादित्यर्थः । क्वचिद् व्याजस्तुतीत्यन्वयः, तच्च उदाहरिष्यमाणं पद्यम्, न तु सर्वत्रैव तत्पर्यवसानं सन्देहयोग्ये 'येन ध्वस्त'मित्यादौ तदपर्यवसानात् । **पृथुकेति** । राज्ञि दरिद्रस्योक्तिरियम् । हे देव सम्प्रति आवयोः सदनं गृहं समम्; त्वत्तो

---

(A) अघोष इति, 'वर्गाणां प्रथमद्वितीयाः शषसाश्चाघोषाः' इति कातन्त्रसूत्रम् ।

प्रतिपाद्यप्रतिपादकयोर्ज्ञत्वे सत्यप्रतीतत्वं गुणः । यथा—

(A)आत्मारामा विहितरतयो निर्विकल्पे समाधौ

ज्ञानोद्रेकाद्विघटिततमोग्रन्थयः सत्त्वनिष्ठाः ।

---

धनलाभे तु मद्गृहमनेवंभावात् पश्चात् समं न भविष्यतीति भावः । तत्र पृथूनि कार्त्तस्वरस्य सुवर्णस्य पात्राणि यत्र, भूषिताः सुवर्णादिमण्डिताः निःशेषपरिजनाः यत्र, विलसन्तः करेणवः हस्तिन्यः यत्र तादृशम्, गहनञ्च राजसदनम्, दरिद्रसदनं तु—पृथुकानां शिशूनां बुभुक्षया आर्त्तस्वरस्य पात्रम्, आस्तरणविरहात् भुवि उषिताः निःशेषपरिजनाः यत्र तादृशम्, विले गर्त्ते सतूकानां कुत्सितानां सतां मूषिकपिपीलिकादीनां रेणुभिः गहनं व्याप्तम् । कुत्सायां कः । अत्र विशेषणपदानां सन्देहयोग्यत्वेऽपि(B) विशेष्यद्वये प्रतिनियतार्थप्रतीतिकारित्वेन सन्देहाभावाददोषता, व्याजस्तुतिपर्यवसानेन च गुणत्वम् ।

'ज्ञत्वे' विज्ञत्वे । **आत्मारामा** इति । दौत्यमापन्नं कृष्णं बन्धुमुद्यतं दुर्योधनं सहदेवमुखाच्छ्रुत्वा तं निन्दतो भीमस्योक्तिरियम् । आत्मनि आरमन्तीति आत्मारामाः

---

(A) आत्मारामा इति । अत्रोद्योतकारास्तु—'वेणीसंहारप्रथमाङ्के कृष्णबन्धनोद्यतं दुर्योधनं श्रुत्वा, किं दुर्योधनः कृष्णस्वरूपं न जानातीति पृच्छन्तं सहदेवं प्रति भीमस्येयमुक्तिः । स्वात्मनि चिदानन्दे आरमन्ते (आरमन्ति ?) प्रत्याहृतेन्द्रियाः सन्तस्तदेकताना भवन्तीत्यात्मारामा योगिनः आत्मैव आरामः क्रीडास्थानं येषामिति वा, निर्विकल्पे आत्ममात्रावलम्बिनि भेदसंसर्गभानहीने समाधौ ध्याने ध्येयध्यात्रोरेकतापत्तिरूपे विहिता कृता रतिर्निरन्तरा प्रीतिर्यैस्ते, ज्ञानोद्रेक आत्मसाक्षात्कारदार्ढ्यं तेन विघटितस्तमोग्रन्थिर्मिथ्याज्ञानजन्यः संस्कारः येषां ते सत्त्वगुणाः ( सत्त्वं गुणः ? ) तन्निष्ठास्तन्मात्रविश्रान्ताः यं कमपि वागाद्यगोचरम् ध्यायन्तीत्यन्वयः । कथं त एव पश्यन्तीत्यत्र हेतुगर्भविशेषणम्—तमसां ज्योतिषां वा परस्तादिति, वर्त्तमानमिति शेषः । रजस्तमःस्पृष्टैरलभ्यमिति पर्यवसितम् । तमीश्वरम् अयं दुर्योधनः मोहान्धः वस्तुतत्त्वप्रतिपत्तिरहितः, पुराणं प्रकृतेरपि प्राग् वर्त्तमानम् । अत्र प्रतिपाद्यप्रतिपादकौ भीमसहदेवौ योगशास्त्रज्ञाविति प्रतीतिविलम्बाभावात् न दोषत्वम्, इतराज्ञातज्ञातृत्वेन स्वज्ञानद्वारा भावोत्कर्षकत्वाद् गुणत्वं च । अत्र प्रतिपाद्यप्रतिपादकाभ्यां सामाजिकवक्तारौ च विवक्षितौ । एतेन सामाजिकस्य रसोद्बोधात् तज्ज्ञत्वमकिञ्चित्करमित्यपास्तम्" इति ब्रुवन्ति ।

(B) विशेष्यद्वय इति, एकमपि सदनपदं सम्बन्धिभेदाद्विभिन्नमेव गृहद्वयमुपस्थापयतीत्यभिप्रायः ।

यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्तात्
तं मोहान्धः कथमयममुं [1]वेत्ति देवं पुराणम् ॥ ३०५ ॥

स्वयं वा परामर्शे। यथा—

(A)षडधिकदशनाडीचक्रमध्यस्थितात्मा
हृदि विनिहितरूपः सिद्धिदस्तद्विदां यः।
अविचलितमनोभिः साधकैर्मृग्यमाणः
स जयति परिणद्धः शक्तिभिः शक्तिनाथः ॥ ३०६ ॥

---

योगिनः यं कमपि ज्ञानागम्यं तमसां तामसेन्द्रियाणां ज्योतिषां ज्योतिःसहकृतेन्द्रियाणां च परस्तात् परभूतमगम्यं वीक्षन्ते मोहान्धः अयं दुर्योधनः कथं तम् अमुं विष्णुस्वरूपं पुराणं देवं वेत्ति। योगिनः कीदृशाः ? निर्विकल्पे निःसंशये समाधौ विहितरतयः ज्ञानोद्बोधात् विघटिताज्ञानवासनारूपतमोग्रन्थयः सत्त्वनिष्ठाः सात्त्विकाश्च। अत्र भीमसहदेवौ द्वावपि विज्ञौ तमोग्रन्थ्यादयोऽप्रतीताः पदार्थास्ताभ्यां प्रतीता एव, तन्मात्रप्रतीतेरुद्देश्यत्वाच्च गुणत्वम्। स्वयं वेति। वक्तुरेव स्वयं परामर्शे च अप्रतीतो गुण इत्यर्थः। षडधिकेति। मालतीमाधवे आकाशयानागतायाः कपालकुण्डलायाः स्वयंपरामर्शोऽयम्। सः शक्तिनाथः महेशः जयति। शक्तिभिः ईश्वरीमूर्त्तिभिः परिणद्धः वेष्टितः, यः अविचलितमनोभिः साधकैः षोडशनाडीचक्रमध्ये स्थितात्मा सन् हृदि विनिहितरूपः मृग्यमाणः तादृश एव च तद्विदां सिद्धिदः। अत्र नाडीचक्रशक्त्यप्रतीतिर्वक्तृर्या नास्तीत्यदोषता स्वमात्रप्रतीतेरुद्देश्यत्वाच्च गुणत्वम्।

---

(A) षडधिकेति। व्याख्यातमिदमुद्द्योते—

"मालतीमाधवपञ्चमाङ्के कपालकुण्डलायाः स्वयंपरामर्शोऽयम्। षडधिका दश षोडश इडा पिङ्गला सुषुम्णा अपराजिता गान्धारी हस्तिजिह्वा पूषा सुयशाः ( सुयशा इति पाठान्तराभिप्रायेण अन्यथा आधिक्यापातः ) अलम्बुषा कुहूः शङ्खिनी तालुजिह्वा इभजिह्वा विजया कामदा अमृता बहुला इत्येवंरूपास्तासां यच्चक्रं मणिपूराख्यं हृदयस्थितं तन्मध्ये स्थित आत्मा स्वरूपं यस्य, हृदि विशिष्टं निहितं रूपं ज्योतिरादिरूप आकारो यस्य, ईदृशो यस्तद्विदां तथा ज्ञानवतां सिद्धयः अणिमादयस्तद्दाता, अविचलितं निश्चलं चित्तं येषां तैस्तादृशैः साधकैरुपासकैर्मृग्यमाणः अन्विष्यमाणः शक्तिभिर्ज्ञानेच्छाकृतिभिः परिणद्धो व्याप्त उपहितो वा, शक्तिः पार्वती तस्या नाथः, यद्वा तासामेव शक्तीनां नाथः" इति।

---

1. 'वेत्तु' इति पाठान्तरम्।

अधमप्रकृत्युक्तिषु ग्राम्यो गुणः। यथा—

(A)फुल्लुक्करं कलमकूरणिहं वहन्ति
जे सिन्धुवारविडवा मह वल्लहा दे।
जे गालिदस्स महिसीदहिणो सरिच्छा
दे किं च मुद्धविअइल्लपसूणपुञ्जा॥ ३०७॥

अत्र कलम-भक्त-महिषी-दधिशब्दा ग्राम्या अपि विदूषकोक्तौ।

न्यूनपदं क्वचिद् गुणः। यथा—

गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा।

---

'अधमः' अविदग्धः, तदुक्तौ अधमत्वप्रतीतेरेवोद्देश्यत्वाद् गुणत्वम्। फुल्लुक्करमिति

पुष्पोत्करं कलमभक्तनिभं वहन्ति
ये सिन्धुवारविटपा मम वल्लभास्ते।
ये गालितस्य महिषीदध्नः सदृक्षा-
स्ते किञ्च मुग्धविचकिलप्रसूनपुञ्जाः॥ इति संस्कृतम्।

कलमः शालिः, कूरं भक्ते देशी। वल्लभत्वे भक्ततुल्यत्वं हेतुर्भोजनलम्पटत्वात्। सदृक्षाः सदृशाः। विचकिलं मल्लिका। किञ्च तेऽपि मम वल्लभा इत्यन्वयः। अत्रापि भक्ष्य-महिषीदधितुल्यत्वं वल्लभत्वे हेतुः। ग्राम्या अपीति, भक्षणलम्पटोक्तित्वादेव अत्र ग्राम्याः, न त्वन्यत्रापि।

गाढालिङ्गनेति। रात्रिवृत्तं सख्यौ कथयत उक्तिरियम्। गाढालिङ्गनेन खर्वीकृतकुचा चासौ प्रोद्भिन्नरोमोद्गमा चेति समासः, कुचे रोमोद्गमवर्णनानौचित्यात्; तादृशी प्रिया सान्द्रस्नेहरसातिरेकेण विगलत् (B)श्रीमतो नितम्बात् अम्बरं यस्याः

---

(A) फुल्लुकरमिति, कर्पूरमञ्जरीनामकसट्टके प्रथमजवनिकान्तरे विदूषकोक्तिरियम् इति केचित्। विद्धशालभञ्जिकायां विदूषकोक्तिरियमित्यन्ये। गालितस्य निर्जलीकृतस्य। टीकायामन्यद् व्याख्यातम्।

(B) अत्र श्रीमतो नितम्बस्याम्बरमिति षष्ठीसमासगर्भो बहुव्रीहिर्युक्तः, पञ्चम्यन्तार्थस्य तु विगलनक्रियासाकाङ्क्षतया तत्पदस्याम्बरपदपूर्ववर्तित्वमयुक्तमिति ध्येयम्।

मा मा मानद माऽति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥३०८

क्वचिन्न गुणो न दोषः। यथा—

तिष्ठेत् कोपवशात् प्रभावपिहिता ? दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेत् ? मयि पुनर्भावार्द्रमस्या मनः।
तां हर्त्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ॥ ३०९ ॥

अत्र पिहितेत्यतोऽनन्तरं "नैतद् यतः" इत्येतैर्न्यूनैः पदैर्विशेषबुद्धेरकरणान्न गुणः। उत्तरा प्रतिपत्तिः पूर्वां प्रतिपत्तिं बाधते इति न दोषः।

अधिकपदं क्वचिद् गुणः। यथा—

यद्वञ्चनाहितमतिर्बहु चाटुगर्भं
कार्योन्मुखः खलजनः कृतकं ब्रवीति।

---

तादृशी सती निष्पन्दत्वेन सुप्तेत्यादिवितर्कचतुष्टयविषयोऽभूदित्यर्थः। कीदृशी ? हे मानद अलम् अत्यर्थं मा मा मा माम् अति इत्युक्त्वा पीडयेत्यनुक्तिवशात् क्षामाक्षरस्य अल्पाक्षरस्योल्लापिनी सतीत्यर्थः। सुप्ता निद्रिता, अतिनिष्पन्दत्वेन मृता नु इति, अन्तर्गतत्वेन मनसि लयः, ततोऽबहिर्भावाद् विशेषेण लयः। अत्र अत्यन्तरसावेशसूचकत्वात् पीडयेति क्रियान्यूनत्वं गुणः।

क्वचिन्न गुण इति। अत्र न्यूनपदत्वमित्यनुषङ्गः। तिष्ठेदिति। पुरूरवस उक्तिरियम्। सा उर्वशी स्वभावेन पिहिता अदृश्यमाना सती तिष्ठेत् ? अत्र नैतदिति पूरणेन यथोक्तवितर्कनिषेधे सति यत इति पूरयित्वा अत्र हेतुमाह—दीर्घमिति। एवमुत्तरत्रापि। असुरकृतत्वकोटिस्तु नैवेत्याह—तां हर्त्तुमिति। इत्थमदृश्यत्वे हेतुर्नास्त्येव, फलन्तु अस्त्येवेति विस्मयादाह—सा चेति। अगोचरम् अगोचरत्वम्, याता प्राप्ता। विशेषबुद्धेरिति, पूर्ववत् रसावेशादिबुद्धेरित्यर्थः। 'उत्तरा प्रतिपत्तिः' पूर्वप्रतिपत्तिविरोधिनी बोध्या, तेन पचेत्यनन्तरं भुङ्क्ष्वेति प्रतिपत्तिर्न बाधिका।

अधिकपदमिति, अधिकपदं तत्रैव गुणः यत्र [1]अधिकपदात् लक्षणया अधिकार्थप्रतिपत्तिः। यद्वञ्चनेति। वञ्चना प्रतारणा, आहिता दत्ता, कृतकं मिथ्या,

---

1. 'एकपदात्' ख।

तत् साधवो न न विदन्ति विदन्ति किं तु
कर्तुं वृथा प्रणयमस्य न पारयन्ति ॥ ३१० ॥

अत्र "विदन्ति" इति द्वितीयमन्ययोगव्यवच्छेदपरम् ।

यथा वा—

वद वद जितः स शत्रुर्न हतो जल्पंश्च तव तवास्मीति ।
चित्रं चित्रम् ! अरोदीद् हा हेति परं मृते पुत्रे ॥ ३११ ॥

इत्येवमादौ हर्षभयादियुक्ते वक्तरि ।

कथितपदं क्वचिद् गुणः लाटानुप्रासे अर्थान्तरसंक्रमितवाच्ये विहितस्यानुवाद्यत्वे च । क्रमेणोदाहरणम्—

सितकरकररुचिरविभा विभाकराकार धरणिधर कीर्तिः ।
पौरुषकमला कमला साऽपि तवैवास्ति नान्यस्य ॥ ३१२ ॥

ताला जाअंति गुणा जाला दे सहिअएहिं घेप्पन्ति ।
रइकिरणणुग्गहिआइँ होन्ति कमलाइँ कमलाइँ ॥ ३१३ ॥

---

अस्य प्रणयं वृथा कर्त्तुमित्यन्वयः । अत्रेति, तथा च साधव एवेत्यर्थः । नञ्द्वयाच्च विदन्त्येवेत्यर्थः । वीप्सायामपि अधिकपदगुणत्वमाह—यथा वा वद वदेति । जितारौ सेनापतौ वद वदेति राज्ञः पृच्छा, जित इत्यादिकं सेनापतेरुत्तरम् । चित्रं चित्रमिति राज्ञ उक्तिः, अरोदीदित्यादिकं सेनापतेः । स न हतः किन्तु तत्पुत्र एव हतः, हा हेति अरोदीदित्यर्थः । हर्षभयादीति, तादृशवक्तुर्वीप्सयोक्तेः भयादिसूचकत्वाद् गुणत्वम् ।

'लाटानुप्रासः' वक्ष्यमाणः पदानुप्रासः । सितकरेति । हे विभाकराकार सूर्यतुल्य, हे धरणिधर क्षितिपालक, सितकरेत्याद्युक्तरूपकीर्त्तिः तवैव, तथा सा प्रसिद्धा कमलाऽपि तवैव पौरुषकमला अस्ति पौरुषमेव कमलम् अधिष्ठानपद्मं यस्याः तादृशी पौरुषाधिष्ठात्री लक्ष्मीः तवैवास्तीत्यर्थः । सितकरः चन्द्रः । अत्र करकरेत्याद्यनुप्रासाधानाद् गुणत्वम् ।

अर्थान्तरसंक्रमितवाच्ये त्वाह—तालेति—

तदा जायन्ते गुणा यदा सहृदयैर्गृह्यन्ते ।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥ इति संस्कृतम् ।

जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि सम्पदः ॥ ३१४ ॥

पतत्प्रकर्षमपि क्वचिद् गुणः । यथा—उदाहृते 'प्रागप्राप्तेत्यादौ' ।

समाप्तपुनरात्तं क्वचिन्न गुणो न दोषो यत्र न विशेषणमात्रदानार्थं पुनर्ग्रहणम्, अपि तु वाक्यान्तरमेव क्रियते । यथा अत्रैव 'प्रागप्राप्तेत्यादौ ।

अपदस्थसमासं क्वचिद् गुणः, यथा—उदाहृते रक्ताशोकेत्यादौ । गर्भितं तथैव । यथा—

[1]तुमि अवहत्थिअरेहो णिरङ्कुसो अह विवेअरहिओ वि ।
सिविणे वि तुमम्मि पुणो पत्तिहि भत्तिं ण [2]पसुमरामि ॥३१५॥

---

अत्र द्वितीयकमलपदमुत्कृष्टेऽर्थान्तरे [3]संक्रमितवाच्यं लाक्षणिकम्[3]* ; तादृशाधिकार्थप्रापकतया गुणत्वम् । न च वद वदेत्यादौ यद्वञ्चनेत्यादौ च अधिकपदत्वम्, अत्र तु कथितपदत्वमित्यत्र किं विनिगमकमिति वाच्यम्, पूर्वयोस्तादृशपदाभावेऽपि बोधोदयादाधिक्यम्, अत्र तु विधेयस्य कमलपदार्थस्यानुक्तौ विधेयसाकाङ्क्षतया निराकाङ्क्षबोधानुदयेनाधिक्याभावात् कथितपदत्वमेवेति विनिगमकात् । विहितानुवादेत्वाह—जितेन्द्रियत्वमिति । अत्र तेनैव पदेन प्रतिपादनेऽर्थान्तरानवभासाद् गुणत्वम् ।

यथोदाहृत इति । तत्र येनानेनेत्यत्र क्रोधाभावात् परुषवर्णानुप्रासपातो गुणः । समाप्तेति, न च विशेषणदानार्थं विशेष्यस्य पुनर्ग्रहणमेव तल्लक्षणं वाक्यान्तरकरणे त्वनुषङ्गरूपस्य पुनर्ग्रहणस्यैवाभावात् कथमिदमुक्तमिति वाच्यं [4]समाप्तपुनरात्तपदयोगार्थमादाय वाक्यान्तरीययत्पदेन पुनर्ग्रहणेऽपि तत्प्रसञ्जनात्[4]* । यथाऽत्रैवेति । येनानेनेत्यत्र यत्पदेन परशोः पुनरात्तत्वात् । उदाहृत इति, तत्र शृङ्गारीयश्लोके दीर्घसमासस्यापदस्थत्वेऽपि शिरोविधूननेन कुपितस्य वचसि गुणत्वम् । तथैवेति, गुण एवेत्यर्थः । तुमि इति—

---

1. अत्र, 'भम्मि' 'भमि' 'तुम्मि' इति पाठान्तराणि । 2. 'पुच्छ सिमि' इति पाठान्तरम् । 3. 'संक्रमितवाच्यलाक्षणिक' क-ख । 4. 'समाप्तपुनरात्तयोगार्थमादायैव प्रसक्तिसम्भावनायां प्रतिप्रसूतमितत्रवधेयम्' ख ।

अत्र (A)प्रतीहीति मध्ये दृढप्रत्ययोत्पादनाय। (B)एवमन्यदपि लक्ष्याल्लक्ष्यम्।

(८८) व्यभिचारि-रस-स्थायिभावानां शब्दवाच्यता।

कष्टकल्पनया व्यक्तिरनुभाव-विभावयोः ॥ ६० ॥

प्रतिकूलविभावादिग्रहो दीप्तिः पुनः पुनः।

अकाण्डे प्रथन-च्छेदावङ्गस्याप्यतिविस्तृतिः ॥ ६१ ॥

---

भवाम्यपहस्तितरेखो निरङ्कुशोऽथ विवेकरहितोऽपि।

स्वप्नेऽपि त्वयि पुनः प्रतीहि भक्तिं न प्रस्मरामि ॥ इति संस्कृतम्।

णेह इति पाठे अपहस्तितस्नेह इति संस्कृतम्। अत्रेति, सम्पूर्ण वाक्ये वाक्यार्थप्रतीतेरुत्पन्नत्वेन दृढतदुत्पादासम्भवात्, वाक्यमध्ये तु वाक्यार्थप्रतीतेरनुत्पन्नत्वेन दृढतदुत्पादसम्भवादिति भावः। [1]नचैवं लग्नं रागावृताङ्ग्यित्यादौ [2]दृढप्रत्ययार्थं गर्भितत्वकरणे दोषान्तरप्रसक्त्या तथाकरणीयत्वाभावेऽपि[1-2]* परापवादनिरतैरित्यत्र दृढप्रत्यायनार्थं गर्भितकरणमस्तु। तथाच कथं तद् दूषितमिति वाच्यम्, तत्र दुर्जनसङ्गतित्यागस्य प्रसिद्धिवशादेव प्रतीतत्वेन एतावता दृढप्रत्यायनस्यानुद्देश्यत्वात्, अत्र तु भक्तिप्रस्मरणाभावस्य कुतोऽप्यप्रतीतत्वेन दृढप्रत्यायनस्योद्देश्यत्वादेव(C)।

इदानीं रसदोषानाह—**व्यभिचारीति**। दीप्ति-प्रथन-च्छेदा रसस्यैव बोध्याः। 'अकाण्डे' असमये।

---

(A) अत्रोद्योतकाराः "प्रतीहीति सत्यप्रतीतिपरम्, तेन स्वोक्तेरमिथ्यात्वप्रतिपादकेन प्रतीहीत्यनेन शपथसमानशीलनेन सौहार्दविषयदार्ढ्यावगमः। परत उपादाने तु प्राङ्मिथ्यात्वेन प्रतीतौ तदकिञ्चित्कर"मिति भावं वर्णयन्ति।

(B) अत्रोद्द्योतकाराः—"ताणं गुण इत्यादौ वचनप्रक्रमभेदस्यादोषता, प्रत्युत प्रेम्ण एकरूपताव्यञ्जनाद् गुणत्वम्। एवं धन्याऽसीत्यादावपि शपामीति गर्भितं गुण एव, अविदग्धगोष्ठ्यां शपथेनैव प्रत्यायनौचित्यात्। अभवन्मतयोगानभिहितवाच्यापदस्थपदसंकीर्णप्रसिद्धिहताक्रमामतपरार्थास्तु नित्या एवेति बोध्यम्' इति वदन्ति।

(C) उद्देश्यत्वादेव गर्भितं गुण इति शेषः।

---

1. अयमंशः ख-पुस्तके नास्ति। 2. विदितं तेऽस्त्वितास्य दृढप्रतीत्युत्पादनार्थत्वेन प्रकाशितविरुद्धत्वदोषापत्त्या माऽस्तु तत्र दृढप्रत्यायनार्थता' क।

अङ्गिनोऽननुसन्धानं[११] प्रकृतानां विपर्ययः[१२] ।

अनङ्गस्याभिधानं[१३] च रसे दोषाः स्युरीदृशाः ॥ ६२ ॥

(१) स्वशब्दोपादानं व्यभिचारिणो यथा—

सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे
सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि ।
सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे
पार्वत्या नवसङ्गमप्रणयिनी दृष्टिः शिवायाऽस्तु वः ॥ ३१६ ॥

अत्र व्रीडादीनाम् ।

व्यानम्रा दयितानने मुकुलिता मातङ्गचर्माम्बरे
सोत्कम्पा भुजगे निमेषरहिता चन्द्रेऽमृतस्यन्दिनि ।
मीलद्भ्रूः सुरसिन्धुदर्शनविधौ म्लाना कपालोदरे

इत्यादि तु युक्तम् ।

(२) रसस्य स्वशब्देन शृङ्गारादिशब्देन वा वाच्यत्वम् ।

---

(१) व्यभिचारिणः शब्दवाच्यतामाह—स्वशब्देति । सव्रीडेति । नवसङ्गमे प्रथमदिनप्रियसमागमे प्रणयिनी वत्सला पार्वत्या दृष्टिः वः शिवाय अस्तु । [1]तत्र तत्र पतन्त्या दृष्टे[1]*र्विशेषणान्याह—सव्रीडेति, दयितानने दृश्यमान इति शेषः ; एवं सर्वत्र । सकरुणत्वं मातङ्गमारणस्मृत्या, सविस्मयरसत्वं हरस्य अमृतस्यन्दिचन्द्रप्राप्तिहेत्वनुपस्थित्या, सेर्ष्यत्वं सपत्नीबुद्ध्या, दीनत्वम्, अशुचिकपालधारणात् । व्रीडादीनामिति, स्वशब्दवाच्यत्वमित्यन्वयः । एषां स्वस्वानुभावमुखेन कथन एव चमत्कार इत्यभिप्रायेणाह—व्यानम्रेति । अत्र व्यानम्रत्वादयो यथासङ्ख्यं व्रीडादीनामनुभावा बोध्याः । [2]अयञ्च दोषो व्यभिचारिभावस्य स्वातन्त्र्येणोपादान एव बोध्यः, रसव्यञ्जनार्थमुपादाने तु न दोषः । यथा—"लज्जानम्रमुखी"त्यत्र लज्जायाः ; यथा वा "श्रमविवृतमुखे"त्यत्र श्रमस्य[2]* ।

---

1. 'तत्तद्विषयदृष्टेः' क-ख । 2. अयमंशः ग-पुस्तके नास्ति ।

क्रमेणोदाहरणम्—

तामनङ्गजयमङ्गलश्रियं किञ्चिदुच्चभुजमूललोकिताम् ।
नेत्रयोः कृतवतोऽस्य गोचरे कोऽप्यजायत रसो निरन्तरः ॥३१७॥

(A)आलोक्य कोमलकपोलतलाभिषिक्त-
व्यक्तानुरागसुभगामभिराममूर्तिम् ।
पश्यैष बाल्यमतिवृत्य विवर्तमानः
श्रृङ्गारसीमनि तरङ्गितमातनोति ॥ ३१८ ॥

---

(२) **तामनङ्गेति**। किञ्चिदुच्चभुजमूलावच्छेदेन लोकितामित्यर्थः, तथात्वे कुच-मूलदर्शनेन कामोद्दीप्तेः। तादृशीं तां नेत्रयोर्गोचरे कृतवतः अस्य यूनः निरन्तरः निविडः कोऽपि अर्थात् श्रृङ्गाररूपः रसः अजायत इत्यर्थः। ननु एतत्काव्यजन्यो रसः श्रोतृनिष्ठ एव, ज्ञानसम्बन्धेन श्रोतृनिष्ठस्य रत्यादेरेव रसत्वात्, नायकस्तु नैतत्-काव्यश्रोता, किन्तु रतिसमवाय्येव, तथा च तस्य रसः रतिः अजायत इत्यर्थः। ततश्च स्थायिभावस्यैवात्र शब्दवाच्यत्वम्, न तु रसस्य, तस्य तु काव्यस्थरसादिशब्देन वाच्यता न सम्भवतीत्येव गुणीभूतव्यङ्ग्ये स्वयमेवोक्तम्(B)। सत्यम्, रसवाचकशब्दैः स्थायिभावस्योपादानमेवात्र रसस्य स्वशब्दवाच्यत्वं विवक्षितम्; व्यक्तीभविष्यति चेदं प्रसङ्गान्तरेणोल्लासशेषे 'रसशब्देनात्र स्थायिभाव एवोपलक्षितः' इत्युक्त्या। [1]नचैवं "स्थायिभावस्य स्वशब्दोपादानम्" एतावतैव गतार्थमत(C)स्तस्य प्रथम-दोषत्वकथनमनुपपन्नमिति वाच्यम्,[1]* स्थायिभावस्यैव स्ववाचकशब्देन रसवाचक-शब्देन वा उपादानमित्याशयेन दोषद्वयकथनात्। **आलोक्येति**, बाल्यमतिवृत्य

---

(A) आलोक्येति। कोमलकपोलतलस्य यदभिषिक्तम् अश्रुपातेनाभिषेकस्तेन अनुभावरूपेण व्यक्तो योऽनुरागस्तेन सुभगामित्यर्थः।

(B) अतः परं क-ख-पुस्तकयोर्दृश्यमानः 'रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्य इत्युक्त्वा प्राक्' इत्यंशः स्वयमेवोक्तमित्यस्य विवृतिरूपा टिप्पनीति बुद्ध्या परित्यक्तः।

(C) तस्येति। रसस्य स्वशब्दवाच्यतादोषस्य स्थायिभावानां स्वशब्दवाच्यतादोषापेक्षया पार्थक्येन पूर्वं निर्देशोऽनुपपन्न इत्याशङ्कार्थः।

---

1. 'न चैवमेतावतैव स्थायिभावस्य स्वशब्दवाच्यतादोष इत्युक्तौ स्थायिभावस्य पृथगुपादानं पुनरुक्तिरेवेति वाच्यम्' क-ख।

(३) स्थायिनो यथा—

सम्प्रहारे प्रहरणैः प्रहाराणां परस्परम् ।
ठणत्कारैः श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत् ॥ ३१९ ॥

अत्रोत्साहस्य ।

(४) कर्पूरधूलिधवलद्युतिपूरधौत-
दिङ्मण्डले शिशिररोचिषि तस्य यूनः ।
लीलाशिरोंऽशुकनिवेशविशेषक्लृप्ति-
व्यक्तस्तनोन्नतिरभून्नयनावनौ सा ॥ ३२० ॥

अत्रोद्दीपनालम्बनरूपाः शृङ्गारयोग्या विभावा अनुभावपर्यवसायिनः स्थिता इति कष्टकल्पना ।

---

विवर्त्तमान एष पुरुषः अभिरामरूपां नायिकाम् आलोक्य शृङ्गारस्य सीमनि पार्श्वे तरङ्गितं गतागतम् आतनोति, एतत् पश्य । कीदृशीम् ? कोमलकपोलतले अभिषिक्तेन अभिषेकेण व्यक्तः यः अनुरागः तेन सुभगामित्यर्थः । अभिषिक्तेति भावे क्तः । (A)कपोलपुलकव्यक्तानुरागेणेत्यर्थः, तद्व्यञ्जकपुलकोद्गम एव तदभिषेकः ।

(३) संप्रहार इति युद्ध इत्यर्थः । प्रहरणैः अस्त्रैः, परस्परं प्रहाराणां ठणत्कारैरित्यन्वयः ।

(४) अनुभावस्य कष्टकल्पनया व्यक्तिमाह—कर्पूरेति । शिशिररोचिषि चन्द्रे सति नायिका तस्य यूनः नयनावनौ नयनविषयतायाम् अभूदित्यर्थः । चन्द्रे कीदृशे ? कर्पूरधूलिवत धवलेन द्युतिपूरेण क्षालितदिङ्मण्डले । कीदृशी ? लीलया शिरसि अंशुकविशेषनिवेशस्य क्लृप्त्या कल्पनया व्यक्तस्तनोन्नतिः, हस्तोत्क्षेपेण स्तनोन्नतिदर्शनात् । अत्र तस्य शान्तशृङ्गारित्वान्यतर[1]निश्चयाभावेन तद्दर्शनेन किं चक्षुषो निमीलनं प्रसारणं वा कृतमित्यस्यानुक्तत्वादनुभावस्य चक्षुःप्रसारणस्य यूनो युवती-

---

(A) कपोलपुलकेति, इदं तु कपोलतलेत्यत्र कपोलपुलेति पाठाभिप्रायेणेति प्रतीयते, दृश्यते च पुलशब्दः पुलकवाची इति । इतः पूर्वं 'पुलेति पाठे' इत्यंशो लेखकप्रमादेन स्खलितो न वेत्यनुसन्धेयम् ।

---

1. 'निश्चायकाभावेन अनुभावस्य चक्षुःप्रसारणस्य कष्टकल्पनया व्यक्तिः शान्तत्वे चक्षुर्निमिलनस्यापि सम्भवात् कष्टेन कल्पना तु युवतिदर्शने यूनश्चक्षुःप्रसारणमौत्सर्गिकमितिरूपा । तदाह' क । "निश्चायकाभावेनानुभावस्य चक्षुःप्रसारणस्य पर्यवसायिनः प्रणिधानेनैव बोधका इत्यर्थः' ख ।

(५) परिहरति रतिं मतिं लुनीते
स्खलति[1] भृशं परिवर्तते च भूयः।
इति बत विषमा दशाऽस्य देहं
परिभवति प्रसभं किमत्र कुर्मः॥ ३२१॥

अत्र रतिपरिहारादीनामनुभावानां करुणादावपि सम्भवात् कामिनीरूपो विभावो यत्नतः प्रतिपाद्यः।

(६) प्रसादे वर्तस्व प्रकटय मुदं संत्यज रुषं
प्रिये शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः।
निदानं सौख्यानां क्षणमभिमुखं स्थापय मुखं
न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः॥ ३२२॥

अत्र शृङ्गारे प्रतिकूलस्य शान्तस्यानित्यताप्रकाशनरूपो विभावस्तत्प्रकाशितो निर्वेदश्च व्यभिचारी उपात्तः।

---

दर्शनादुत्सर्गतः सिद्धिरूपा कष्टकल्पना इत्याह—अत्रेति। उद्दीपनं चन्द्रस्तदीयरश्मिः स्तनोन्नतिश्च, आलम्बनं नायिका अनुभावस्य चक्षुःप्रसारणस्य पर्यवसायिनः प्रणिधानेन बोधका इत्यर्थः।

(५) विभावस्य कष्टकल्पनामाह—**परिहरतीति**। सर्वक्रियास्वेव "अयम्" एव कर्त्ता बोध्यः। परिहरति त्यजति, लुनीते बाह्यविषयात् छिनत्ति, इति विषमा दशा इत्यन्वयः। प्रसभं बलात्। **यत्नप्रतिपाद्य** इति, प्रकरणप्रतिसन्धानयत्नेनेत्यर्थः। अत्र च अनुभावानां प्रतिकूलमात्रीयत्वाभावात् न प्रतिकूलविभावादिग्रहदोषप्रसक्तिः, तन्मात्रीयत्व एव तथात्वस्य व्यक्तीभविष्यत्वात्।

(६) प्रतिकूलविभाव[2]व्यभिचारिणोर्ग्रह[2]*मेकत्रैव दर्शयति—**प्रसाद** इति। शुष्यन्ति शोषं लभमानानि अङ्गानि कर्मभूतानि अमृतमिव ते वचः कर्तृ सिञ्चतु इत्यन्वयः। प्रत्येतुं प्रत्यागन्तुम्[3]। **अत्रेति**। कालोऽत्र जीवनकालः तदनित्यतया जीवनस्यैवानित्यता पर्यवस्यति कालस्य नित्यत्वात्। तथा च स्वजीवनानित्यत्वप्रकाशनरूपः शान्तमात्रस्य [4]उद्दीपनरूप इत्यर्थः[4]*। एवं तत्प्रकाशितो निर्वेदोऽपि शान्तमात्रीयः।

---

1. 'स्खलतितरां' इति पाठान्तरम्। 2. '-स्थायिभावयोर्ग्रह-' क, '-स्थायिभावव्यभिचारिणां ग्रह-' ख। 3. अतः परं क-पुस्तके 'गतस्य हरिणस्य प्रत्यागमनाभावात्तद्रूपणम्' इत्यधिकः पाठः। 4. 'विभाव इत्यर्थः' क-ख।

**णिहुअरमणम्मि लोअणपहम्मि पडिए गुरुअणमज्झम्मि(A) ।**
**सअलपरिहारहिअआ वणगमणं एव्व[1]महइ बहू ॥ ३२३ ॥**

**अत्र सकलपरिहार-वनगमने शान्तानुभावौ । इन्धनाद्यानयन-व्याजेनोपभोगार्थं वनगमनं चेत् न दोषः(B) ।**

---

[2]ननु शान्ते निर्वेदः स्थायिभाव एव, तत्कथं निर्वेदश्च व्यभिचारी उपात्त इत्युक्तमिति[3],* चेन्न, प्रकृते शृङ्गारे उपात्तो व्यभिचारी निर्वेदः प्रतिकूलशान्तरसमात्रीय(C) इत्येव तदर्थात्, प्रतिकूलविभावादी[3]त्यत्र प्रतिकूलीयस्थायिभावस्य आदिपदेन ग्रहणात्; यौवनानित्यताप्रकाशनं तु न शान्तमात्रीयं जरतोऽपि कामसत्त्वात् । अत एव—

त्यजत मानमलं बत विग्रहैर्न पुनरेति गतं चतुरं वयः(D) ।

इति रघावदुष्टम् ।

प्रतिकूलानुभावग्रहमुदाहरति—**णिहुअ** इति

निभृतरमणे लोचनपथे पतिते गुरुजनमध्ये ।
सकलपरिहारहृदया वनगमनमेव महति बधूः ॥ इति संस्कृतम् ।

---

(A) गुरूणां मध्ये इत्यनेनात्यन्तं तरलता इत्युद्द्योतः ।

(B) न दोष इति । अयम्भावः—यादृशस्थले विभावानुभावव्यभिचारिभिः प्रकृतरस-प्रतिकूलरसस्य प्रतीतिसम्भवस्तत्रैव प्रतिकूलविभावादिग्रहो दोषः, तेन यत्र रसान्तरसाधारणानां व्यभिचारिप्रभृतीनामनुभावादिसहकारिवशेन प्रतिकूलरसव्यञ्जकता न सम्भवति, तत्र प्रतिकूलव्यभिचार्यादिपरिग्रहमात्रेण न दोष इति । एतदभिप्रायेणैव प्रदीपेऽप्युक्तम्—

'अत्र व्याजादिकं विना वनगमनं सकलपरिहारश्च शान्तानुभावः, न च व्याजः प्रतिपादित इति शृङ्गारस्य प्रकृतस्य विच्छित्तिः । इन्धनाद्यानयनव्याजेन सम्भोगार्थं वनगमनं यद्युच्यते तदा न शान्तानुभावग्रह इति । स्पष्टीकृतमिदमुद्द्योते 'न च निभृतेत्यादिस्वरसात् सकल-पदस्य गृहकार्यपरत्वादेवंप्रतीतिः, तत्कर्मणस्तदानीमनौचित्यप्रतिभासेन वैराग्यहेतुत्व-सम्भवा'दिति ।

(C) शान्तरसमात्रीय इति, शान्तरसस्यैव स्थायिभाव इत्यर्थः, तेन निर्वेदस्य व्यभिचारि-भावविधया रसान्तरसाधारणत्वेऽपि न क्षतिरिति बोध्यम् ।

(D) अस्य शेषार्द्धम्—

परभृताभिरितीव निवेदिते स्मरमते रमते स्म बधूजनः । इति

( ९म सर्गे ४७ श्लोकः )

---

1. 'महच्छदि' इति क्वचिन्मुद्रितपुस्तके पाठः । 2. न च निर्वेदः कथं शान्तस्य व्यभिचारी उक्तः तदीयस्थायिभावत्वादेव तस्येति वाच्यम्' क-ख । 3. '-तत्रादिपदेन तदीयस्थायिभावस्याप्युक्तत्वात्' ख, '-तत्र प्रतिकूलभावीयानां प्रकृतरसविभावादीनां ग्रह इत्यर्थः' ग ।

(७) दीप्तिः पुनः पुनः, यथा—कुमारसम्भवे[1]रतिविलापेषु।

(८) अकाण्डे प्रथनम्, यथा वेणीसंहारे द्वितीयेऽङ्केऽनेकवीरक्षये प्रवृत्ते भानुमत्या सह दुर्योधनस्य शृङ्गारवर्णनम्।

(९) अकाण्डे छेदः, यथा—वीरचरिते द्वितीयेऽङ्के राघवभार्गवयोर्धाराधिरूढे वीररसे 'कङ्कणमोचनाय गच्छामि' इति राघवस्योक्तौ।

(१०) अङ्गस्याप्रधानस्यातिविस्तरेण वर्णनम्, यथा—हयग्रीववधे हयग्रीवस्य।

---

(A)महति इच्छति। अत्रेति। वनगमने इत्यत्र तत्पूर्वकवनगमने इत्यर्थः, वनगमनमात्रस्य शान्तानुभावत्वाभावात्। 'शान्तानुभावौ' शान्तमात्रानुभावौ, शृङ्गारे तु अलङ्काराद्यपरिहारेण परिहार्यसाकल्याभावात्। वनगमनस्य सकलपरिहारपूर्वकत्वाभावे तु न दोष इत्याह—इन्धनादीति। [2]आदिना फलपुष्पपरिग्रहः। उपभोगार्थमिति वनगमनफलमेवोक्तम्, तादृशवनगमनादेव उपभोगार्थतालाभ इत्यर्थः[2]*।

(७) 'दीप्तिः' उद्बोधनम्। रतिविलापेष्विति "विललाप विकीर्णमूर्द्धजा" इत्युपक्रम्य धारावाहिके करुणरसे प्रवर्त्तितेऽपि पुनर्भ्रधोरागमने,

"तमवेक्ष्य रुरोद सा भृशं स्तनसम्बाधमुरो जघान च"

इति पुनरुद्बोधनं कृतम्। तत्र च पिष्टपेषणन्यायाद्दोषता।

(८) अनेकेति स्वपुत्रलक्ष्मणाद्यनेकेत्यर्थः(B)।

(१०) अप्रधानस्येति प्रतिनायकस्येत्यर्थः। न चैवम्—

वंशवीर्यश्रुतादीनि वर्णयित्वा रिपोरपि।
तज्जयान्नायकोत्कर्ष इति मार्गो धिनोति नः॥

(काव्यादर्शे १म-परिच्छेदे २२शः श्लोकः)

---

(A) अत्र महतीत्यस्य इच्छतीत्यर्थो धातूनामनेकार्थत्वादिति न्यायात् कृतः। उद्द्योतकारादिभिस्तु 'महइ' इत्यस्य 'इच्छति' इत्येव संस्कृतमुक्तम्।

(B) अतः परं नवमो रसदोषः अकाण्डे छेदाख्यः वृत्तावेव दृगम इति टीकाकृता न व्याख्यात इति बोध्यम्।

---

1. 'रतिविलापे' इति मुद्रितपुस्तकेषु पाठः। 2. 'इन्धनानयनादीत्यत्रमादिपदयोजना बोध्या। तादृशवनगमनस्योपभोगार्थत्वमेव पर्यवस्यतीत्याह—उपभोगार्थमिति। न तूपभोगार्थताऽपि शाब्दी तादृशवनगमनादेव तल्लाभादित्यवधेयम्' ग।

(११) अङ्गिनोऽननुसंधानम्, यथा—रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमने सागरिकाया विस्मृतिः।

(१२) प्रकृतयो दिव्या अदिव्या दिव्यादिव्याश्च, वीररौद्रशृङ्गार-शान्तरसप्रधाना धीरोदात्त-धीरोद्धत-धीरललित-धीरप्रशान्ताः,

---

इति दण्ड्युक्तविरोध इति वाच्यम्, तस्य अतिविस्तारवर्णनपरत्वाभावात्, अतिविस्तरेण वर्णने तु तत्रैव नायकवृद्धत्युदयाद् अङ्गिनोऽननुसन्धानाद् दोषतापत्तेः।

(११) **बाभ्रव्यागमन** इति, सागरिकाया एव पितृगृहादागतः कञ्चुकी बाभ्रव्यः।

(१२) प्रकृतिविपर्ययं वक्तुं प्रकृतीराह—**प्रकृतय** इति, प्रकृतिविशेषवन्त इत्यर्थः। 'दिव्याः' इन्द्रादयः, 'अदिव्या' मानुषा दुष्मन्तमाधवादयः, 'दिव्यादिव्याः' देवावतारा मानुषाः श्रीकृष्णरामचन्द्रादयः। **वीरे**ति, त्रय एव वीरादिरसप्राधान्येन चतुर्विधा इत्यर्थः, तथा च द्वादश। (A)तत्तद्रसप्राधान्येन [1]तेषां नामान्याह[1]*—**धीरोदात्तेति**।

अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः।
स्थेयान् निगूढमानो धीरोदात्तो दृढव्रतः कथितः॥

इति धीरोदात्तलक्षणम्।

मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः।
आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः॥

इति धीरोद्धतलक्षणम्।

निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात्।

इति धीरललितलक्षणम्।

सामान्यगुणैर्भूयान् द्विजादिको धीरप्रशान्तः स्यात्॥

(सा० द० ३-यपरिच्छेदः)

इति धीरप्रशान्तलक्षणम्।

---

(A) तत्तद्रसेति, तथा च वीरप्राधान्ये धीरोदात्तः, रौद्रप्राधान्ये धीरोद्धतः, शृङ्गारप्राधान्ये धीरललितः, शान्तप्राधान्ये धीरप्रशान्त इत्यर्थः। इदन्तु न दर्पणकारादीनां सम्मतम्, शृङ्गारिणां रामनलदुष्मन्तादीनां धीरोदात्तत्वस्य एवं रसान्तरीयाणामन्येषामपि अन्यविधत्वस्य तैर्नाटकादि-

---

१. 'तेषां यथासङ्ख्यं परिभाषामाह' ग।

उत्तमाधममध्यमाश्च। तत्र रतिहासशोकाद्‌भुतानि अदिव्योत्तमप्रकृतिवद् दिव्येष्वपि। किन्तु रतिः सम्भोगशृङ्गाररूपा उत्तमदेवताविषया न वर्णनीया। तद्वर्णनं हि पित्रोः सम्भोगवर्णनमिवात्यन्तमनुचितम्।

क्रोधं प्रभो ! संहर संहरेति यावद्गिरः खे मरुतां चरन्ति।
तावत् स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥३२४॥

इत्युक्तवद् भ्रुकुट्यादिविकारवर्जितः क्रोधः सद्यःफलदः स्वर्ग-पाताल-गगन-समुद्रोल्लङ्घनाद्युत्साहश्च दिव्येष्वेव। अदिव्येषु तु यावदवदानं प्रसिद्धमुचितं वा तावदेवोपनिबन्धव्यम्। अधिकं तु निबध्यमानमसत्यप्रतिभासेन 'नायकवद् वर्तितव्यं न प्रतिनायकवद्' इत्युपदेशो न पर्यवस्येत्। दिव्यादिव्येषु उभयथाऽपि। एवमुक्तस्यौचित्यस्य दिव्यादीनामिव धीरोदात्तादीनामप्यन्यथावर्णनं विपर्ययः। तत्रभवन् भगवन्नित्युत्तमेन, न अधमेन; मुनिप्रभृतौ न राजादौ,

---

ते द्वादशैव उत्तमादित्रिविधा इत्याह—**उत्तमेति**। तेन षट्त्रिंशत् नायकाः।

तथा वर्णनीयानौचित्यरूपं प्रकृतिविपर्ययं वक्तुं वर्णनीयौचित्यं दर्शयति—**रतिहासेति**। **दिव्येष्वपीति**, वर्णनीयानीति शेषः। **अत्यन्तमनुचितमिति**, तेन तद्वर्णनं प्रकृतिविपर्ययः। एवञ्च 'रइकेलिहिअणिअसणे'त्यादौ 'विपरीअरए' इत्यादौ च प्रकृतिविपर्यय एवेति बोध्यम्।

**क्रोधं प्रभो** इति। मरुतां देवानाम्। खे चरन्ति न तु हरकर्णमागताः। **यावदवदान**मिति, 'अवदानं' मूलभूतपुराणादिकम्। 'प्रसिद्धं' लोकेषु 'उचितम्' अप्रसिद्धमप्यबाधितम्। **इत्युपदेशो** इति, काव्यादेवमुपदेशस्य प्रागेवोक्तत्वात्[1]।

भाषाविपर्ययोऽपि प्रकृतिविपर्यय इति वक्तुं भाषाविशेषेण सम्बोधनकर्तॄन् नियमयति—**तत्रभवन्निति**। तया भाषया सम्बोधनीयानपि नियमयति—**मुनीति**। 'न राजादा'वित्यत्र आदिना प्रभुमात्रपरिग्रहः। आलिङ्गितस्तत्रभवानित्यत्र तु न

---

लक्षणे प्रतिपादनात्। मूलकृतामीदृशविभागे तात्पर्यमस्तीत्यत्र न किञ्चिद् गमकमुपलभामहे इति चिन्तनीयम्।

---

1. अतः परं 'काव्यन्तु प्रौढोक्तिसिद्धभिन्नं बोध्य'मिति क-ख-पुस्तकयोर्दृश्यमानोऽंशः पूर्वोक्तकाव्यपदस्यैव टिप्पनीति प्रतिभाति।

भट्टारकेति नोत्तमेन राजादौ प्रकृतिविपर्ययापत्तेर्वाच्यम्। एवं देशकालवयोजात्यादीनां वेषव्यवहारादिकमुचितमेवोपनिबन्धव्यम्।

(१३) अनङ्गस्य रसानुपकारकस्य वर्णनम्। यथा—कर्पूरमञ्जर्यां नायिकया स्वात्मना च कृतं वसन्तवर्णनमनादृत्य वन्दिवर्णितस्य राज्ञा प्रशंसनम्। ईदृशा इति। नायिकापादप्रहारादिना नायककोपादिवर्णनम्। उक्तं हि ध्वनिकृता—

अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम्।
औचित्योपनिबन्धस्तु रसस्योपनिषत् परा(A)॥ इति।

इदानीं क्वचिद्दोषा अप्येते इत्युच्यन्ते—

(८३) न दोषः स्वपदेनोक्तावपि संचारिणः क्वचित्।

यथा—

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः।

---

सम्बोधनमित्यवधेयम्। वाच्यमिति, इति वाच्यम् इति न वाच्यमित्युभयत्र अन्वयः। एवं देशेति, दिवि मानुषभाषा देशानुचिता। वसन्ते मेघ-कदम्बादिपुष्पवर्णनं कालानुचितम्, जरत्याः कामवर्णनं वयोऽनुचितम्, विप्रस्य शूद्रसेवावर्णनं जात्यनुचितम्, विधवायाः सिन्दूरादिवर्णनं वेशानुचितम्, [1]अदाक्षिणात्यानां मातुलकन्यापरिणयवर्णनं देश[1]*व्यवहारानुचितम्।

(१३) अनङ्गस्याभिधानं व्याचष्टे—अनङ्गस्येति। स्वस्येति शेषः। अनौचित्यादिति, प्रकृतिविपर्ययरूपानौचित्यादित्यर्थः। "तदाभासा अनौचित्यप्रवर्त्तिताः" इत्युक्तमनौचित्यन्तु नास्य विषय इत्यवधेयम्। 'उपनिषत्' मुलभूतवेदः।

सञ्चारिणः व्यभिचारिणः। क्वचिदिति, यत्र तदनुभावोऽन्यसाधारणस्तत्रेत्यर्थः।

---

(A) अस्य शेषार्द्धं तु ध्वन्यालोके तृतीयोद्द्योते १०-१४ कारिकावृत्तौ 'प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत् परा' इत्याकारेणोल्लिखितम्। उपनिषत् तत्त्वप्रतिपत्तिहेतुरित्यर्थः।

---

1. 'अदाक्षिणात्यानां वाणिज्यवर्णनं' क।

दृष्ट्वाऽग्रे वरमात्तसाध्वसरसा गौरी नवे संगमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः ॥ ३२९ ॥

अत्र औत्सुक्यशब्द इव तदनुभावो न तथा प्रतीतिकृत्। अत एव दूरादुत्सुकम् इत्यादौ(A)व्रीडा-प्रेमाद्यनुभावानां विवलितत्वादीनामिवोत्सुकत्वानुभावस्य सहसा [1]प्रसरणरूपस्य तथा प्रतिपत्तिकारित्वाभावादुत्सुकमिति कृतम्।

(८४) सञ्चार्यादेर्विरुद्धस्य बाध्यस्योक्तिर्गुणावहा ॥६३॥

बाध्यत्वेनोक्तिर्न परमदोषः, यावत् प्रकृतरसपरिपोषकृत्। यथा—

'क्वाकार्यं शशलक्ष्मणः क्व च कुलम्' इत्यादौ।

---

औत्सुक्येनेति। नवे सङ्गमे प्रथमदिनसमागमे हसता हरेण श्लिष्टा अत एव संरोहत्पुलका गौरी वः शिवाय अस्तु। कीदृशी? तद्गृहागमने प्रथमम् औत्सुक्येन कृतत्वरा, ततः सहभुवा सहजया लज्जया व्यावर्त्तमाना, ततश्च तैस्तैरित्यादि, ततश्च अग्रे वरं स्वामिनं दृष्ट्वा आत्तेत्यादि। अत्रेति, 'तदनुभावः' त्वराकरणरूपः। न तथेति न औत्सुक्यमात्रप्रतीतिकृदित्यर्थः, मातृगञ्जनादितोऽपि त्वराकरणसम्भवादिति भावः। औत्सुक्यानुभावान्तरमपि नौत्सुक्यमात्रप्रतीतिकृदित्यतोऽन्यत्रापि नानुभावमुखेन तत्प्रत्यायनमित्याह—अत एवेति। [2]सहसा प्रसरणरूपस्येति, हर्षेण सम्भ्रमेण च तत्सम्भवादित्यर्थः।

प्रतिकूलविभावादिग्रहं प्रतिप्रसूते—सञ्चार्यादेरिति, व्यभिचारिभावादेरित्यर्थः। आदिना अनुभावविभावपरिग्रहः। विरुद्धरसीयानामेषां बाध्यत्वेनोक्तिरित्यर्थः। तदाह—

---

(A) अत्र व्रीडाद्यनुभावानामिति आनन्दाश्रममुद्रणालयात् प्रकाशिते ६६संख्याङ्किते काव्यप्रकाशे धृतं पाठान्तरमेव समीचीनतया प्रतिभाति प्रेम्णो व्यभिचारित्वागणनात्। मुद्रितपाठस्य तु प्रेमपदं हर्षपरतया व्याख्याय कथञ्चित् सङ्गतिर्विधेया।

---

1 'सरणादि' इति पाठान्तरम्। 2. 'प्रसारण॰' क-ख।

अत्र वितर्कादिषु उद्गतेष्वपि चिन्तायामेव विश्रान्तिरिति प्रकृतरसपरिपोषः।

पाण्डु क्षामं वदनं हृदयं सरसं तवालसं च वपुः।
आवेदयति नितान्तं क्षेत्रियरोगं सखि! हृदन्तः॥ ३२६॥

इत्यादौ साधारणत्वं पाण्डुतादीनामिति न विरुद्धम्।

सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः।
किन्तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम्॥ ३२७॥

इत्यत्राऽऽद्यमर्धं बाध्यत्वेनैवोक्तम्। जीवितादपि अधिकमपाङ्गभङ्गस्यास्थिरत्वमिति प्रसिद्धभङ्गुरोपमानतयोपात्तं शान्तमेव

---

बाध्यत्वेनेति। वितर्कादिष्विति शान्तरसीयेष्विति शेषः, [1]उत्तरा प्रतिपत्तिः पूर्वां प्रतिपत्तिं बाधते इतिवत्[1]* विरुद्धस्य उत्तरभावस्यापूर्वभावबाधकत्वात्, भावसन्धौ तु द्वयोरवच्छेदकभेदेन स्थित्या तुल्यबलत्वात् न बाध्यबाधकभावः।

ननु विरुद्धरसीयविभावादेर्बाध्यत्वेनानुक्तावपि क्वचित् कथं न रसहतिरुपलभ्यते इत्यत आह—पाण्डुक्षाममिति। मालतीं प्रति लवङ्गिकाया उक्तिरियम्(A)। हे सखि तव पाण्डुक्षीणवदनादिकं कर्त्तृ तव हृदन्तः नितान्तं क्षेत्रियरोगम् आवेदयति। अस्मिन् क्षेत्रे शरीरे (B)अचिकित्स्यरोगः क्षेत्रियरोगः, क्षामं क्षीणम्, सरसं सस्वेदद्रवम्। 'साधारणत्वं' करुणविप्रलम्भयोः। न विरुद्धमिति, प्रतिकूलमात्रीयत्वाभावादित्यर्थः। ननु प्रतिकूलरसमात्रीयस्यापि विभावस्य क्वचिदनुभूयमाने प्रातिकूल्याभावे किं बीजमित्यत्राह—सत्यं मनोरमा इति। अत्र शान्तो रसस्तत्प्रतिकूलस्य शृङ्गारस्य रामाविभूतिमत्ताङ्गनापाङ्गभङ्ग्य(C) आलम्बनोद्दीपनविभावाः। समाधत्ते—अत्रेति, किन्त्वित्यनेन रामादीनामकिञ्चित्करत्वबोधनाद् बाध्यत्वप्रतीतेः। बाध्यत्वेनानुक्तस्यापि परार्द्धे मत्ताङ्गनादेरप्रातिकूल्ये बीजमाह—जीवितादपीति। प्रसिद्धभङ्गुरञ्च तत् उपमानञ्चेति समासः, तत्तया उपात्तमित्यर्थः। शान्तमेवेति उपमानेन उपमेयप्रकर्षस्यैव बोधनात् जीवितस्य अतिलोलत्वे लब्धे तेन शान्तरसपरिपोषणात्। एवञ्च विभावयोरुपमानोपमेयभावेन रसयोरपि तथात्वस्याग्रे व्यक्ती-

---

(A) पद्यमिदं मालतीमाधवप्रकरणे नास्माभिरुपलब्धम्।

(B) 'क्षेत्रियं क्षेत्रजतृणे परदाररतेऽपि च। अन्यदेहचिकित्स्याहेऽसाध्यरोगे च जायते॥' इति कोषः।

(C) एतेन अपाङ्गभङ्गेत्यत्र 'अपाङ्गभङ्गी'ति पाठः टीकाकृत्सम्मत इति प्रतिभाति।

---

1. 'पूर्वप्रतिपत्तिबाधिकाया उत्तरप्रतिपत्तेरिव' क।

पुष्णाति न पुनः श्रृङ्गारस्यात्र प्रतातिस्तदङ्गाप्रतिपत्तेः। (A)न तु विनेयोन्मुखीकरणमत्र परिहारः, शान्तश्रृङ्गारयोर्नैरन्तर्यस्याभावात्; नापि काव्यशोभाकरणम्, रसान्तरादनुप्रासमात्राद्वा तथाभावात्।

(८५) आश्रयैक्ये विरुद्धो यः स कार्यो भिन्नसंश्रयः।
रसान्तरेणान्तरितो नैरन्तर्येण यो रसः॥ ६४॥

वीरभयानकयोरेकाश्रयत्वेन विरोध इति प्रतिपक्षगतत्वेन भयानको निवेशयितव्यः। शान्तश्रृङ्गारयोस्तु नैरन्तर्येण विरोध इति रसान्तरमन्तरे कार्यम्। यथा—नागानन्दे शान्तस्य जीमूतवाहनस्य "अहो गीतम् अहो वादित्रम्" इत्यद्भुतमन्तर्निवेश्य

---

भविष्यत्त्वात् वक्ष्यमाणकारिकया 'साम्येनाथ विवक्षित' इत्यनया यत् प्रतिप्रसविष्यते, तद्विषयतया अदोषत्वमत्र दर्शितम्। न पुनरिति, अनुपमानतया अबाध्यत्वेन मुख्यत्वेन च न पुनरत्र प्रतीतिरित्यर्थः। तदङ्गेति अनुपमानत्वादिना तदङ्गविभावाद्यप्रतीतेरित्यर्थः। केचिदत्र श्लोके प्रतिकूलविभावग्रहस्यादोषत्वमेवाहुः, तद् दूषयति—न त्विति। 'विनेयाः' शिक्षणीयाः श्रृङ्गारलम्पटराजपुत्रादयः, श्रृङ्गारप्रतिपादनेन तेषामुन्मुखीकरणं न पुनरत्र दोषपरिहार इत्यर्थः। 'नैरन्तर्यम्' अव्यवधानम्, तस्य च स्वातन्त्र्येणाभावादिति भावः। अन्योक्तमन्यदपि दोषपरीहारबीजं दूषयति—नापीति। श्रृङ्गारप्रत्यायनेन काव्यशोभाकरणमपि न दोषपरिहार इत्यर्थः। तत्र हेतुमाह—रसान्तरादिति शान्तादित्यर्थः। ननु शोभनीयस्य रसस्य कथं शोभकत्वमित्यत आह—अनुप्रासमात्राद् वेति, रमा रामा रम्या इति अपाङ्गभङ्गीति च अनुप्रासः।

इदानीं कवीनुपदिशति—आश्रयैक्य इति। कयोश्चिद् रसयोरेकाश्रयत्वं नास्ति, कयोश्चित्तु एकस्मिन्नेवाश्रये नैरन्तर्यं नास्ति, तत्र आद्यस्योपनिबन्धप्रकारमाह—पूर्वार्द्धेन, अन्त्यस्य तु परार्द्धेन। तादृशविरुद्धौ तौ दर्शयति—वीरेति शान्तेति च। अद्भुतमन्तर्निवेश्येति, 'अहो'पदार्थं विस्मयम् अद्भुतस्थायिभावमन्तर्निवेश्येत्यर्थः, रसान्तरेणेत्यादौ सर्वत्र रसपदस्य स्थायिभावपरतायाः स्वयमेव वक्ष्यमाणत्वात्।

---

(A) विनेयानुन्मुखीकर्त्तुं काव्यशोभार्थमेव वा।
तद्विरुद्धरसस्पर्शस्तदङ्गानां न दुष्यति॥
इति ध्वन्यालोकस्य तृतीयोद्द्योतोक्तं निरस्यति—न त्विति।

मलयवतीं प्रति शृङ्गारो निबद्धः। न परं प्रबन्धे यावदेकस्मिन्नपि वाक्ये रसान्तरव्यवधिना विरोधो निवर्तते।

यथा—

भूरेणुदिग्धान् नवपारिजातमालारजोवासितबाहुमध्याः।
गाढं शिवाभिः परिरभ्यमाणान् सुराङ्गनाश्लिष्टभुजान्तरालाः ॥३२८
सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानान्।
संवीजिताश्चन्दनवारिसेकैः सुगन्धिभिः कल्पलतादुकूलैः ॥३२९॥
विमानपर्यङ्कतले निषण्णाः कुतूहलाविष्टतया तदानीम्।
निर्दिश्यमानाँल्ललनाङ्गुलीभिर्वीराः स्वदेहान् पतितानपश्यन् ॥६३०॥

अत्र बीभत्सशृङ्गारयोरन्तर्वीररसो निवेशितः।

(८६) स्मर्यमाणो विरुद्धोऽपि साम्येनाथ विवक्षितः।
अङ्गिन्यङ्गत्वमाप्तौ यौ तौ न दुष्टौ परस्परम् ॥६५॥

अयं स रशनोत्कर्षी पीनस्तनविमर्दनः।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥ ३३१ ॥

---

न परमिति 'प्रबन्धे' नाटके, 'एकस्मिन् वाक्ये' कुलके(A)। भूरेणिवति। युद्धे पतिता वीरा देवत्वं प्राप्य विमले पर्यङ्कतले निषण्णाः सन्तः ललनाङ्गुलीभिः निर्दिश्यमानान् स्वदेहान् भूमिपतितान् कुतूहलाविष्टतयाऽपश्यन् इत्यन्वयः। तत्र सर्वं प्रथमान्तं वीरा इत्यस्य सर्वं द्वितीयान्तं स्वदेहानित्यस्य विशेषणं बोध्यम्(B)। क्रव्यभुजां खगानां सशोणितैः पक्षैः उपवीज्यमानानित्यन्वयः। अत्रेति शूरार्थक-वीरशब्देन वीररसो लब्ध इत्यर्थः।

विरुद्धरसद्वयस्य प्रबन्धातिरिक्तेऽपि उपनिबन्धप्रकारमाह—**स्मर्यमाण** इति। पूर्वानुभूतस्यातीतस्य व्यञ्जनया ज्ञानमेवात्र स्मरणं विवक्षितम्। तथाच 'अयं स रसने'-त्यादौ शृङ्गारस्यात्यङ्गत्वे अपराङ्गत्वानुपपत्त्या न पूर्वापरविरोधः। न दुष्टावित्यस्य (C)व्यत्ययात् न दुष्ट इत्यर्थः(D)। अङ्गत्वमाप्तौ यौ विरुद्धौ इति व्यत्ययेनान्वयः।

---

(A) बालबोधिनीकारस्तु त्रिभिः श्लोकैर्वाक्यस्य समाप्तत्वादत्र विशेषकमाह।
(B) तत्रापि पर्यायेण विशेषणैर्देहद्वयस्यावस्थाभेदो विशेषेण चमत्कारकारीत्यनुसन्धेयम्।
(C) विभक्तिव्यत्ययादिति क-पुस्तकपाठन्तु वचनपरतया व्याख्याय सङ्गतिः कार्या।
(D) पूर्वार्द्धस्यान्वयोपपादनाभिप्रायेणेदम्।

एतद् भूरिश्रवसः समरभुवि पतितं हस्तमालोक्य तद्वधूरभिदधौ। अत्र पूर्वावस्थास्मरणं शृङ्गाराङ्गमपि करुणं परिपोषयति।

[1]दन्तक्षतानि करजैश्च विपाटितानि
प्रोद्भिन्नसान्द्रपुलके भवतः शरीरे।
दत्तानि रक्तमनसा मृगराजवध्वा
जातस्पृहैर्मुनिभिरप्यवलोकितानि॥ ३३२॥

अत्र कामुकस्य दन्तक्षतादीनि यथा चमत्कारकारीणि तथा जिनस्य। यथा वा परः शृङ्गारी तदवलोकनात् सस्पृहस्तद्वद् एतद्दृशो मुनय इति साम्यविवक्षा।

---

अयं स इति। अत्र शृङ्गारः यथोक्तस्मर्यमाणः करुणस्य विरुद्धः। पूर्वावस्थेति, तत्स्मरणात् शृङ्गारस्यापि यथोक्तस्मर्य्यमाणता बोध्या। साम्येन विवक्षितस्यादुष्टत्वमुदाहरति—दन्तक्षतानीति। प्रसूय स्वापत्यं जिघत्सौ सिंह्यां तत्परिवर्त्तनं स्वाङ्गं दत्तवते तन्नखदन्तक्षताङ्गाय जिनाय कस्यचिदुक्तिरियम्। रक्तमनसा रुधिरचित्तया मृगराजवध्वा दत्तानि दन्तक्षतानि करजैर्विपाटितानि च प्रोद्भिन्नसान्द्रपुलके भवतः शरीरे जातस्पृहैः मुनिभिरपि अवलोकितानीत्यन्वयः। पुलकश्च परपरित्राणहर्षात्, स्वशरीरव्ययेनापि परपरित्रायकत्वदर्शनात् अतादृशानां मुनीनां जातस्पृहता। मुनिभिरपीत्यपिकारात् क्लेशासहिष्णूनामन्येषां सुतरां जातस्पृहत्वम्। अत्र जिनगात्रस्थसिंहीदत्तदन्तनखक्षतदर्शिमुनिनिष्ठः शान्त उपमेयः, श्लेषवशाच्च अनुरक्तचित्तवधूदत्तकामुकगात्रस्थदन्तनखक्षतदर्शिकामुकान्तरनिष्ठः शृङ्गार उपमानं तयोर्विभावयोरुपमानोपमेयभावप्रदर्शनमुखेन तयोरपि तथात्वं दर्शयति—अत्रेति। दन्तनखक्षतादीनीत्यत्र अनुरक्तचित्तवधूदत्तानीत्यपि बोध्यम्। साम्यविवक्षेति। तत्साम्यविवक्षया तद्व्यङ्ग्ययोः शान्तशृङ्गारयोरपि तथात्वं बोध्यम्। न च किमर्थमत्र साम्यविवक्षया दोषोद्धारः शृङ्गारि-कामुक-शान्तमुनिरूपाश्रयभेदादेव विरोधाभावादिति वाच्यम्, एतदुभयज्ञातरि एतद्वक्तर्य्येव उभयस्यापि सम्भवात्(A)।

---

(A) अतः परं क-ख-पुस्तकयोर्दृश्यमानः 'परकीयरतिनिर्वेदज्ञातर्यपि तदुभयोत्पत्तिसम्भवात्' इत्यंशः अस्यैव व्याख्यानरूपा टिप्पनीति प्रतिभाति।

---

1. 'दन्तैः चतानि-' इति क्वचित् पाठः।

क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः
पादैः पातितयावकैरिव गलद्बाष्पाम्बुधौताननाः ।
भीता भर्तृकरावलम्बितकरास्त्वच्छत्रुनार्योऽधुना
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव ॥ ३३३ ॥

अत्र चाटुके राजविषया रतिः प्रतीयते । तत्र करुण इव शृङ्गारोऽप्यङ्गमिति तयोर्न विरोधः । यथा—

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥ ३३४ ॥

---

अङ्गिन्यङ्गत्वमाप्तयोर्विरुद्धयोरप्यदुष्टत्वमाह—क्रामन्त्य इति । राज्ञः स्तोतुरुक्तिरियम् । अधुना त्वच्छत्रुनार्यः पलायमानाः आश्रयवनाग्निरूपं दावाग्निं परितः भ्रमन्ति । तत्रोत्प्रेक्ष्यते—पुनरपीति, पुनरपि जायमानविवाहा इवेत्यर्थः । तदुत्प्रेक्षाघटकानि विशेषणान्याह क्रामन्त्य—इति । सदर्भाः स्थलीः क्षतकोमलाङ्गुलिगलद्रक्तैः पादैः क्रामन्त्यः, वनान्तस्य दर्भमयत्वात्, तत एव अङ्गुलीनां क्षतत्वम् , विवाहेऽपि वह्निप्रदक्षिणे आस्तृतदर्भमयप्रान्तस्यैव(A) परितः पादैः क्रमणम् , पादानां तत्रार्द्रालक्तकत्वेन तत्र उत्प्रेक्ष्यते—पातितेति, यावकम् अलक्तकम् अलक्तस्यार्द्रत्वेन पातः । तथा दुःखात् पतद्भिर्बाष्पैः धौताननाः, विवाहेऽपि धूमाद् बाष्पेण तथात्वम् । तथा वह्नितः शत्रुतश्च भीताः भर्तृकरधृतकराश्च दावाग्निभ्रमणे स्वतो गन्तुमक्षमत्वात् विवाहेऽपि नवोह्यमानत्वेन वह्निभ्रमणे भर्तृकरावलम्बितकरत्वम् । अत्रेति, 'चाटुकः' राज्ञः स्तोता । करुण इवेति, तासां शोच्यावस्थाज्ञानात् चाटुकस्य करुणः विवाहकालीनावस्थाज्ञानाच्च तस्यैव शृङ्गारः इत्यनयोर्नैरन्तर्येण विरुद्धयोरपि राजविषयभावाङ्गयोरदुष्टत्वम् । भावाङ्गता च शोच्यावस्थाया राजप्रयोज्यत्वेन उत्प्रेक्षिताया विवाहकालीनावस्थायाश्च तत्स्थानीयत्वेन तद्व्यङ्ग्ययोः शृङ्गारकरुणयोरपि तत एव तत्प्रयोज्यत्वात् । तत्रैव एकक्रियाङ्गयोर्विरुद्धक्रिययो(B)रपि अदुष्टत्वं दृष्टान्तयति—

---

(A) प्रान्तस्यैवेति परितःशब्दयोगेऽपि 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'ति न्यायात् क्रमणमित्यस्य कर्मणि षष्ठी ।

(B) प्रदीपे तु अत्र भावाभावयोरपि न विरोध इति उक्त्वा विधेययोरेव विरोधो दोषायेत्युक्तम् ।

इत्यत्र एहीति क्रीडन्ति गच्छेति क्रीडन्तीति क्रीडनापेक्षयोरागमन-गमनयोर्न विरोधः।

क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥३३८॥

इत्यत्र त्रिपुररिपुप्रभावातिशयस्य करुणोऽङ्गम्, [1]तस्य च शृङ्गारः, तथाऽपि न करुणे विश्रान्तिरिति तस्याङ्गतैव। अथवा प्राग् यथा

---

यथा एहीति। अत्रेति, क्रीडनं हि सुखविशेषोत्पादनम्, एहीत्याद्यनुमन्यमानं क्रियाद्वयञ्च तदुत्पादकत्वात् तदङ्गम्। नैरन्तर्येण विरुद्धयोरङ्गिनि साक्षात्-परम्पराभ्यामङ्गत्वमुदाहरति—**क्षिप्त** इति। त्रिपुरदाहे सः प्रसिद्धः शाम्भवः शराग्निः वः युष्माकं दुरितं दहतु। कीदृशः? आर्द्रापराधः (A)आसन्नापराधः कामीव। शराग्निकामिनोर्विशेषणान्याह—क्षिप्त इति, साश्रुनेत्रोत्पलाभिः त्रिपुरयुवतिभिः हस्तावलग्नः शराग्निः कामी च क्षिप्तः, भयात् क्रोधाच्च तासामश्रु; अंशुकस्य अन्तम् आददानोऽपि प्रसभं सहसा अभिहतः। केशेषु गृह्णन् अपास्तः, अत्र चुम्बनार्थं कामिनः केशग्रहणम्। चरणपतितस्य अग्नेः सम्भ्रमेण भयेन ईक्षणाभावः। **अत्रेति**, प्रभावातिशयोऽत्र वक्तुस्तद्विषयः प्रकृष्टो भावः। **करुण** इति, तासां शोच्यावस्था-ज्ञातरि वक्तरि करुणः, स च त्रिपुररिपुप्रयोज्यत्वात् तद्विषयभावप्रकर्षकत्वेन अङ्गम्। **तस्य चेति**, उपमानेन वक्तृनिष्ठशृङ्गारेण उपमेयकरुणप्रकर्षणात्। **विश्रान्तिरिति**। 'विश्रान्तिः' प्रकर्षणपर्याप्तिः, करुणप्रकर्षणद्वारा भावस्यापि प्रकर्षणात्; कामन्त्य इत्यादौ तु करुणस्थानीयत्वेनैव शृङ्गारस्योत्प्रेक्षितत्वात् शृङ्गारोऽपि साक्षादेवाङ्गम्। **तस्याङ्गतैवेति**, शृङ्गाराङ्गिनोऽपि करुणस्याङ्गतैवेत्यर्थः। इत्थं पदैः सकलपदार्थोपस्थितौ खलेकपोतन्यायेन विशेष्ये विशेषणम्, तत्रापि च विशेषणान्तरमिति रीत्या [2]शाब्दबोधवत् तद्—व्यङ्ग्यबोधेऽपीयं रीतिरित्युक्तम्। इदानीं[3]* विशिष्टस्य वैशिष्ट्य-

---

(A) आसन्नेति। आसन्नः अव्यवहितपूर्वमनुष्ठानात् कालकृतनैकट्याश्रय अपराधो यस्य तादृश इत्यर्थः।

---

1. 'तस्य तु' इति क्वचित् पाठः। 2. 'शाब्दबोधे व्यङ्ग्यबोधेऽप्येवं रीतिरित्यतो भावे करुणस्तत्र शृङ्गार

**कामुक आचरति स्म तथा शराग्निरिति श्रृङ्गारपोषितेन करुणेन मुख्य एवार्थ उपोद्बल्यते(A)। उक्तं हि—**

**गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।**
**प्रधानस्योपकारे हि तथा भूयसि वर्तते(B)॥ इति ।**

---

मिति रीत्या प्रथमं श्रृङ्गारविशिष्टकरुणबोधे करुणविशिष्टभावबोधः क्रमाज्जायत इति वक्तुमाह—अथवेति। **तथा शराग्निरिति,** अनेन श्रृङ्गारोपमितत्वं करुणस्य दर्शितम्। **मुख्य एवार्थ** इति त्रिपुररिपुविषयभाव एवेत्यर्थः। 'उपोद्बल्यते' प्रकृष्यते।

**गुण** इति। गुणः विशेषणं स्वविशेषणेन कृतोपकारः सन् प्रधानं पार्यन्तिकं विशेष्यं प्रतिपद्यते अन्वेति तादृशः सन्नेव हि प्रधानस्य भूयसि उपकारे वर्त्तते इत्यर्थः।

---

(A) अयमर्थः स्फुटीकृतः प्रदीपे। तथाहि—'अत्र त्रिपुररिपुप्रभावातिशयस्य करुणोऽङ्गम्, तस्य तु श्रृङ्गारः। नन्वेवं करुणस्य प्राधान्ये तत्रैव विश्रान्तेरुभयोरङ्गत्वासम्भवे कथमुदाहरणत्वमिति न वाच्यम्, श्रृङ्गारापेक्षया हि तस्य प्राधान्येऽपि न तत्रैव विश्रान्तिरिति तस्यापि प्रभावं प्रत्यङ्गतैव। यतो यथा पूर्वं कामुकः करालम्बनादिकमकार्षीत् तथा सम्प्रति शराग्निरित्युपमानतया श्रृङ्गारपरिपोषितेन करुणेन प्रभावातिशय एव प्रकर्षमानीयते। न चाङ्गाङ्गस्य कथमङ्गत्वमिति वाच्यम्, तदुपकृतस्याङ्गस्य उपकारविशेषाधायकतया तस्याप्युपकारकत्वात्'' इति। व्याख्यातमिदमुद्द्योते—'यथा पूर्वमिति, यासां पूर्वमीर्ष्याकलुषहृदयानां प्राणेश्वरास्तथा चाटुपरा बभूवुस्तासामिदानीं शम्भुशराग्निस्तथाविधां दशां करोतीति प्रतीत्येति भावः। अनेन च पुष्ट ईश्वरोत्साहस्तद्विषयरतिभावपोषक इति तात्पर्यम्। 'अङ्गाङ्गस्य' प्रभावातिशयाङ्गकरुणाङ्गस्य श्रृङ्गारस्य। 'अङ्गत्वम्' प्रभावातिशयाङ्गत्वम्'' इति।

(B) अत्र उद्द्योतकाराः—'आत्मसंस्कारः' अन्येन परिपुष्टिः। 'तथा' आत्मसंस्कारेण। दन्तक्षतानीत्यतस्तु अस्येयान् भेदः, तत्र प्रतीतयोः साम्यम्, अत्र कामीवेत्युक्तेः साम्येनैव प्रतीति'रिति व्याख्याय ''यद्यपि—

बहूनां समवेतानां रूपं यस्य भवेद् बहु।
स मन्तव्यो रसस्थायी शेषाः सञ्चारिणः स्थिताः॥
रसान्तरेष्वपि रसा भवन्ति व्यभिचारिणः।
तथा हि हासः श्रृङ्गारे रतिः शान्ते च दृश्यते॥

---

एकदा व्यञ्जनयाऽवगम्यते इत्युक्त्वा अवान्तरवाक्यार्थबोधक्रमेण शाब्दबोधे पर्चे व्यङ्ग्यार्थबोधस्यापि तद्रीतिकत्वेन' क। ग-पुस्तकेऽपि प्रायेण एवमेव।

**प्राक्प्रतिपादितस्य रसस्य रसान्तरेण न विरोधो नाप्यङ्गाङ्गि-भावो भवति इति रसशब्देनात्र स्थायिभाव उपलक्ष्यते ।**

इति काव्यप्रकाशे दोषदर्शनो नाम सप्तम उल्लासः ॥ ७ ॥

---

[1]ननु काव्याद्यधीनरसवतः सामाजिकस्य जायमानं रसद्वयं न विरुद्धं वीररसस्थायि-भावोत्साहभयायोरेव एकाश्रयत्वादिविरोधात्; तत् कथं विरुद्धौ रसावदुष्टा-वित्युक्तमित्यत आह[1]*—**प्रागिति । स्थायिभाव** इति । तथा च रसस्य स्वशब्द-वाच्यताऽपि स्थायिभावस्य शब्दवाच्यता इत्यप्युक्तमित्यपि मन्तव्यम् । व्याख्यातं चेदं तत्रैव ।

इति श्रीमहेश्वरन्यायालङ्कारभट्टाचार्यविरचिते काव्यप्रकाशादर्शे
सप्तमो दोषप्रतिबिम्बः ॥ ७ ॥

---

क्रोधो वीरे भयं शोके जुगुप्सा च भयानके ।
उत्साहविस्मयौ सर्वरसेषु व्यभिचारिणः ॥

इति भरतोक्तेः अयं स रसनेत्यादौ रत्यादेः स्थायित्वमपि नास्ति, तथाऽपि किञ्चित्प्राधान्य-विवक्षया स्थायित्वव्यपदेशः" इति वदन्ति ।

श्रीरामरत्न-फणिभूषण-लक्ष्मणाख्या
विद्वद्वराः सकलशास्त्रविदो जयन्ति ।
साहित्यशब्दनिगमे, मुखतस्तु तर्के
वेदान्तवाचि च कृपा अगमं यदीयाः ॥
तर्कवागीश इत्येतत् पदं यत्रैव सार्थकम् ।
अक्षपादावतारोक्तिर्यस्मिन् नात्युक्तिरिष्यते ॥
न्यायविद्यागुरोस्तस्य कामाख्यानाथशर्मणः ।
तेषां च चरणाम्भोजे ध्यात्वा वाचश्च निर्मलाः ॥
अमरेन्द्रेण विप्रेण धूलजोडानिवासिना ।
काव्यप्रकाशस्य कृता सप्तमावधि टिप्पनी ॥
बुद्धिमान्द्यादभिनवादेकपुत्रवियोगजात् ।
शोकाच्च स्खलनं मेऽभूद् यदि मृष्यन्तु तद्विदः ॥
समाप्तयाऽनया शाके वेदेषुवसुचन्द्रमे ।
उपक्रियेत चेत् कश्चित् तेन प्रीतोऽस्तु मे हरिः ॥

---

१. 'ननु रत्यादिः स्वज्ञाने(ज्ञान ?)सम्बन्धेन श्रोतृनिष्ठ एव रसः प्राक् प्रतिपादितः, तस्य च अन्यत् सर्वमेव (तिरो)दधदितुरक्तत्वात् तत्काले विरुद्धरसज्ञानमेव नास्ति, कथं रसयोर्विरोधोऽङ्गाङ्गिभावो वेत्यत आह' ग ।

# अष्टम उल्लासः

एवं दोषानुक्त्वा गुणालङ्कारविवेकमाह—

(८७) ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः॥ ६६॥

आत्मन एव हि यथा शौर्यादयो नाऽऽकारस्य तथा रसस्यैव माधुर्यादयो गुणा न वर्णानाम्। क्वचित्तु शौर्यादिसमुचितस्याकारमहत्त्वादेर्दर्शनात्, 'आकार एवास्य शूरः' इत्यादेर्व्यवहारादन्यत्राऽशूरे-

काव्यलक्षणोक्तक्रमेण(A) दोषनिरूपणानन्तरं गुणे निरूपणीये ये केचित्—'गुणालङ्कारयोरभेदः(B) किन्तु गड्डरिकाप्रवाहन्यायेन भ्रान्तपरम्परया(C) तद्भेदव्यवहार' इत्याहुस्तयोर्भेदप्रदर्शनेन तन्मतं निराकर्तुमाह—**एवमिति**। 'विवेकं' पृथग्भावम्।

तत्र गुणसामान्यलक्षणमाह—**ये रसस्येति**। अङ्गिनः पराङ्गतामनापन्नस्य रसस्य ये उत्कर्षहेतवो धर्मा वक्ष्यमाणा माधुर्यादयस्ते गुणाः स्युरित्यर्थः। ते चाचलस्थितयः रसे सत्यवश्यं सन्तस्तत्तद्रसत्वव्यापका इत्यर्थः। व्यञ्जकसत्त्वे गृह्यन्ते तद्रसत्वे तु न गृह्यन्त इति विशेषः। पराङ्गरसे त्वगृह्यमाणत्वान्माधुर्यादेस्तत्र गुणत्वं नास्तीत्यभिप्रायेणाङ्गिन इत्युक्तम्। गुणा वर्णधर्मा एवेति केषाञ्चिद् व्यवहारो भ्रान्तपरम्परयैवेति दर्शयति—**आत्मन एव हीति**। 'नाऽऽकारस्य' न शरीरस्य। दृष्टान्ते शौर्यादौ शरीरधर्मत्वेन भ्रान्तव्यवहारवद् दार्ष्टान्तानां गुणानामपि वर्णधर्मत्वेन भ्रान्तव्यवहार एवेति दर्शयति—**क्वचिदिति**। 'अस्य' आत्मनः। **शूर इतीति**। तस्य व्यवहरन्तीत्यग्रेऽन्वयः। इत्थं शूरत्वस्य व्यवहारं प्रति शरीरमहत्त्वस्यान्वयं

(A) यद्यपीह दोषगुणालङ्काराणां पारम्पर्यं कण्ठतः क्वापि नोपदर्शितम्, तथापि 'तददोषौ शब्दार्थौ सगुणावलङ्कृती पुनः क्वापी'ति काव्यलक्षणघटकानां तेषां क्रममादायैव पारम्पर्यव्यवहार इति मनसि कृत्वाह—काव्येति। तथा च 'तददोषावि'त्यनेन दोषस्य, 'सगुणावि'त्यनेन गुणस्य 'अनलङ्कृती' इत्यनेन चालङ्कारस्य निर्देशादेवमेवैषां पारम्पर्यमिति ज्ञेयम्।

(B) तन्मते तयोरभेदोक्तौ बीजमुभयोः काव्योपकारकत्वाविशेष इति ज्ञेयम्।

(C) भ्रान्तपरम्परयेति गड्डरिकाप्रवाहन्यायेनेत्यस्य विवरणमिव प्रतिभाति।

ऽपि विततत्वाकृतित्वमात्रेण 'शूर' इति, क्वापि शूरेऽपि मूर्तिलाघवमात्रेण 'अशूरः' इति (A)अविश्रान्तप्रतीतयो यथा व्यवहरन्ति ; तद्वन्मधुरादिव्यञ्जकसुकुमारादिवर्णानां [1]माधुर्यादिव्यवहारप्रवृत्तेरमधुरादिरसाङ्गानां वर्णानां सौकुमार्यादिमात्रेण माधुर्यादि, मधुरादिरसोपकरणानां तेषामसौकुमार्यादेरमाधुर्यादि रसपर्यन्तप्रतीतिवन्ध्या व्यवहरन्ति। अत एव माधुर्यादयो रसधर्माः समुचितैर्वर्णैर्व्यज्यन्ते, न तु वर्णमात्राश्रयाः। यथैषां व्यञ्जकत्वं तथोदाहरिष्यते।

---

दर्शयित्वा तद्व्यतिरेकेण तद्व्यतिरेकं दर्शयति—क्वापीति। 'अविश्रान्ता' यथार्थेऽतिष्ठन्ती 'प्रतीति'र्येषां तादृशाः। इत्थं दृष्टान्ते भ्रमबीजं दर्शयित्वा दार्ष्टान्ते गुणेऽपि तद् दर्शयति—(B)तथा मधुरादीति। 'अनङ्गरङ्गे'त्यादौ तद् बोध्यम्। माधुर्यादिव्यवहारप्रवृत्तेरिति, भ्रमेणेति बोध्यम्। अमधुरादीति, वीरादिरसीयकाव्यस्थानामित्यर्थः। माधुर्यादीति, व्यवहरन्तीत्यत्रान्वयः। अयं भ्रममूलको भ्रमो दर्शितः। इत्थं माधुर्यव्यवहारे वर्णमाधुर्यस्यान्वयं दर्शयित्वा तद्व्यतिरेकेण तद्व्यतिरेकं दर्शयति—मधुरादिरसोपकरणानामिति। रसपर्यन्तेति, गुणवैशिष्ट्येन रसविषयप्रतीतिशून्या इत्यर्थः। अत एवेति। व्यवहर्त्तॄणां (C)भ्रान्तत्वादेवेत्यर्थः। न तु वर्णमात्रेति। [2]मात्रपदार्थोऽविवक्षितः[2]*, वर्णाश्रयत्वमात्रस्यैव खण्डनीयत्वात्।

---

(A) विशेषणमिदं हेतुगर्भम् एवं दार्ष्टान्तेऽपि। तथा च आद्ये तादृशव्यवहारे अविश्रान्तप्रतीतित्वं द्वितीये रसपर्यन्तप्रतीतिवन्ध्यत्वं हेतुः।

(B) अन्यत्र क्वाप्यदर्शनात् प्रतीकमात्रस्वरसागतस्तथेति पाठो न मूले सन्निवेशितः।

(C) भ्रान्तत्वादेवेति। यद्यप्यात्मवृत्तिनः शौर्यस्य देहवृत्तित्ववद् गुणानां वर्णवृत्तितायां भ्रमो न प्रमाणीकृतस्तेषां रसवृत्तित्वस्येदानीमप्यनिरूपितत्वात्तथापि तेषां रसवृत्तित्वस्यैकान्तमपह्नोतुमशक्यत्वात्तन्मात्रवृत्तित्व एव लाघवमनुसन्धाय दृष्टान्त इव दार्ष्टान्तेऽपि भ्रमः समाधेयः। अत्र च प्रदीपकाराः—'ननु शौर्यादेरात्मवृत्तित्ववन्मधुरत्वादीनां रसवृत्तित्वव्यवस्थितावेवं स्यात् सैव त्वसिद्धा विनिगमकाभावादिति, चेन्नैवम्, भवत्येव विनिगमकाभावो यदि त्वया वर्णमात्राश्रया गुणाः स्वीकर्त्तुं शक्यन्ते न त्वेवम्, अविशेषेण रचनायामपि तदभ्युपगमात्। तथा च रसमात्रवृत्तित्वे लाघवं वर्णरचनोभयवृत्तित्वे तु गौरवम्' इत्याहुः।

---

1. 'मधुरादी'ति' पाठः क्वचित्। 2. 'अत्र मात्रपदं स्वरूपकथनमात्रम्' क, 'अत्र मात्रपदं स्वरूपकथनमात्रपरम्' ख, 'अत्र मात्रपदं स्वरूपमात्रपरम्' घ।

(८८) उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् ।
हारादिवदलंकारास्तेऽनुप्रासोपमादयः ॥ ६७ ॥

ये [1]वाच्यवाचकाङ्गातिशयमुखेन मुख्यरसं सम्भविनमुपकुर्वन्ति, ते कण्ठाद्यङ्गानामुत्कर्षाधानद्वारेण शरीरिणोऽपि उपकारका हारादय इवालङ्काराः। यत्र तु नास्ति रसस्तत्रोक्तिवैचित्र्यमात्रपर्यवसायिनः ; क्वचित्तु सन्तमपि नोपकुर्वन्ति। यथाक्रममुदाहरणानि—

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः।
अलमलमालि मृणालैरिति वदति दिवानिशं बाला ॥ ३३६ ॥

इत्यादौ [(A)]वाचकमुखेन।

मनोरागस्तीव्रं विषमिव विसर्पत्यविरतं
प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो
न मां त्रातुं तातः प्रभवति न चाम्बा न भवती ॥ ३३७ ॥

---

इत्थं गुणसामान्यस्य रसवृत्तित्वमुक्त्वा शब्दतदर्थवृत्तीनामलङ्काराणां तद्भिन्नत्वं वक्तुमाह—उपकुर्वन्तीति। 'सन्तं' स्फुटस्थितम्, सर्वथा नीरसकाव्यत्वाभावात्। व्याचष्टे—ये इति। अङ्गद्वारेणेत्यस्य विवरणम् वाच्यवाचकाङ्गेति। 'मुख्यं' सर्वापेक्षयाऽधिकास्वाद्यम्। सम्भविनमिति, सन्तमित्यस्य विवरणम्, स्फुटसम्भविनमित्यर्थः। क्वचित् स्फुटतदसम्भवे कस्योपकारका अलङ्कारा इत्यत्राह—यत्र त्विति। स्फुटो नास्तीत्यर्थः। 'जातुचिदि'त्यनेन क्वचिदुपकारकत्वाभाव उक्तः। तमाह—क्वचित्त्विति। तत्र प्रथमं सतस्तस्योपकारकत्वं शब्दतदर्थालङ्कारयोः श्लोकद्वयेन दर्शयति—अपसारयेति, मनोराग इति च। घनसारं कर्पूरम्। वाचकमुखेनेति, अनुप्रासस्य शब्दालङ्कारत्वेन तदुपकृतशब्देनार्थोपस्थापनद्वारा रसोपकारात्। 'मनोराग' इति, लवङ्गिकां प्रति मालत्या उक्तिरियम्। प्रमाथी माधवविषयो

---

(A) वाचकमुखेनेत्यस्य वाचकातिशयमुखेनेत्यर्थः, एवं 'वाच्यमुखेनेत्यत्रापि वाच्यातिशयमुखेनेत्यर्थः।

---

1. 'वाचकवाच्यलक्षणाङ्गा-' इति क्वचित् पाठः।

इत्यादौ वाच्यमुखेनालङ्कारौ रसमुपकुरुतः।

चित्ते विहट्टदि ण (A)टुट्टदि सा गुणेसुं
सेज्जासु लोट्टदि विसट्टदि दिम्मुहेसुं।
बोलम्मि वट्टदि पवट्टदि कव्वबन्धे
झाणेण टुट्टदि चिरं तरुणी तरट्टी ॥ ३३८ ॥

इत्यादौ वाचकमेव।

मित्रे क्वापि गते सरोरुहवने बद्धानने ताम्यति
क्रन्दत्सु भ्रमरेषु वीक्ष्य दयितासन्नं पुरः सारसम्।

---

मनोरागोऽविरतं विसर्पति, तीव्रं विषमिव, तथा निर्धूमो विधुतो वातचलितः पावक इव ज्वलति, गरीयान् ज्वर इव प्रत्यङ्गं हिनस्तीति विभिन्नधर्मा मालोपमा। इत इतस्त्रातुं न तातादिकः प्रभवति इत्यर्थः। इत इत इति विषादे वीप्सा। विधुतश्चन्द्रात् पावको ज्वलतीवेत्युत्प्रेक्षा वा। **अलङ्काराविति**। श्लोकद्वये शब्दार्थालङ्काराविल्यर्थः। क्वचित्तु सन्तमपि नोपकुर्वन्तीत्यत्र उदाहरति—**चित्त** इति, **मित्रे क्वापि** इति च। शब्दार्थालङ्कारभेदेनोदाहरणद्वयम्।

चित्ते विघटते न खिद्यति सा गुणेषु
शय्यासु लुठति विसर्पति दिङ्मुखेषु।
वाक्ये वर्त्तते प्रवर्त्तते काव्यबन्धे
ध्यानेन त्रुट्यति चिरं तरुणी प्रगल्भा ॥ इति संस्कृतम्।

गुणेषु न खिद्यति तत्र गुणभावनायां खेदं न भजतीत्यर्थः। दिङ्मुखेषु विसर्पणमुद्भ्रमात्। वाक्ये वर्त्तते उपदेशं गृह्णाति। अत एवास्मदुपदिष्टे त्वद्विषये काव्यबन्धे प्रवर्त्तते। त्रुट्यति क्षीणा भवति। तरट्टी प्रगल्भायां देशी(B)। **वाचकमेवेति**। टवर्गस्य शृङ्गारप्रतिकूलवर्णत्वेन तदनुप्रासस्यापि (C)तथात्वाद् वाचकमात्रोपकारकत्वम्। **मित्र इति**। सन्ध्याकाले चक्रवाकक्रियावर्णनमिदम्। वियोगिना उपस्थितवियोगेन चक्राह्वेण मृणाललता नास्वादिता नोज्झिता, केवलं निर्गच्छतो

---

(A) 'टुट्टदी'त्यस्य 'त्रुट्यती'ति संस्कृतम्। टीकायां खिद्यतीति संस्कृतदर्शनाच्चाद्योऽपि प्राकृते 'खिद्दी'ति पाठो नोपात्तः, प्रकृते दर्शयितव्यस्य शृङ्गाररसाननुगुण्यस्य टवर्गेणैवाविष्करिष्यमाणत्वात्। तथा च प्रदीपे—'अत्रानुप्रासेन शब्दमात्रमलङ्क्रियते न तु सन्नपि शृङ्गारः, टवर्गस्य तत्प्रतिकूलत्वात्' इति। '(गुणेषु) न त्रुट्यति' गुणविषये हीना न भवति, 'वाक्ये वर्त्तते' अविरलं प्रलपतीत्युद्द्योतः।

(B) देशीति प्रगल्भार्थे तरट्टीशब्दो देशभाषायां प्रसिद्धः।

(C) तथात्वादिति शृङ्गाररसप्रतिकूलत्वात्, अत एव च वाचकं शब्दमेवोपकरोति न रसमित्यर्थः।

**चक्राह्वेण वियोगिना विषलता नास्वादिता नोज्झिता**
**कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः ॥ ३३९ ॥**

**इत्यादौ वाच्यमेव न तु रसम्। अत्र विषलता न जीवं रोद्धुं(A) क्षमेति प्रकृताननुगुणोपमा।**

---

जीवस्य अर्गलेव वक्त्रे निहिता। कदा एवं कृतमित्यत आह—मित्र इति। उपस्थितवियोगस्य दुःखोद्दीप्तिस्त्रिधा भवति—इष्टवियोगिदर्शनात्, तद्बन्धूनां दर्शनात्, इष्टावियोगिदर्शनाच्चेति क्रमशस्तेन तेन चक्रवाकस्य दुःखोद्दीप्तिमाह—मित्र इति। मित्रे सूर्य एव सरोरुहवनस्य मित्रे बन्धौ क्वापि अलभ्यवार्त्तादेशे गते सति तद्बन्धौ सरोरुहवने तद्वियोगाद् बद्धानने ताम्यति सति। अनेन इष्टवियोगिदर्शनमुक्तम्। आननमत्र पुष्पमेव, तथा तद्दर्शनाच्च तद्बन्धुषु भ्रमरेषु क्रन्दत्सु सत्सु। गुञ्जने क्रन्दत्वाध्यासादिदमुक्तम्। अनेनेष्टवियोगिबन्धुक्रन्दनमुक्तम्। इष्टावियोगिदर्शनमाह—वीक्ष्य दयितेति। **न तु रस**मिति। वियोगिनो जीवनप्रयत्नानौचित्येन तदुत्प्रेक्षाया (B)विप्रलम्भानुपकारकत्वादिति भावः। नन्वत्र मास्तु जीवार्गलानिधानोत्प्रेक्षा यया विप्रलम्भानुपकारः, किन्तु पुरान्निर्गच्छतो जीवस्य प्राणिनो रोधिका या अर्गला द्वारपिधानकाष्ठं सेव विषलता केवलं वक्त्रे निहितेत्येवमुपमैवेयमित्यत आह—**अत्रे**ति। यदि जीवरोधकत्वेन साधर्म्येणेयमुपमा स्यात्तदा उपमेयायां विषलतायां तन्नास्तीत्याह—**न क्षमे**ति, न समर्थेत्यर्थः। प्राणिरोधकत्वस्य, श्लेषाद् जीवनरोधकत्वस्य वा तत्राभावात्। अत्र प्रकृतं जीवरोधकत्वमननुगुणमसम्पादकं यस्यास्तादृशीयमुपमेत्यतो नात्रोपमेत्यर्थः। यदि च दीर्घत्वादिसाधर्म्येण इयमुपमा स्यात्तदा जीवस्येत्यादिवैयर्थ्यमेव स्यादिति स्फुटत्वान्न दर्शितम्। चक्रवर्त्ती तु—अत्र विषं लतेवेति या उपमा सा प्रकृतस्य जीवरोधकत्वस्याननुगुणा अननुकूला लतोपमया कोमलत्वप्राप्त्या जीवनरोधनासामर्थ्यादिति व्याचष्टे; तन्न, तत्कथनस्य प्रकृतानुपयुक्तत्वात्, विषमेव लतेति रूपकसम्भवे उपमाया एवाभावाच्च। किञ्च, उपमायां न ह्युपमानगतं सर्वमेव धर्ममुपमेये प्रतीयते येन कोमलत्वं लभ्येत, चन्द्र इव मुखमित्यादौ कलङ्कित्वादेरपि मुखे प्रतीत्यापत्तेः(C)।

---

(A) रोद्धुम् अवस्थापयितुम्।

(B) विप्रलम्भानुपकारकत्वादिति विप्रलम्भाभासानुपकारकत्वादित्यर्थः। प्रकृते रतेस्तिर्यग्गतत्वेनाभासस्यैवौचित्यात्। यद्वा विप्रलम्भपदमत्र वियोगपरं न तु रसपरम्।

(C) अत्र रसाननुकूलत्वं सङ्गमयति प्रदीपकारः—'अत्रोपमाऽर्थालङ्कारः। न चासौ

**एष एव च गुणालङ्कारप्रविभागः। एवं च "समवायवृत्त्या शौर्यादयः संयोगवृत्त्या तु हारादय इत्यस्तु गुणालङ्काराणां भेदः, ओजःप्रभृतीनामनुप्रासोपमादीनां चोभयेषामपि समवायवृत्त्या स्थितिरिति गड्डरिकाप्रवाहेणैवैषां भेदः" इत्यभिधानमसत्।**

---

इत्थं गुणा रसनिष्ठा अलङ्कारास्तु शब्दतदर्थनिष्ठाः स्वाश्रयप्रकर्षणद्वारा रसोपकारका इति व्यवस्थापिते अयमेव गुणालङ्कारयोर्भेद इत्याह—**एष एव चेति**। 'प्रविभागः' भेदः(A)।

केचित्तु शौर्यहारयोर्गुणालङ्कारयोर्दृष्टान्तयोः (B)स्वाश्रयसम्बन्धयोर्भेदाद् भेद उचित एव, काव्यस्थगुणालङ्कारयोस्तु (C)स्वाश्रयस्य तन्निष्ठसम्बन्धस्य च भेदाभावाद् न भेदः किन्तु भ्रान्तपरम्परयैव एतयोर्भेदो व्यवह्रियते इत्याहुस्तेषां तदभिधानमसदित्याह—

---

प्रकृतस्य शृङ्गारस्योपकारिका। विप्रलम्भे हि जीवनिर्गमोऽपि वर्ण्यते तदुत्कर्षाधायकत्वादिति तन्निरोधहेतूपादानमनुचितं प्रत्युत स्नेहाभावे पर्यवस्यति। तदेतदुक्तम् 'अत्र बिसलता जीवं निरोद्धुमशक्तेति प्रकृताननुगुणोपमा' इति। अशक्तत्वञ्चानुचितत्वमिति प्राञ्चः। वस्तुतस्तु तदन्यथा व्याख्येयम्। बिसलता जीवं रोद्धुम् अशक्तेत्युपमा प्रकृताननुगुणा प्रकृते विषये अनुगुण-रहिता, उपमाया अनुगुणं यत् साहश्यं तच्छून्या। तस्मादत्रोपमा नालङ्कारः किन्तूत्प्रेक्षा। न च तस्यामपि तद्दोषतादवस्थ्यम्, सम्भावितेनापि साहश्येन तत्प्रवृत्तेः, न तूपमावद्वस्तुसतैव। जीवरोधकत्वरूपसाहश्यमपि विषये ह्युत्प्रेक्षणीयकोटावेवान्तर्भूतं यथोच्यते रोधकमिव निहितमिति। तर्हि कथमिदं प्रकृतोदाहरणमिति चेत् उत्प्रेक्षातो रसातिशयाप्रतीतेः, प्रत्युत ताहशोत्प्रेक्षाया उपमोक्तन्यायेनापकर्षपर्यवसानादि'ति।

(A) तथा चानेन प्रघट्टकेन गुणा रसधर्मा रसानामुपकारकास्तेषु नियतस्थितयश्च। अल-ङ्काराः पुनः शब्दार्थभेदेन द्विविधाः स्वाश्रययोः शब्दतदर्थयोरुत्कर्षणद्वारा रसोपकारकास्तेष्वनियत-स्थितयश्चेति तयोर्भेदप्रदर्शनमुखेन स्वरूपलक्षणं प्रदर्शितं वेदितव्यम्।

(B) स्वाश्रयः शरीरात्मानौ, सम्बन्धः संयोगसमवायोभयरूपः तयोः।

(C) स्वाश्रयस्येति, वर्णस्येति टीकाकृदभिप्रायः, तच्च साक्षात्परम्पराभ्याम्; प्रकाशे त्वाश्रयस्य नामापि नास्ति। तन्निष्ठसम्बन्धस्येति समवायस्येत्यर्थः। तथा च काव्यस्थगुणालङ्कारयोरेक एवाश्रयो वर्ण एक एव च सम्बन्धः समवाय इति नास्ति तयोर्भेद इत्यर्थः। अत्र प्रदीपकाराः— 'लौकिकयोर्गुणालङ्कारयोः शौर्यादिहारायोः समवेतत्वसंयोगित्वाभ्यां भेदः सम्भवति; अलौकिकयो-र्माधुर्याद्यनुप्रासोपमाद्योरुभयोरपि समवेतत्वादनुपपन्नो भेदः, तस्मात्तयोर्भेदाभिधानं गड्डलिकाप्रवाह-न्यायेन। तथा हि—गड्डलिका मेषी काचिदेका केनचिद्धेतुना पुरो गच्छति, इतरास्तु विनैव

यदप्युक्तम् "काव्यशोभायाः कर्त्तारो धर्मा गुणास्तदतिशयहेतवस्त्वलङ्काराः" इति तदपि न युक्तम्, यतः किं समस्तैर्गुणैः काव्यव्यवहारः, उत कतिपयैः। यदि समस्तैः, तत्कथमसमस्तगुणा गौडी पाञ्चाली च रीतिः काव्यस्यात्मा। अथ कतिपयैः, ततः—

'अद्रावत्र प्रज्वलत्यग्निरुच्चैः प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः'

इत्यादावोजःप्रभृतिषु गुणेषु सत्सु काव्यव्यवहारापत्तिः।

स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनी।
अस्या रदच्छदरसो न्यक्करोतितरां सुधाम् ॥३४०॥

---

एवं चेति। समवायवृत्त्येति(A), समवायोऽत्र स्वरूपसम्बन्ध(B) एव। स्थितिर्वर्णेष्वेव। गड्डरिका अज्ञातप्रवाहागमनस्थानो धारावाहिप्रवृत्तो नदीविशेषः। मेषयूथैरनुगम्यमाना मेष्येव गड्डरिकेति केचित्। तन्न्यायेन भ्रान्तपरम्परया एव भेदव्यवहार इत्यभिधानमसदित्यर्थः।

गुणालङ्कारयोर्लक्षणभेदाद्भेद इति कैश्चिदुक्तं (C) दूषयितुमाह—यदप्युक्तमिति। काव्यशोभाया इत्यत्र काव्यव्यवहारप्रयोजिकाया इति शेषः, अन्यथा, वितर्क्य काव्यव्यवहारस्यैव दूषयिष्यमाणत्वेन तदसङ्गत्यापत्तेः। गुणाश्च तन्मते श्लेषप्रसादादिदशगुणा दण्डिनोक्ता बोध्याः। काव्यस्यात्मेति, रीतिरात्मा काव्यस्येति वामनोक्तत्वात्। ओजःप्रभृतिष्विति। ओजोऽत्र परुषवर्णविन्यासः। प्रभृतिपदाच्च अर्थव्यक्तिरूपप्रसादगुणपरिग्रहः। बहुत्वमत्राविवक्षितम्। काव्यव्यवहारापत्तिरिति। न चात्रेष्टापत्तिरिति वाच्यम्, सर्वथा नीरसत्वेन काव्यत्वानङ्गीकारात् 'गोरपत्यं बलीवर्द' इतिवत् स्वरूपकथनमात्रत्वेन वह्निधूमविषयभावस्याप्यभावा-

---

निमित्तविचारं तामनुगच्छन्ति। तथा केनाप्यालङ्कारिकेण गुणालङ्कारौ केनचिदभिप्रायेण भिन्नतयोक्तौ, इतरे तु हेतुविचारं विनैव तदनुसारेण तद्भेदं वदन्तीति तदसम्यग्वेदित्वम्' इति।

(A) समवायवृत्त्येति। द्वितीय'समवाय'पदाभिप्रायेण, अन्यथा समवायोऽत्र स्वरूपसम्बन्ध एवेत्यग्रिमग्रन्थानुपपत्तेः, शौर्यस्य समवायसम्बन्धेन वृत्तिताया नैयायिकैरप्यभ्युपगमात्।

(B) स्वरूपसम्बन्ध इति। एतच्च, काव्यस्य शब्दार्थोभयरूपत्वेन अभावादिसाधारणेऽर्थकाव्ये समवायेनानुप्रासादीनामवस्थितिर्दुरुपपन्नेत्यनुसन्धाय नैयायिकसमयानुसारेणोक्तम्। अयुतसिद्धयोः सम्बन्धः समवाय इति मते तु चोद्यमेव नावतरतीति बोध्यम्।

(C) कैश्चिदिति वामनादिभिः।

इत्यादौ विशेषोक्तिव्यतिरेकौ गुणनिरपेक्षौ काव्यव्यवहारस्य प्रवर्त्तकौ।

इदानीं गुणानां [1]भेदानाह—

(८९) माधुर्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश।

एषां क्रमेण लक्षणमाह—

(९०) आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम्॥ ६८॥

शृङ्गारे अर्थात् सम्भोगे, द्रुतिर्गलितत्वमिव।

---

दिति भावः। इत्थमतिव्याप्तिमुक्त्वा अव्याप्तिमप्याह—स्वर्गेति। वरवर्णिनी पुंसोऽनेनैव देहेन स्वर्गप्राप्तिः प्राप्यमाणः स्वर्गः, अस्या रदच्छदस्य ओष्ठस्य रसः सुधां न्यक्करोतितरामित्यर्थः। 'विशेषोक्तिः' एतद्देहरूपकारणसत्त्वेऽपि स्वर्गप्राप्त्यभावरूपस्य फलस्याभावः(A)। कारणत्वफलत्वे चात्र योगक्षेमसाधारणे बोध्ये। व्यतिरेकश्च उपमानीभूतसुधापेक्षया रदच्छदरसस्याधिक्यरूपः। गुणनिरपेक्षाविति। तदुक्तैकगुणस्याप्यत्राभावादिति भावः। 'भेदान्' प्रभेदान्।

आह्लादकत्वमिति, आह्लादजनकतावच्छेदको धर्म इत्यर्थः। (B)शृङ्गारादीनां [2]रत्यादिस्थायिभावो हि स्वस्य रसरूपतापरिणामकत्वेन रसरूपाह्लादजनकः। गुर्जर्यादि[3]रागेष्विव तेषु रत्यादिषु[3]* माधुर्यादिरूपो धर्मविशेषस्तज्जनकतावच्छेदकः। [4]'परिणामवशेन च स्थायिभावाभिन्न एव रस इति स्थायिभाववृत्ति माधुर्यं रसवृत्त्येवेति गुणानां रसवृत्तित्वं यदुक्तं तन्नानुपपन्नम्'*। द्रुतिकारणमिति, तेन धर्मेण मनसो गलितत्वप्राया द्रुतिर्जन्यत इत्यर्थः। अर्थात् सम्भोगे इति, विप्रलम्भादावत्यन्तद्रुतिहेतुत्वस्य वक्ष्यमाणत्वाद् द्रुतिसामान्यकारणत्वं सम्भोग एवेत्यर्थः। (C)केचित्तु

---

(A) एतच्चालङ्कारसङ्गमनं स्वाभिमतालङ्कारलक्षणमादायेति बोध्यम्। वामनमते त्वन्यथैवालङ्कारादियोजनामाहुः प्रदीपकाराः—'अत्र पूर्वार्द्धे विशेषोक्तिः 'एकगुणहानिकल्पनया शेषगुणदार्ढ्यकल्पना विशेषोक्तिरि'ति वामनलक्षणात्' इति। सङ्गमयति च भट्टवामनः—'प्रकृते च दिव्यदेहरूपैकगुणहानिकल्पनया सुखदायकत्वादिरूपशेषगुणदार्ढ्यकल्पनायाः सत्त्वाद् विशेषोक्तिः' इति।

(B) ननु द्रुतेराह्लादाभिन्नत्वेन कुतो माधुर्यस्य तत्कारणत्वमित्याह—शृङ्गारादीनामिति। इत्थञ्चोक्तरीत्योपपन्नायामाह्लादजनकतायाम्—'यत्तु केनचिदुक्तं माधुर्यं द्रुतिकारणमिति, तन्न; द्रवीभावस्यास्वादस्वरूपाह्लादाभिन्नत्वेन तत्कार्यत्वाभावादि'ति (सा० ८।३) दर्पणकृतामाक्षेपोऽपि निरस्तो वेदितव्यः।

(C) 'केचिदिति पूजायां बहुवचनम्, भामह इत्यर्थः' इति बालबोधिन्याम्, 'प्रदीपे तु भास्कर इति' इति तत्पादटीकायाञ्च।

---

1. 'भेदम्' इति क्वचित् पाठः। 2. 'रत्यादी'ति नास्ति ग। 3. 'राग-निष्ठ इव तन्निष्ठो' ग। 4. 'तस्य च रतिप्रवृत्तित्वेनैव, रत्या एव रसरूपत्वेन परिणामस्योक्तत्वात्' ख।

श्रव्यत्वं पुनरोजःप्रसादयोरपि ।

(९१) करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम्(A) ।

अत्यन्तद्रुतिहेतुत्वात् ।

(९२) दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थिति ॥ ६९ ॥

चित्तस्य विस्ताररूपदीप्तत्वजनकमोजः ।

(९३) बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण च ।

वीराद्बीभत्से, ततो रौद्रे सातिशयमोजः ।

(९४) शुष्केन्धनाग्निवत् स्वच्छजलवत् सहसैव यः ॥ ७० ॥
व्याप्नोत्यन्यत् प्रसादोऽसौ सर्वत्र विहितस्थितिः ।

अन्यदिति, व्याप्यम्, इह चित्तम् । सर्वत्रेति, सर्वेषु रसेषु सर्वासु रचनासु च ।

---

काव्यस्य सुश्रवत्वमेव माधुर्यलक्षणमाहुस्तस्याव्यावर्त्तकत्वमाह—श्रव्यत्वं पुनरिति । ओजःप्रसादयोः सतोरपि काव्ये श्रव्यत्वमित्यर्थः ।

करुण इति । माधुर्यातिशयान्वितत्वञ्च फलातिशयादित्याह—अत्यन्तेति ।

ओजोगुणलक्षणमाह—दीप्त्यात्मेति । दीप्तिरूपाया आत्मविस्तृतेर्हेतुरित्यर्थः । दीप्तिः कटुवर्णश्रवणजन्यदुःखसम्भिन्नं सुखम् । आत्मा चात्र मनः तादृशसुखमेव च तस्य विस्तारः सैव च दीप्तिरित्याह— चित्तस्य विस्तारेति ।

सातिशयमिति, दीप्तिरूपफलातिशयात् ।

प्रसादगुणलक्षणमाह—शुष्केन्धनेति । अन्यदिति ग्राह्यादन्यद् ग्राहकं चित्तं यो गुणः सहसैव व्याप्नोति स्वाश्रयव्यञ्जकार्थेन सह स्वविषयकं करोतीत्यर्थः । (B)स्वच्छे आलवालशून्यदेशे जलवदित्यर्थः । सर्वत्रेत्यत्र सप्तम्या आश्रयत्वं व्यञ्जकत्वं

---

(A) अत्र प्रदीपः—'सम्भोगात् करुणे तस्माद् विप्रलम्भे ततोऽपि शान्तेऽतिशयितं माधुर्यम्, हास्यादेरप्यपगमेनात्यन्तद्रुतिहेतुत्वात् । इयांस्तु विशेषः सम्भोगविप्रलम्भयोस्तन्निःसपत्नम्, शान्ते तु जुगुप्साद्यन्वयादोजोलेशानुविद्धम्' इति । 'निःसपत्नमिति, स्वकार्यद्रुतिविरोधिदीप्तिजनकतया प्रतिपक्षभूतं यदोजस्तद्रहितमित्यर्थः । जुगुप्सेति । तस्या बीभत्सस्थायित्वाद्बीभत्से चौजसो वक्ष्यमाणत्वात्तल्लेशसंकीर्णम्' इति तत्प्रभा च ।

(B) आलवालपदेन समतलो देशो लक्ष्यते । तथा च समतले देशे जलं यथा क्षिप्रं प्रसरति

(६५) गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता ॥ ७१ ॥

गुणवृत्त्या उपचारेण। तेषां गुणानाम्—आकारे शौर्यस्येव।

कुतस्त्रय एव न तु दश इत्याह—

(६६) केचिदन्तर्भवन्त्येषु दोषत्यागात् परे श्रिताः(A)।

अन्ये भजन्ति दोषत्वं कुत्रचिन्न ततो दश ॥ ७२ ॥

---

चार्थ इत्याह—सर्वेष्विति। सर्वरसाश्रयः सर्वरचनाव्यङ्ग्यश्चेत्यर्थः, यया रचनया शीघ्राऽर्थप्रतीतिः सैव रचना तद्व्यञ्जिका सर्व एव च रसस्तदाश्रय इत्यर्थः। रचनाव्यक्तिविशेषस्याव्यञ्जकत्वेऽपि सर्वजातीयरचनायास्तद्व्यञ्जकत्वात् सर्वरचनानां व्यञ्जकत्वमत्तम्।

नन्वेवं गुणानां रसवृत्तित्वे सिद्धान्तिते सगुणाविति(B) काव्यलक्षणव्याघात इत्यत आह—गुणवृत्त्येति, परम्परावृत्त्येत्यर्थः। उपचारेणेति, परम्परावृत्तौ साक्षात्त्वोपचारेणेत्यर्थः।

न तु दशेति, प्राचीनोक्ता दश गुणा नेत्यर्थः।

कुत्रचित् स्थले दोषत्वं भजन्तीत्यन्वयः। दश गुणाश्च—

श्लेषः प्रसादः समता माधुर्यं सुकुमारता।

अर्थव्यक्तिरुदारत्वम् ओजःकान्तिसमाधयः(C) ॥

---

बाधाभावात्, तद्वदित्यर्थः। अत्र प्रदीपः—'ओजसि शुष्केन्धनाग्निवद् माधुर्यं स्वच्छशर्करा-वस्त्रादिजलवद्' इत्यादि। तथा च—'स्वच्छ'पदं सामर्थ्यात् स्वच्छपटादिकं बोधयतीत्यर्थः।

(A) दशसु गुणेषु मध्ये केचित् एष्वस्मदुक्तेषु गुणेषु अन्तर्भवन्ति, परे अन्ये दोषत्यागाद् दोषाभावरूपत्वात् श्रिता गुणत्वव्यवहारमिति शेषः। अन्ये एतद्व्यतिरिक्ताः कुत्रचिद् रसादौ दोषत्वं भजन्ति दोषरूपत्वाद् गुणा एव न भवन्तीत्यर्थः, अतो न दश गुणा इति पद्यार्थः।

अत्रोक्तं प्रदीपकृता—'इदं (एष्विति) चोपलक्षणम्, अलङ्कारध्वन्योरप्यन्तर्भावस्य दर्शयिष्य-माणत्वात्। उक्तान्तर्भावादिहेतुत्रयोपादानमप्युपलक्षणम्, वैचित्र्यमात्रपर्य्यवसानस्यापि दर्शयिष्य-माणत्वात्' इति।

(B) सगुणावित्यादि। तथा च 'तददोषौ शब्दार्थावि'त्यत्र शब्दार्थयोः सगुणत्वविशेषण-मनुपपन्नम्, अत्र रसमात्रवृत्तित्वस्य सिद्धान्तितत्वादित्यर्थः।

(C) पाठकानां सुग्रहत्वायात्र निराकृतानां दशानां गुणानां स्वरूपाणि वामनसूत्रवृत्तितः सोदाहरणानि सव्याख्यानि चोल्लिख्यन्ते :—

बहूनामपि पदानामेकपदवद्भासनात्मा यः श्लेषः, यश्चारोहाव-रोहक्रमरूपः समाधिः, या च विकटत्वलक्षणा उदारता, यश्चौजो-

---

अत्र श्लेषसमाध्युदारताप्रसादानाम् ओजस्यन्तर्भावमाह—बहूनामिति। एकपदवदिति, समासवशादित्यर्थः। तेन दीर्घसमास एव श्लेषः परिभाषितः। आरोहावरोहयोरिति, गाढवर्णैरुपक्रमोपसंहारादित्यर्थः। विकटत्वम् उपक्रमोपसंहार-

---

गाढबन्धत्वमोजः। बन्धस्य गाढत्वं यत्तदोजः। यथा—'विलुलितमकरन्दा मञ्जरीर्नर्त्तयन्ति'।

शैथिल्यं प्रसादः। बन्धस्य शैथिल्यं शिथिलत्वं प्रसादः। यथा—'कुसुमशयनं न प्रत्यग्रं न चन्द्रमरीचयो न च मलयजं सर्वाङ्गीणं न वा मणियष्टयः'।

मसृणत्वं श्लेषः। मसृणत्वं नाम यस्मिन् सति बहून्यपि पदानि एकवद् भासन्ते। यथा—'अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः'।

मार्गाभेदः समता। मार्गस्याभेदो मार्गाभेदः समता। येन मार्गेणोपक्रमस्तस्यात्याग इत्यर्थः। श्लोके प्रबन्धे चेति। पूर्वोक्तमुदाहरणम्।

आरोहावरोहक्रमः समाधिः। आरोहावरोहयोः क्रमः आरोहावरोहक्रमः समाधिः परिहारः। तत्रारोहपूर्वोऽवरोहो यथा—'निरानन्दः कौन्दे मधुनि परिभुक्तोज्झितरसे'। अवरोहपूर्वस्तु आरोहो यथा—'नराः शीलभ्रष्टा व्यसन इव मज्जन्ति तरवः'।

पृथक्पदत्वं माधुर्यम्। बन्धस्य पृथक्पदत्वं यत्तन्माधुर्यम्। पृथक् पदानि यस्य स पृथक्पदः तस्य भावः पृथक्पदत्वम्। समानदैर्घ्यादिविनिवृत्तिपरश्चैतत्। पूर्वोक्तमुदाहरणम्।

अजरठत्वं सौकुमार्यम्। बन्धस्याजरठत्वमपारुष्यं यत्तत् सौकुमार्यम्। पूर्वोक्तमुदाहरणम्।

विकटत्वमुदारता। बन्धस्य विकटत्वं यदसौ उदारता। यस्मिन् सति नृत्यन्तीव पदानि इति जनस्य वर्णना भवति तद् विकटत्वम्, लीलायमानत्वमित्यर्थः। यथा—'स्वचरणविनिविष्टैर्नूपुरैर्नर्त्तकीनां झटिति रणितमासीत्तत्र चित्रं कलञ्च'।

(अत्र झणिति-पाठो दर्पणसम्मतः)

अर्थव्यक्तिहेतुत्वमर्थव्यक्तिः। यत्र झटिति प्रतिपत्तिहेतुत्वं स गुणोऽर्थव्यक्तिरिति। पूर्वोक्तमुदाहरणम्।

औज्ज्वल्यं कान्तिः। बन्धस्योज्ज्वलत्वं नाम यदसौ कान्तिरिति। यदभावे पुराणच्छायेत्युच्यते। यथा—'कुरङ्गीनेत्रालीस्तबकितवनालीपरिसरः'। इति (अधि० ३, अ० १)।

मिश्रितशैथिल्यात्मा प्रसादः, तेषामोजस्यन्तर्भावः। पृथक्पदत्त्वरूपं माधुर्यं भङ्ग्या साक्षादुपात्तम्। प्रसादेनार्थव्यक्तिर्गृहीता। मार्गाभेदरूपा समता क्वचिद्दोषः। तथा हि—'मातङ्गाः किमु वल्गितैः' इत्यादौ सिंहाभिधाने मसृणमार्गत्यागो गुणः। कष्टत्वग्राम्यत्वयोर्दुष्टताभिधानात्तन्निराकरणेनाऽपारुष्यरूपं सौकुमार्यम् औज्ज्वल्यरूपा कान्तिश्च स्वीकृता। एवं न दश शब्दगुणाः।

पदार्थे वाक्यरचनं वाक्यार्थे च पदाभिधा।
प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च॥

---

राहित्येन गाढवर्णघटना। ओजोमिश्रितेति, गाढवर्णमिश्रितेत्यर्थः। शैथिल्यमिश्रणमत्र विकटत्वाद्भेदः। तेषामोजसीति। मयाऽप्योजोगुणस्य (A)तैर्व्यङ्ग्यत्वाङ्गीकारादिति भावः। 'पृथक्पदत्वम्' असमासः। भङ्ग्येति, 'अवृत्तिर्मध्यवृत्तिर्वे'ति माधुर्यव्यञ्जकतयाऽसमासस्य मयाऽप्युक्तत्वात्। अवृत्तिपदेन पृथक्पदत्वकथनमेव भङ्गी (B)। अन्ये भजन्ति दोषत्वमिति दर्शयति—मार्गेति। उपक्रमोपसंहारयोर्मसृणैकमार्गता समता गाढवर्णैस्तथात्वन्तु समाधिरित्यनयोर्भेदः। मसृणवर्णत्यागो गुण इति, दोषाभाव इत्यर्थः। (C) अत्रोपसंहारेऽपि हि मसृणमार्गकरणे (D)प्रकृतिविपर्ययदोषापत्तिः। अत्र च (E)एकस्यैव गुणस्य दोषत्वभजनकथनादन्ये भजन्तीत्यत्र बहुत्वमविवक्षितम्। दोषत्यागात् पर इति दर्शयति—कष्टत्वेति। 'औज्ज्वल्यम्' अग्राम्यम्।

एतद्व्यनामानो विभिन्नलक्षणा दशार्थगुणा अपि नाङ्गीकर्त्तव्या इत्याह—पदार्थ इति। चन्द्रमिति वक्तव्ये 'नयनसमुत्थं ज्योतिरत्रेरि'ति पदार्थे वाक्यरचना,

---

(A) तैरिति, श्लेषसमाधुदारताप्रसादघटका ये शब्दास्तैरित्यर्थः, ओजोगुणस्यैवैषामपि गाढबन्धतया दीप्तिहेतुत्वादिति प्रदीपप्रभायां स्पष्टम्।

(B) भङ्गीति प्रकारान्तरमित्यर्थः। तथा च पृथक्पदत्वम् अवृत्तित्वञ्चेति नार्थान्तरम्।

(C) अत्रेति 'मातङ्गाः किमु वल्गितैः' इत्यत्र। उपसंहारे द्वितीयार्द्धे।

(D) प्रकृतिविपर्ययदोषापत्तिरिति, प्रकृतेः स्वभावस्य ओजस्विनि वाच्ये ओजोव्यञ्जकशब्दप्रयोगरूपस्य विपर्ययोऽन्यथाभावः, स एव दोषस्तस्यापत्तिः प्रसक्तिरित्यर्थः।

(E) एकस्यैवेति समताख्यगुणस्य।

इति या प्रौढिः ओज इत्युक्तं तद् वैचित्र्यमात्रम्, न गुणः; तदभावेऽपि काव्यव्यवहारप्रवृत्तेः। अपुष्टार्थत्वाधिकपदत्वानवीकृतत्वामङ्गलरूपाश्लीलग्राम्याणां निराकरणेन च साभिप्रायत्वरूपमोजः, अर्थवैमल्यात्मा प्रसादः, उक्तिवैचित्र्यरूपं माधुर्यम्, अपारुष्यरूपं सौकुमार्यम्, अग्राम्यत्वरूपा उदारता च स्वीकृतानि। अभिधास्यमानस्वभावोक्त्यलङ्कारेण रसध्वनिगुणीभूतव्यङ्ग्याभ्यां च वस्तुस्वभावस्फुटत्वरूपा अर्थव्यक्तिः, दीप्तरसत्वरूपा कान्तिश्च स्वीकृता।

---

'कान्तार्थिनी निशि सङ्केतं गच्छन्ती'ति वक्तव्ये अभिसारिकेति वाक्यार्थे पदाभिधा, नायं पण्डित इति समासः (A), नायं व्याकरणं स्मृतिं तर्कादिकञ्च वेत्तीति व्यासः (B), मिलितमेतच्चतुष्टयं प्रौढिरित्यर्थः। तद् (C)वैचित्र्यमात्रमिति। तथा चालङ्कार एवायम्, 'वैचित्र्यमलङ्कार' इति तल्लक्षणात्। तदभावेऽपीति। यद्यपि गुणान्तरात्तत्र काव्यव्यवहार इति तैर्वक्तुमत्र शक्यम्, तथापि दर्शिताव्याप्त्यतिव्याप्तिभ्यां गुणमात्रस्यैव काव्यव्यवहारप्रयोजकत्वाभावादित्यभिप्रायः। (D)अन्यविधस्यौजसः प्रसादमाधुर्यसौकुमार्योदारतानाञ्च पञ्चदोषत्यागेन स्वीकारमाह—अपुष्टार्थत्वेति, तत्त्यागात् साभिप्रायत्वरूपौजसः स्वीकारः। अर्थवैमल्यमधिकपदेनाकलुषीकरणम् अधिकपदत्वत्यागात् तत्स्वीकारः। उक्तिवैचित्र्यं बहुशः प्रतिपाद्यमानस्यार्थस्य भङ्गीभेदेन नवीकरणम्, अनवीकृतत्वत्यागात् तत्स्वीकारः। ग्राम्यत्वत्यागादग्राम्यतारूपाया उदारतायाः स्वीकारः। अभिधास्येति, रसध्वनी रसगुणीभूतव्यङ्ग्यञ्चेति उभयत्र रसपदान्वयः।

---

(A) समासः सङ्क्षेपः।

(B) व्यासो विस्तारः।

(C) वैचित्र्यमिति उक्तिवचित्र्यमत्राभिप्रेतं प्रकाशकृतामिति प्रतिभाति। टीकाकृतस्तु विशिष्टपरतामङ्गीकृत्य—वैचित्र्यमलङ्कार इति व्याचख्युः। एतन्मते 'तदभावेऽपि काव्यव्यवहारप्रवृत्तेरित्यग्रिमवृत्तिग्रन्थासङ्गत्यापत्तिः, 'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि' इत्यलङ्कारस्य काव्यव्यवहारप्रवृत्तावावश्यकत्वात्। वामनमतेऽप्येवमेव। यद्यप्यलङ्कारान्तरसत्त्वात्तत्र काव्यव्यवहारः सुवचस्तथापि यथोक्तौजोगुणमात्रसद्भावे काव्यत्वं व्याहन्येत, तदप्योजोगुणस्यालङ्कारत्वं निर्विवक्षोरनिष्टमेवेति ध्येयम्। 'सौन्दर्यमलङ्कार' इति मुद्रितवामने (१।१।२ सू०)।

(D) अन्यविधस्येति साभिप्रायत्वरूपस्य पञ्चमस्यौजसः। एवञ्च तद् वैचित्र्यमात्रम् इत्यनेन पूर्वं समासान्तानां चतुर्णाम् ओजसां निराकरणं कृतमिति ज्ञेयम्।

**क्रमकौटिल्यानुल्वणत्वोपपत्तियोगरूपघटनात्मा श्लेषोऽपि विचित्रत्व-मात्रम्। अवैषम्यस्वरूपा समता दोषाभावमात्रम्, न पुनर्गुणः।**

रसगुणीभूतव्यङ्ग्यञ्चापराङ्गं ताभ्यामित्यर्थः। (A) **क्रमेति**। क्रमः क्रियापरम्परा, कौटिल्यं वैदग्ध्यव्यञ्जिका रचना, उल्वणत्वं प्रसिद्धवर्णनम्, उपपत्तियोगः सहेतुकत्वम्, एतच्चतुष्टयघटना श्लेष इत्यर्थः। तदुदाहरणञ्च—

[1]दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादराद्
एकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलः।
ईषद्वक्रिमकन्धरः सपुलकः प्रेमोल्लसन्मानसाम्
अन्तर्हासलसत्कपोल[2]फलकां धूर्त्तोऽपरां चुम्बति(B)॥ इति

अत्र हि क्रान्ताख्यातान्तक्रिया, पुंसो वैदग्ध्यव्यञ्जिका रचना च। अयमर्थो लोकप्रसिद्धश्च, अपरस्याश्चुम्बने अपरस्या नयनपिधानञ्च हेतुरिति। **विचित्रत्वमात्रमिति**। तथा चायमप्यलङ्कार एव न गुण इत्यर्थः। अवैषम्यं प्रक्रमभङ्गाभावः,

(A) 'क्रमकौटिल्यमतिक्रमस्तस्यानुल्वणत्वमतिस्फुटता तत्रोपपत्तिर्युक्तिस्तस्या योग इति, यथा—'दृष्ट्वैकासन' इत्यादि। अत्र पिहितनयनामतिक्रम्यान्याचुम्बनादतिक्रमः, तस्यास्फुटत्वमनया तदज्ञानात् तत्रोपपत्तिरेवमनया तु न ज्ञातव्यमिति। केचित्तु 'क्रमकौटिल्यं क्रमस्यातिक्रमः स चात्र व्यक्त एव' इति प्रदीपः। 'अत्रेति' पिहितनयनायाश्चुम्बनौचित्यादित्यर्थः। क्रमस्यातिक्रमो युगपदुभयानुरञ्जनम्। अत्रोभयानुरञ्जनं मा विज्ञातं भवत्विति न तात्पर्यं किन्त्वनौचित्यं मा विज्ञायीत्येवेति पूर्वव्याख्यानादस्वरसः' इति प्रभा।

(B) दृष्ट्वैकासन इति। धूर्त्तश्चतुरो नायकः प्रियतमे अतिप्रिये नायिके एकासनसंस्थिते एकासनोपविष्टे दृष्ट्वा वीक्ष्य आदरात् उत्साहात् पश्चात् पृष्ठत उपेत्य आगत्य विहितं कृतं क्रीडाया नेत्रपिधानाख्याया अनुबन्धः प्रारम्भस्तस्य छलं येन स तथाभूतः सन् एकस्याः प्रियतमायाः नयने नेत्रद्वयीं पिधाय आच्छाद्य ईषत् अल्पः वक्रिमा वक्रत्वं यस्यास्तादृशी कन्धरा ग्रीवा यस्य तथाभूतः ग्रीवामीषदवनमय्येत्यर्थः अधिकावनमने करचापल्यादपरा जानीयादिति भावः। क्वचित् 'वक्रितकन्धर' इति पाठः। सपुलकः सात्त्विकभावोदयाद् जातरोमाञ्चः सन् प्रेम्णा नायकविषयकानुरागेण उल्लसन्मानसां सानन्दचित्ताम् अन्तर्हासलसत्कपोलफलकां नायकधौर्त्त्यदर्शनादुद्गच्छतो हासस्य अन्तर्निरोधेन प्रोज्ज्वलगण्डभित्तिम् अपरां चुम्बति। 'कपोलपुलकामि'ति पाठेऽपि पुलकपदेन कपोलयोरुल्लासो लक्षणीयः, रोमाञ्चरूपस्य मुख्यार्थस्य कपोलेऽन्वयबाधात्। 'एकत्रासनसंस्थिते' इति पाठे तु एकत्र कस्मिन्नपि निर्जने देशे, आसनसंस्थिते इति एकासनसंस्थिते इत्येवार्थ आकाङ्क्षाबललभ्यः।

1. 'एकवा-' ग। 2. '-पुलकां' ग।

कः खल्वनुन्मत्तोऽन्यस्य प्रस्तावेऽन्यदभिदध्यात्। अर्थस्यायोनेरन्यच्छायायोनेर्वा यदि न भवति दर्शनं तत् कथं काव्यम्—इत्यर्थदृष्टिरूपः समाधिरपि न गुणः।

(९७) तेन नार्थगुणा वाच्याः—

वाच्या वक्तव्याः।

---

स च प्रक्रमभङ्गत्यागेनैव स्वीकृत इत्याह—दोषाभावेति। 'अन्यप्रस्तावे' अन्योपक्रमे। अन्यदिति, उपक्रान्तरूपाकाङ्क्षितादन्यदित्यर्थः। (A)समाधिगुणास्वीकारमाह—अर्थस्येति।

(B)सद्यो मुण्डितमत्तहूणचिबुकप्रस्पर्द्धि नारङ्गकम्
इत्यत्रायोनिरर्थः(C)।

(D)निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता कापि।
नीलोत्पलेऽपि विमृशति [1]करमर्पयितुं कुसुमलावी॥

इत्यादिरर्थोऽन्यच्छायायोनिः अन्यैरपि नारीनयनस्य नीलोत्पलसादृश्यवर्णनात्।

वाच्या इत्यस्य शक्या इत्यर्थकत्वभ्रमं निराकुरुते—वक्तव्या इति।

---

(A) समाधीति। अत्र प्रदीपः—'समाधिः पुनरर्थदर्शनं न चासौ गुणः काव्यशरीरत्वात्। स्वयं दृष्टस्यान्यच्छायासिद्धस्यार्थस्य यदि न दर्शनं कथं तर्हि काव्यशरीरनिष्पत्तिः। असाधारणशोभाधायकं हि गुणं ब्रुवन्ति, न च काव्यशरीरनिर्वर्त्तकम्' इति।

(B) सद्यो मुण्डित इति। नारङ्गके मुण्डितहूणचिबुकसाम्यञ्च हूणचिबुकस्य सद्यः श्मश्रूत्पाटनेनाऽऽलक्ष्यरोमविवरतयाऽऽकृतितः, मदजनितातिताम्रतया तज्जातिसुलभस्वाभाविकारुणिम्ना च वर्णतोऽपि बोध्यम्।

(C) अयोनिरिति। नारङ्गकस्य मुण्डितमत्तहूणचिबुकसाम्यमन्येन कविना नोपदर्शितं केवलमनेनैव कविनोपनिबद्धमित्ययमर्थोऽयोनिरनन्यकारणकः स्वप्रतिभामात्रसमुद्भावित इति यावत्।

(D) निजनयनेति। कापि कुसुमलावी मालाकारी अम्बुनि सम्बद्धैर्निजनयनप्रतिबिम्बैनीलोत्पलभ्रमाधायकैरिति शेषः बहुशो वारंवारम्, अत एव प्रतिबिम्बैरिति बहुवचनमपि सार्थकम्, प्रतारिता जलान्तःप्रतिबिम्बिते स्वनयने नीलोत्पलभ्रमेण जिघृक्षन्ती तयोरवास्तवत्वाद् वञ्चितेत्यर्थः, नीलोत्पले वस्तुभूतेऽपीत्यर्थः, करम् अर्पयितुं विमृशति पूर्वप्रतारणां स्मरन्ती किमिदं वस्तुतो नीलोत्पलमाहोस्विद् भ्रम इति पर्यालोचयतीत्यर्थः। चूर्णदूनरसनो दध्नोऽपि बिभेतीति भावः।

---

1. ग-पुस्तके 'सहसा कुमारी'ति प्रामादिकः पाठः।

(६८) प्रोक्ताः शब्दगुणाश्च ये ।
वर्णाः समासो रचना तेषां व्यञ्जकतामिताः ॥ ७३ ॥

के कस्य इत्याह—

(६९) मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गा (A)रणौ लघू ।
अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथा ॥ ७४ ॥

ट-ठ-ड-ढ-वर्जिताः कादयो मान्ताः शिरसि निजवर्गान्त्ययुक्ताः, तथा रेफ-णकारौ ह्रस्वान्तरिताविति वर्णाः, समासाभावो

---

प्रोक्ता इति, माधुर्यौजःप्रसादाख्या इत्यर्थः, शब्दगुणा इति। रसगुणानामेव परम्परया शब्दगुणत्वेनोक्तत्वादिदमुक्तम्। 'इताः' प्राप्ताः।

मूर्ध्नीति, (B)स्ववर्गान्त्यं मूर्धावच्छेदेन गच्छन्त इत्यर्थः, स्ववर्गान्त्यमूर्द्धान इति यावत्। कादयो मान्ताः स्पर्शसंज्ञका यद्येवंविधा इत्यर्थः। अत्रैव टवर्गं पर्युदस्यति—अटवर्गा इति। ह्रस्वान्तणकारस्यापर्युदसनीयत्वेन तत्संग्रहाय ढपर्यन्तता। ह्रस्वान्ताविति समीचीनः पाठः। ह्रस्वान्तरिताविति पाठेऽपि व्यञ्जनस्य स्वरेणान्तरितत्वात् स एवार्थः। समास इति। (C)यद्यपि समासाभावो न

---

(A) रणौ लघू इति। अत्र च दर्पणटीकाकृतो रामचरणतर्कवागीशाः—(सा० ८।५) "लघू वर्णान्तरयोगराहित्येन लघुप्रयत्नोच्चार्यौ न तु गुरुविपरीतौ, तथात्वे 'अपसारय घनसारं कुरु हारं दूर एव किं कमलैः' इति काव्यप्रकाशोक्तं तदुदाहरणमसङ्गतं स्यात्; 'स्वयं हाराकारा गलति जलधारा कुवलयात्' इत्यादौ चानुभवसिद्धस्य दीर्घरेफस्य माधुर्यव्यञ्जकत्वस्यापलापप्रसङ्गाच्च" इति। एतच्चिन्त्यं काव्यप्रकाशे माधुर्यगुणोदाहरणत्वेनायं श्लोको नोपलभ्यते। प्रत्युत पाञ्चाल्यपराभिधायां कोमलायां वृत्तावुदाहरणत्वेनायं श्लोकः परिदृश्यते (९म, ११० का०)। तस्याश्च वृत्तेः 'कोमला परैरि'ति लक्षणानुसारेण माधुर्यौजःप्रकाशकवर्णातिरिक्तैः प्रसादगुणव्यञ्जकवर्णैरेव घटना ज्ञायते। टीकाकृतापि तत्र 'अत्र सानुस्वारत्वेन रेफस्य लघुत्वाभावान्न माधुर्यव्यञ्जकत्वम्' इति वक्ष्यते।

(B) स्ववर्गान्त्यम् इत्यादि 'मूर्ध्नि वर्गान्त्यगाः' इत्यंशस्य विवरणम्।

(C) एवञ्चात्र वृत्तौ असमासपददर्शनाद् बिभ्यता झलकीकरोपाह्वेन वामनाचार्येण 'अत्राभावपदमीषदर्थकं तथा चाल्पसमास इत्यर्थो बोध्यः तेन 'वर्णाः समासो रचना' इत्यनेन न विरोधः' इति यदापातमनोरमं समाधायि, तच्चिन्तनीयम्, अल्पवृत्तिमध्यवृत्त्योर्भेदस्यासग्रहत्वादेवंरीत्या समाधानसम्भवे असमासस्थले माधुर्यगुणाभावप्रसञ्जकस्याधायिकायास्तादृशव्याख्याया अनौचित्यात्।

मध्यमः समासो वेति समासः, तथा माधुर्यवती पदान्तरयोगेण रचना माधुर्यस्य व्यञ्जिका। उदाहरणम्—

अनङ्गरङ्गप्रतिमं तदङ्गं भङ्गीभिरङ्गीकृतमानताङ्ग्याः।
कुर्वन्ति यूनां सहसा यथैताः स्वान्तानि शान्तापरचिन्तनानि ॥३४१॥

(१००) योग आद्यतृतीयाभ्यामन्त्ययो रेण तुल्ययोः।
टादिः शषौ वृत्तिदैर्घ्यं गुम्फ उद्धत ओजसि ॥ ७५ ॥

वर्गप्रथमतृतीयाभ्यामन्त्ययोस्तद्[1]द्वितीयचतुर्थयोः रेफेण अध

---

समासस्तथापि समासप्रतियोगित्वेन समासत्वोपचारादिदमुक्तम्। घटना तथेत्यस्य तथापदं गृह्णन् व्याचष्टे—तथा माधुर्यवतीति, मूर्ध्नि वर्गान्त्यगा इत्याद्युक्तमधुरवर्णवतीत्यर्थः। पदान्तरयोगे सन्धौ यद्यपि वर्णत्वेनैव तत्संग्रहः सम्भवति तथाऽपि सन्धावपि :तादृशा वर्णा उत्पाद्या इत्युपदेशपरमिदम्। माधुर्ये इत्यत्र सप्तम्यर्थो व्यञ्जकता इत्याह—व्यञ्जिका इति। अनङ्गेति। अनङ्गस्य रङ्गस्थलप्रतिमम् आयताक्ष्यास्तदङ्गं भङ्गीभिर्लीलाभिरङ्गीकृतम्। कुत एतद्विदितमित्यत्राह—कुर्वन्तीति, यत इत्यर्थे यथेति। यूनां स्वान्तानि चित्तानि। यत एता भङ्ग्यः शान्तम् अपरचिन्तनं येषु तादृशानि कुर्वन्ति अत इत्यर्थः। अत्र शृङ्गारीयपद्ये गकारास्तकाराश्च स्वस्ववर्गान्त्यमूर्धानः। (A)प्रतिमन्तेति अङ्गम्भेति च सन्धौ तादृशवर्णौ।

ओजोव्यञ्जकान्याह—योग इति। [2]अन्त्ययोरिति, स्वस्वान्त्ययोरित्यर्थः। तद्द्वितीयचतुर्थयोरिति। तेनाद्येन द्वितीयस्य तृतीयेन चतुर्थस्य योग इत्यर्थः। तत्र चाद्यत्वान्त्यत्वादिकं नैकवर्गीयत्वनियतं किन्त्वेकवर्गान्त्यादिना वर्गान्तरद्वितीयादेरपि योगो बोध्यः। तुल्ययोरित्यत्राप्येवं बोध्यम्। तेन क्च-ख्क-ग्ज-घ्भ-क्ता-

---

(A) 'प्रतिमन्तेती'ति 'अङ्गम्भेती'ति प्रतिमं त इत्यस्य अङ्गं भ इत्यस्य च कृतसन्ध्योर्निर्देशः। इमौ च सन्धेयौ तकार-भकारौ तदङ्गपदस्य भङ्गीपदस्य चाद्यैकदेशप्रतिरूपकौ। टीकायाम् अङ्गमिति तदङ्गपदस्य एकदेशमात्रपरिग्रहः।

---

1. 'तदि'ति क्वचिन्नास्ति। 2. अन्त्ययोरित्यनन्तरं ख-पुस्तके 'आद्यतृतीयान्त्ययोरित्यर्थः। तेनाद्यस्यान्त्येन द्वितीयेन तृतीयस्यान्त्येन चतुर्थेन योग इत्यर्थः। आद्यत्वान्त्यत्वे च भिन्नवर्गसाधारणे बोध्ये। तेन कखकार इव कठकारोऽपि गघकार इव गझकारोऽपि बोध्यः, गुम्फो घटना सन्धिश्च। उद्धत एतादृशोद्धतवर्णवान्' इत्यधिकः पाठः।

उपरि उभयत्र वा यस्य कस्यचित् तुल्ययोस्तेन तस्यैव सम्बन्धः, टवर्गोऽर्थात् णकारवर्जः शकारषकारौ दीर्घसमासः विकटा [1]घटना ओजसः। उदाहरणम्—'मूर्ध्नामुद्वृत्तकृत्ते'त्यादि।

(१०१) श्रुतिमात्रेण शब्दात्तु येनार्थप्रत्ययो भवेत्।

साधारणः समग्राणां स प्रसादो गुणो मतः ॥ ७६ ॥

समग्राणां रसानां सङ्घटनानां च। उदाहरणम्—

(A)परिम्लानं पीनस्तनजघनसङ्गादुभयत-

स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम्।

---

द्योऽपि व्यञ्जका बोध्याः। अत एवोदाहरणे रक्तसंसक्तेति[2]। उभयत्र वेति, गार्द्धः पद्धो[3]मुहुर्ग्राण आर्द्रकस्येव[3]* दुर्ग्रह इत्यादौ। तेन तस्यैवेति। आद्यस्याद्येन तृतीयस्य तृतीयेनेत्यर्थः। भिन्नवर्गसाधारणमिदमपीति बोद्धव्यम्। णकारवर्ज इति, लघु'ण'कारवर्ज इत्यर्थः। विकटा घटनेति। एतादृशोद्धतवर्णवती; घटना च सन्धिः। [4]मूर्द्ध्नामित्यादि व्याख्यातमिदं प्राक् (१५६ श्लो०) अत्र रेफयुक्ता वर्णाः[4]*। कृत्तरक्तसक्त इत्यत्र तुल्ययोगः। 'गलद्रे'त्यत्र 'जगज्जे'त्यत्र च सन्धावपि तादृशा वर्णाः।

प्रसादगुणव्यञ्जकान्याह—श्रुतिमात्रेणेति। स पूर्वोक्तः प्रसादो गुणः तेषां समग्राणां साधारणस्तादृशसमग्रैरेव व्यङ्ग्य इत्यर्थः। कीदृशसमग्राणां व्यङ्ग्य इत्यत्राह— श्रुतिमात्रेणेति। यादृशे रसे यादृशे समासे यादृश्यां घटनायाञ्च शीघ्रमर्थप्रतीति-स्तादृशरसादिरेव तद्व्यञ्जकः, तथा च फलपरिचेय एव तद्व्यञ्जक इति बोध्यम्। रसानामिति—आश्रयत्वं व्यञ्जकत्वञ्च रसानामित्यर्थः। परिम्लानमिति। उभयतः

---

(A) रत्नावलीनाटिकाया द्वितीयाङ्कगोऽयं श्लोकः। सागरिकायाः शय्यामुद्दिश्योदयनस्योक्तिरियम्। इदं पुरो दृश्यमानं पीनस्तनजघनसङ्गात् पीनयोः स्तनयोः पीनस्य जघनस्य नितम्बस्य च सङ्गात् सम्पर्कात् उभयतः स्तनस्थाने जघनस्थाने च परिम्लानं मलिनम्, विरहवशात् शय्यायां विचेष्टमानाया नायिकाया न्युब्जीभावात् स्तनसङ्गः उत्तानीभावाच्च नितम्बसङ्ग इति बोध्यम्। यद्वा जघनस्य कटीपुरोभागस्येत्यर्थः, तथा चोद्दीपकवासन्तकुसुमादिदर्शनपरिजिहीर्षयाऽधोमुखशयनात्तत्तत्स्थान-

---

1. 'संघटने'ति क्वचित्। 2. रक्तसंसक्तेतीत्यनन्तरं ख-पुस्तके 'भिन्नवर्गीययोर्योगः' इत्यधिकः। 3. 'मुहुर्ग्राण' इत्यादि ग-पुस्तके नास्ति। 4. 'मूर्द्धामि'त्यादि ग-पुस्तके नास्ति।

इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्गयाः सन्तापं वदति विसिनीपत्रशयनम् ॥ ३४२ ॥

यद्यपि गुणपरतन्त्राः सङ्घटनादयस्तथाऽपि—

(१०२) वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित् क्वचित् ।
रचना-वृत्ति-वर्णानामन्यथात्वमपीष्यते ॥ ७७ ॥

क्वचिद् वाच्यप्रबन्धानपेक्षया वक्त्रौचित्यादेव रचनादयः । यथा—

मन्थायस्तार्णवाम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसङ्घट्टचण्डः ।

---

[1]शिरश्चरणावच्छिन्नार्द्धद्वये(A)न्युब्जत्वे स्तनसङ्गः । तनोर्मध्यस्य परिमिलनं घर्षणमप्राप्य अन्तर्हरितमित्यन्वयः । अत्र शीघ्रार्थप्रत्यायका रसादयः ।

'गुणपरतन्त्रा' तत्तद्गुणव्यञ्जनार्थमेव तत्तद्घटनादय उपादेया इत्यर्थः । 'अन्यथात्वं' तत्तद्गुणाव्यञ्जकत्वेऽप्युपादेयत्वम् । तत्र च[2]मिलितवक्त्रादित्रयौचित्यभ्रमं निरस्यन् व्याचष्टे—क्वचिदिति । मन्थायस्तेति । रणस्थले दुन्दुभिशब्दं श्रुत्वा भीमसेनस्येयं पृच्छा । दुन्दुभिरत्र दुन्दुभिशब्दः, केन ताडितस्ताडनेन जनितः, (B)विशेषणानां शब्दविशेषणत्वेनैवोपपत्तेः । कीदृशः शब्दः ? मन्थेनायस्तं प्राप्तायासं [ दूरमुत्क्षिप्तं ] यदर्णवाम्भस्तत्प्लुतं कुहरं यस्य तादृशस्य चलतो मन्दरस्य ध्वानवद् धीरः कोणाघातेषु वादनदण्डाघातेषु सत्सु गर्जन्तः प्रलयघनघटावद् अन्योन्यसङ्घट्टेनेव चण्डः । एतादृशचण्डत्वे[3] कोणाघातकालीनत्वं बोध्यम्[4] ।

---

मालिन्यं जातम् । तनोः सूक्ष्मस्य मध्यस्य कटीभागस्य परिमिलनं संयोगम् अप्राप्य सूक्ष्मत्वादेव अन्तर्मध्यदेशे हरितं वर्णान्तरमप्राप्तमित्यर्थः । एतदप्यधोमुखशयनादिति ज्ञेयम् । श्लथं शिथिलं यथा तथा यो भुजलताया आक्षेपश्चालनं तस्य वलनैः सम्बन्धैः व्यस्तन्यासं विपर्य्यस्तं विसिनीपत्रशयनं कृशाङ्ग्याः सन्तापं वदतीत्यर्थः ।

(A) 'शिरश्चरणावच्छिन्नार्द्धद्वये' इति स्तनजघनस्थानयोः परिग्रहः ।

(B) विशेषणानामिति, वाद्ययन्त्रवाचकस्य दुन्दुभिशब्दस्य दुन्दुभिशब्दपरत्वव्याख्याने हेतुरुक्तः ।

---

1. 'शिरश्चालना-' इत्यादिः प्रामादिकः पाठः ग-पुस्तके । 2. 'मिलितमि'ति ग-पुस्तके नास्ति । 3. 'कोणाघातकाले उक्तवचण्ड इत्यर्थः' इति ख-पाठः । 4. 'तद्भटाज्जातप्राय इत्यर्थः' इत्यधिकः पाठः ग-पुस्तके ।

कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽसौ॥३४३॥

(A)अत्र हि न वाच्यं क्रोधादिव्यञ्जकम्, अभिनेयार्थश्च काव्यमिति तत्प्रतिकूला उद्धता रचनादयः; वक्ता चात्र भीमसेनः।

क्वचिद् वक्तृप्रबन्धानपेक्षया वाच्यौचित्यादेव रचनादयः। यथा—

प्रौढच्छेदानुरूपोच्छलनरय[1]मिलत् सैंहिकेयोपघात-
त्रासाकृष्टाश्वतिर्यग्वलितरविरथेनारुणेनेक्ष्यमाणम्।

'कोणो वादनदण्डः' इति कोषः। यद्वा—
'ढक्काशतसहस्राणि भेरीशतशतानि च।
एकदा यत्र ताड्यन्ते कोणाघातः स उच्यते॥'

इति परिभाषायां यत्रेत्यस्य यन्निमित्तमित्यर्थकत्वेन एकदा तादृशताडनजन्यशब्दाः कोणाघातास्तेषु मध्ये गर्जदित्यादिवच्चण्ड इत्यर्थः। कोणाघातघटकशब्दानां मध्येऽयं [2]तादृशचण्ड इत्यर्थः। कृष्णा द्रौपदी "तत्क्रोधोद्दीपकत्वात्तदग्रदूत[3]* इत्यर्थः। कुरुकुल-निधनार्थम् उत्पातरूपो (B)निर्घातसहितो वात इत्यर्थः। अस्मत्सिंहनादस्य यत् प्रति-रसितं तत्सदृश इत्यर्थः। **अभिनेयार्थश्चे**ति, नाटकरूपमित्यर्थः। अत्र च 'रौद्रेऽपि न दीर्घसमासादयः' इति वक्ष्यमाणत्वान्न तदौचित्यमित्यर्थः, तथा च वक्त्रौचित्य-मात्रादत्र दीर्घसमासादय इत्याह—**वक्ता चात्रे**ति। तस्य धीरोद्धतत्वात्तदौचित्य-मिति भावः।

(C)**प्रौढच्छेदे**ति। एतत् कुम्भकर्णोत्तमाङ्गं वियतो निपतति। कीदृशम्?

(A) 'अत्र न वाच्यं क्रोधादिदीप्तरसव्यञ्जकं प्रश्नरूपत्वात्। प्रबन्धश्च नाटकात्माऽभिनेय इति दीर्घसमासत्वं प्रतिकूलं यद्यपि, तथाऽपि वक्ता भीमसेन इति तदौचित्यादुद्धता रचनाऽत्र' इति प्रदीपः। अभिनेयार्थमिति। अभिनेयोऽभिनययोग्योऽर्थो यस्य तत्।

(B) निर्घातो वज्रम्। यद्वा 'यदान्तरीक्षे बलवान् मारुतो मरुताहतः। पतत्यधः स निर्घातो जायते वायुसम्भवः॥' इत्युक्तलक्षणाऽशुभा वात्या निर्घातवातशब्दार्थः।

(C) प्रौढच्छेदेति। अत्र वक्तृप्रबन्धौचित्यानपेक्षि वाच्यौचित्यं प्रतिपादयति प्रदीपकृत्— 'अत्र वक्ता वैतालिकः प्रबन्धश्चाभिनेयात्मेति दीर्घसमासानौचित्येऽपि वाच्यस्य कुम्भकर्णस्यौ-द्धत्यादुद्धता रचनादयः' इति।

1. 'भवदि'ति क्वचित्। 2. 'तादृशयण्ड' इति पाठः ख-पुस्तके। 3. 'तत्क्रोधप्रवर्त्तकत्वादग्रदूत' इति ख-पाठः।

कुर्वत् काकुत्स्थवीर्यस्तुतिमिव मरुतां कन्धरारन्ध्रभाजां
भाङ्कारैर्भीममेतन्निपतति वियतः कुम्भकर्णोत्तमाङ्गम् ॥३४४॥

(A)क्वचिद् वक्तृवाच्यानपेक्षाः प्रबन्धोचिता एव ते । तथा हि—आख्यायिकायां शृङ्गारेऽपि न मसृणवर्णादयः, कथायां रौद्रेऽपि नात्यन्तमुद्धताः, नाटकादौ रौद्रेऽपि न दीर्घसमासादयः । (B)एवमन्यदप्यौचित्यमनुसर्तव्यम् ।

इति काव्यप्रकाशे गुणालङ्कारभेदनियतगुणनिर्णयो नाम अष्टम उल्लासः ॥ ८ ॥

---

कन्धरारन्ध्रभाजां मरुतां भाङ्कारैर्भीमम् । भामित्यव्यक्तानुकरणम् । तत्रोत्प्रेक्ष्यते—कुर्वदिति । काकुत्स्थो रामः । पुनः कीदृशम् ? अरुणेन सूर्यसारथिना ईक्ष्यमाणम् । कीदृशेनारुणेन ? सैंहिकेयोपघातत्रासेनाकृष्टैरश्वैस्तिर्यग्वलितो[1] रविरथो येन तादृशेन । तच्छिरसि राहुभ्रमेण तदुपघातत्रासाद् रविरथ आकृष्य तिर्यग्वलित इत्यर्थः । ननु पततः शिरसोऽरुणसान्निध्याभावात् कथं राहूपपतनत्रासजनकत्वम् इत्यत आह—प्रौढेति । प्रौढच्छेदानुरूपं यदुच्छलनमूर्ध्वगतिस्तदीयरयेण मिलद् अरुणसन्निहितीभवद् इत्युत्तमाङ्गविशेषणम् । (C) 'आख्यायिका-कथे' प्राचीनप्रबन्धविशेषौ । नाटकादावित्यादिपदान्नाटिकादितत्प्रभेदपरिग्रहः ॥

इति महेश्वरभट्टाचार्यन्यायालङ्कारकृतौ काव्यप्रकाशादर्शेऽष्टमो गुणप्रतिबिम्बः ॥ ८ ॥

---

(A) क्वचिदिति । प्रबन्धोचिताया रचनाया विवृतिमाह प्रदीपः—आख्यायिकायां हि शृङ्गारेऽपि व्यङ्ग्ये अनुद्धतेऽपि वक्तरि नातिमसृणा वर्णादयः, प्रत्युत विकटबन्धत्वेनैव च्छायावत्त्वम् । विप्रलम्भकरुणयोस्तु तस्यामपि [ आख्यायिकायामपि ] दीर्घसमासपरिहारः, तयोरतिसौकुमार्यात् । कथायान्तु रौद्रेऽपि नात्यन्तमुद्भटा वर्णादयः, वर्णनीयमहापुरुषसुखप्रतिपत्तिसमर्पणस्योद्देश्यत्वात् । नाटकादावभिनेये तु रौद्रेऽपि न दीर्घसमासादयः विच्छेदेनाभिनयसौकुमार्यादिति ।

(B) अन्यदप्यौचित्यमिति मुक्तकादिपद्यकाव्यविशेषौचित्यम् । तथा हि—एकैकच्छन्दसि वाच्यसमाप्तिर्मुक्तकम् । द्वयोः सन्दानितकम् । त्रिषु विशेषकम् । चतुर्षु कलापकम् । पञ्चादिचतुर्दशान्तेषु कुलकम् । अत्र मुक्तकेषु कवे रसवत्त्वाभिनिवेशित्वे रसाश्रयमौचित्यम् । यथा 'शून्यं वासगृहम्' इत्यादौ । रसनिवेशाभावे तु कामचारः । सन्दानितकादिषु काव्यपरिसमाप्तेर्वैकव्यं दीर्घमध्यसमासता च, प्रबन्धगतेषु पुनस्तेषु प्रबन्धोचिता एव रचनादय इत्यादि ज्ञेयमिति प्रदीपे स्पष्टम् ।

(C) क्रमरक्षार्थं कथायाः पश्चान्निर्देशः । कथाख्यायिकयोः स्वरूपं दर्पणे ( प० ६, २९७-२९८ का० ) द्रष्टव्यम् ।

---

1. '-कृष्टस्तिर्यग्वलितः' इति ग ।

## नवम उल्लासः

(A) गुणविवेचने कृते अलङ्काराः प्राप्तावसरा इति सम्प्रति शब्दालङ्कारानाह—

**(१०३) यदुक्तमन्यथा वाक्यमन्यथाऽन्येन योज्यते।**
**श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा ॥७८॥**

तथेति श्लेषवक्रोक्तिः काकुवक्रोक्तिश्च।

---

'प्राप्तावसराः' प्राप्तसमयाः। काव्यलक्षणोद्देशक्रमेण गुणनिरूपणानन्तरम् अलङ्कारनिरूपणे आकाङ्क्षोदयेन(B) उपोद्घातस्यैवात्र सङ्गतित्वात्। शब्दालङ्कारानिति, 'शब्दार्थौ' इत्युक्तक्रमवशात्।

यदुक्तमिति। अन्यथा अन्याभिप्रायकमुक्तं यद् वाक्यमन्येन जनेन उक्तवाक्यश्लेषेण स्ववाक्यकाक्वा वा अन्याभिप्रायकं योज्यते योजनया प्रकाश्यत इत्यर्थः। अन्यदीयं प्रत्युत्तरं तद्वाक्यश्लेषस्य स्ववाक्यकाकोर्वा साहाय्यादन्यथायोजनाप्रतीतिकृदित्यर्थः। 'तथा द्विधा' तादृशी द्विधा। तद् व्याचष्टे—श्लेषवक्रोक्तिरिति। श्लेषश्च

---

(A) यद्यप्यलङ्काराः प्राप्तावसरा इत्युपक्रम्यालङ्कारसामान्यनिरूपण एवाकाङ्क्षोदयेनाऽलङ्कारसामान्यलक्षणमेव प्रतिपादयितुमुचितं तथाऽपि सामान्यलक्षणस्य गुणविवेचन एवोक्तत्वात् सम्प्रति तद्विशेषलक्षणमभिधानीयम्, शब्दालङ्कारार्थालङ्कारोभयालङ्काररूपविशेषलक्षणत्रयञ्च योगबललभ्यमिति तेषामपि सामान्यलक्षणमपहाय तद्विशेषलक्षणाकाङ्क्षां पूरयितुमाह—शब्देति। एवञ्च 'अलङ्काराः प्राप्तावसराः' इत्युक्त्योत्पन्ना श्रोतॄणामाकाङ्क्षा 'शब्दालङ्कारानाहे'त्युपसंहारेण, 'शब्दालङ्कारानाहे'-त्युपक्रमोत्पन्ना चाकाङ्क्षा वक्रोक्त्यात्मकशब्दालङ्कारविशेषलक्षणाभिधानेन च नोपशाम्येद् यद्यपि तथाप्युक्तरीत्याऽनयोर्हेतुहेतुमद्भावः कथञ्चित् कल्पनीयः। अत्र चायमभिप्रायो वृत्तिग्रन्थस्य प्रदीपसम्मतः—'गुणे विवेचिते अलङ्काराः प्राप्तावसराः। तत्र सामान्यलक्षणं गुणविवेचन एवोक्तम्। शब्दालङ्कारार्थालङ्कारोभयालङ्काररूपविशेषलक्षणत्रयञ्चार्थलभ्यमिति तेषां विशेषलक्षणेषु वक्तव्येषु काव्यलक्षणे शब्दस्य प्राथम्यात्तदलङ्कारविशेषलक्षणे वक्तव्ये प्रथमं वक्रोक्तिं लक्षयती'ति।

(B) प्रकृतज्ञानानुकूलज्ञानविषयत्वम् उपोद्घातः, प्रकृतज्ञानं काव्यलक्षणज्ञानम्, तदनुकूलज्ञानञ्चालङ्कारज्ञानं तद्विषयत्वञ्चालङ्कारे इति लक्षणसमन्वयः। अत्र एवकारोऽप्यर्थे अवसरसङ्गतिश्चात्र द्रष्टव्या। गुणविवेचने कृत इति सङ्गतिसामान्यलक्षणघटकानन्तर्यलाभः।

तत्र पदभङ्गश्लेषेण यथा—

(A)नारीणामनुकूलमाचरसि चेज्जानासि कश्चेतनो
वामानां प्रियमादधाति हितकृन्नैवाबलानां भवान्।
युक्तं किं हितकर्तनं ननु बलाभावप्रसिद्धात्मनः
सामर्थ्यं भवतः पुरन्दरमतच्छेदं विधातुं कुतः ॥ ६४८ ॥

---

सभङ्गाभङ्गरूपः। तत्राद्यमाह—नारीणामिति। परिहसतोरुक्तिप्रत्युक्ती इमे; तत्र स्त्रीणामनुकूलमाचरामीत्येकेनोक्ते परिहस्य तदन्यः प्रशंसति नारीणामिति। जानासि विज्ञोऽसि। स्त्रीणामित्यभिप्रायकमिदं वाक्यं नारीणामित्यत्र श्लेषवशादरीणां नेत्यभिप्रायकं स्वप्रत्युत्तरेण योजनया प्रत्याययति—कश्चेतन इति। एतदुत्तरस्य वामानां शत्रूणामित्यर्थकत्वात् पूर्ववाक्ये अरीणां नेति योजनाप्रतीतिः। एवं सर्वत्र बोध्यम्। एतद् वाक्यमेव पुनर्वामानां नारीणामित्यभिप्रायकम् पूर्ववक्ता प्रत्याययंस्तदेवानुमोदते—हितकृदिति। अबलानां स्त्रीणां हितकरणाभिप्रायकमिदं वाक्यं पुनरन्यो बलशून्यानां हितकरणाभिप्रायकं योजयंस्तं पृच्छति—युक्तमिति। अत्र कृदिति कृती च्छेदने इत्यभिप्रायकमिदं वाक्यं (B)बलस्य बलासुरस्याभावो यस्मात्तादृशस्य इन्द्रस्य

---

(A) नारीणामिति। नारीणां स्त्रीणामनुकूलमाचरसि चेज्जानासि विज्ञोऽसीत्यर्थकमिदं वाक्यमरीणामनुकूलं नाचरसि चेज्जानासीति योजयित्वा कश्चिदाह कश्चेतनो भूत्वा वामानां प्रतिकूलानां हितमातनोति इति [ किमत्र मया विशेषतः कृतम्, नहि कोऽपि चेतनः शत्रूणां हितमादधातीति वक्तुराशयः ]। वामानामित्यस्य कामिनीनामित्यर्थं कल्पयित्वा प्रथमः पुनराह—भवानबलानां स्त्रीणां हितकृन्नैव भवतीति। अपरस्तु हितं कृन्तति छिनत्तीत्यर्थं परिकल्प्याह—बलाभावेन प्रसिद्ध आत्मा स्वरूपं यस्य तादृशजनस्य हितकर्त्तनं किं युक्तमपि तु नेति। प्रथमस्तु बलस्य दैत्यस्याभावेन नाशेन प्रसिद्धरूपस्येन्द्रस्येत्यर्थं परिकल्प्य पुनराह—पुरन्दरस्येत्यादि स्पष्टम्।

'अत्र नारीणामबलानामिति पदे सभङ्गे' इति प्रदीपः। सभङ्गत्वञ्च अरीणां नेति, न (विद्यते) बलं येषामिति च पदच्छेदेन श्लेषनिर्वाहात्। 'वामानामि'ति 'बलाभावप्रसिद्धात्मनः' इति चाभङ्गे पदे। अत्र सभङ्गाभङ्गपदयोः श्लेषेऽपि सभङ्गश्लेषस्य वैचित्र्यविशेषात्तदुपाधिकैवेयं वक्रोक्तिः, उत्तरत्र तु केवलाभङ्गश्लेषोपाधिकेति विशेषः।

(B) 'बलस्यासुरस्याभावो नाशो येभ्य इन्द्रेभ्यस्तथात्वेन प्रसिद्धात्मनाम्' इति पुस्तकान्तरे पाठः साधीयान् प्रतिभाति, उद्दिश्यमानस्याबलानामिति बहुवचनान्तपदस्य प्रतिनिर्दिश्यमानपदमपि बहुवचनान्तत्वेनैव सङ्गच्छते। कल्पभेदादिन्द्रभेद इति च तद्बहुत्वोपपत्तिः।

अभङ्गश्लेषेण यथा—

(A)अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता।
त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित्॥ ३४६॥

काका यथा—

गुरुजनपरतन्त्रतया दूरतरं देशमुद्यतो गन्तुम्।
अलिकुलकोकिलललिते नैष्यति सखि सुरभिसमयेऽसौ॥३४७॥

---

मतङ्केऽनाभिप्रायकं पूर्ववक्ता पुनर्योजयंस्तमधिक्षिपति—सामर्थ्यमिति। अत्र हित-पदस्य मतार्थकत्वं 'हि गतौ' सर्वे गत्यर्था मत्यर्था इत्यनुशासनाद् बोध्यम्।

अहो केनेति। दारुणा कठिना। त्रिगुणा (B)सत्त्वादिगुणत्रयान्यतमाधीना।

गुरुजनेति। अत्र गुरुवाक्यप्रोषितपतिशोचनाभिप्रायकं पूर्वार्द्धवाक्यं पत्न्याः। सखी तु स्ववाक्यकाकत्रा तद्वाक्यं कामाकुलत्वेन विषादाभिप्रायकतया परार्द्धस्ववाक्येन योजयन्ती तामाश्वासयति—अलिकुलेति। नैष्यति अपि त्वेष्यत्येव। (C)अत्र शिरश्चा-लनसहकृता स्ववाक्यकाकुः।

---

(A) अहो केनेति। अत्र दारुणेति बुद्धिविशेषणतया वक्तुरभिप्रेतं श्रोता दारुशब्दस्य तृतीयैकवचनान्तत्वेन निर्मितिकरणतया योजयन्नुत्तरयतीति द्रष्टव्यम्। यद्वा अन्यथायोजनदशायां दारुमयीति श्रवणात् प्रकृत्यादित्वादेवेयं तृतीया।

(B) सत्त्वादिगुणत्रयान्यतमाधीनेति प्रामादिकः पाठः। प्रकृतेस्त्रिगुणत्वात्तत्परिणामभूताया बुद्धेरपि त्रिगुणात्मकतेति सत्त्वादिगुणत्रयाधीनेत्येव वक्तुं युज्यते न पुनस्तदन्यतमाधीनेति, न हि कस्या अपि बुद्धिव्यक्तेः सत्त्वादिगुणत्रयान्यतमाधीनतास्ति। परम्—

'बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु।
प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय॥
प्रवृत्तिञ्च निवृत्तिञ्च कार्य्याकार्य्ये भयाभये।
बन्धं मोक्षञ्च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी॥' (गीता १८।२९—३२)

इत्यादिगीतोक्तदिशा 'प्राधान्येन व्यपदेशा भवन्ती'ति न्यायेन यदा सत्त्वगुणस्याधिक्यं तदा सात्त्विकी सत्त्वगुणाधीना बुद्धिः, यदा रजसस्तदा राजसी रजोगुणाधीना, यदा पुनस्तमसस्तदा तामसी तमोगुणाधीनेति विवक्षया कथञ्चन टीकाग्रन्थो योजनीयः। घ-पुस्तके सत्त्वादिगुण-त्रयाधीनेत्येव पाठः, स चैकादर्शमात्रदृष्ट इति मुद्रित इति च नास्माभिरादृतः।

(C) गुरुजनेति। अत्र टीकाकृतोऽलङ्कारयोजना नातीव रुचिरा लक्ष्यते। यद्यप्यत्रापि

(१०४) वर्णसाम्यमनुप्रासः—

स्वरवैसादृश्येऽपि व्यञ्जनसदृशत्वं वर्णसाम्यम्। रसाद्यनुगतः प्रकृष्टो न्यासोऽनुप्रासः।

(१०५) ———————छेकवृत्तिगतो द्विधा।

---

अनुप्रासालङ्कारमाह—वर्णसाम्येति। स्वरसादृश्यमुत्कर्षायैव, क्वचित्तद्वैसादृश्येऽपि। यथा—'कुपितकपिकपोलक्रोडताम्रः शशाङ्कः' इत्यत्र। कचित्तु स्वरसादृश्यं विना अनुप्रास एव न भवति ; यथा 'धतचूतप्रसूनः' इत्यादौ। तथा च स्वरमात्रसादृश्यं स्वरवैसादृश्येऽपीत्यस्य व्यावर्त्तनीयं बोध्यम्। संज्ञाव्युत्पत्तिमाह—रसादीति।

छेकवृत्तिगत इति। गतः सम्बन्धी। तथा च छेकानां विदग्धानां सम्बन्धी वक्तुर्वैदग्ध्यमात्रप्रतिपादक इत्यर्थः। (A) स्फुटरसादिरहितनीरसत्वे तद्बोध्यम्। रस-

---

योजनायां काकैवाऽन्यार्थकवाक्यस्यान्यथा योजनं प्रतीयते तथापि विनैव काका 'एष्यति सखि वसन्तसमयेऽसौ' इत्यभिधयैवाभिमतार्थलाभसम्भवे तस्या वैचित्र्यं विच्छित्त्रायमाणमित्यलङ्कार एव दुर्घटः सम्पद्यते, वैचित्र्यस्यैवालङ्कारप्रयोजकत्वात्। परमत्र सम्पूर्णः श्लोक एव नायिकयोक्तः सख्या चावृत्तः। विशेषस्त्वेषः—नायिकया 'नैष्यती'ति निषेधपरतया कथितस्य वाक्यस्य सखी तु नैष्यति ? अपि त्वेष्यत्येवेति काका विधिपरतया योजनं कृतवती। इदमेवात्र वैचित्र्यं यदेकत्रैव वाक्ये स्वरमात्रभेदेन निषेधस्य विध्यर्थतया परिणतिः।

काकोर्वैचित्र्यमाह—काव्यप्रदीपः—"इयञ्च न वाकोवाक्यमात्रे (उक्तिप्रत्युक्तिमात्रे)। किन्तु स्वतोऽप्यन्येनोक्तस्यान्यथा योजनमात्रे, न्यायसाम्यात्। यथा मम—

कृष्णो वैरिविमर्दने हरिपदप्रीत्यर्जने त्वर्जुनः
पीतः पङ्कजलोचनाभिरभितो नेत्राञ्चलैश्चञ्चलैः।
रक्तः सज्जनसङ्गमेषु करणश्रेणीमणे श्रीधर
स्थाने वर्णचतुष्टयस्य भुवने भर्त्ता भवान् गीयते॥

अत्र वर्णचतुष्टयस्य भर्त्ता श्रीधर इति सार्वलौकिकं वाक्यमन्यथा श्लेषादिनाऽस्माभिः समर्थितम्।" इति।

(A) स्फुटरसादीति। अत्र 'द्वन्द्वात् परं यच्छ्रूयते तल्लभते प्रत्येकमभिसम्बन्धम्' इति न्यायेन स्फुटरसादिरहितत्वे नीरसत्वे चेत्यर्थो बोध्यः। एतच्च भाक्तानुप्रासाभिप्रायेणोक्तमित्यवधेयम्, अन्यथा नीरसस्थलेऽलङ्कारसामान्यलक्षणमेव नावतरेदिति कुतस्तद्विशेषस्य च्छेकानुप्रासस्यावतारचिन्ता ? यद्वा नीरसत्व इति प्रकृतरस-प्रतिकूलवर्णघटितत्व इत्यर्थः। तत् छेकानुप्रासत्वम्।

छेका विदग्धाः, (A)वृत्तिः नियतवर्णगतो रसविषयो व्यापारः। (B)गत इति छेकानुप्रासो वृत्त्यनुप्रासश्च।

किं तयोः स्वरूपम् इत्याह—

(१०६) सोऽनेकस्य सकृत्पूर्वः—

अनेकस्य अर्थाद् व्यञ्जनस्य सकृदेकवारं सादृश्यं छेकानुप्रासः। उदाहरणम्—

ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी।

दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम्॥ ३४८॥

---

सत्त्वे तु वृत्तिसम्बन्धी। वृत्तिर्हि रसनिष्ठगुणव्यञ्जना तज्जनकतया तत्सम्बन्धीत्यर्थः। रसविषयइति, रसनिष्ठगुणव्यञ्जने रसस्यापि विषयीकरणात्। गत इत्युत्कीर्त्य तद्वशात् संज्ञाद्वयमाह—छेकानुप्रास इति।

सकृदिति, सकृदपीत्यर्थः। बहुशस्तु सुतरामिति भावः। पूर्वम्छेकानुप्रासः।

ततोऽरुणेति। प्रातश्चन्द्रवर्णनमिदम्। अत्र स्पन्दमन्दीति गण्डपाण्डुति च संयुक्तानेकवर्णसकृत्त्वम्। कामक्षामकामिनीति(C)अनेकवर्णासकृत्त्वम्। एवं 'ततोऽरुणपरिस्पन्दमन्द इन्दुरसुन्दर' इति करणे संयुक्तानेकवर्णानामप्यसकृत्त्वं बोध्यम्। प्रातश्चन्द्रवर्णनाच्च न स्फुटरसभावादिरिति न वृत्त्यनुप्रासः किन्तु वक्तुर्वैदग्धीमात्रव्यञ्जनाच्छेकानुप्रासः।

---

(A) 'वृत्तिश्च मधुरादिरसानुगुणनियतमसृणादिवर्णगतो रसविषयो व्यापारो व्यञ्जनाख्यः' इति प्रदीपः।

(B) गत इति। तत्रापि प्रागुक्तन्यायाद् गतपदस्य छेके वृत्तौ चान्वयात्तदर्थलाभः।

(C) अनेकेति। नैतत् सर्ववादिसम्मतम् असकृत्साम्ये छेकानुप्रासस्य विषयतानभ्युपगमात्। "अत्र स्पन्दमन्दीत्यत्र नकारदकारात्मकस्य गण्डपाण्डुत्यत्र च णकारडकारात्मकस्यानेकव्यञ्जनस्य सकृत् साम्यमिति छेकानुप्रास इति प्रदीपचन्द्रिकादिषु स्पष्टम्। सारबोधिनीकारास्तु—व्यवहितस्याप्यनेकस्य व्यञ्जनस्य सकृत् साम्ये छेकानुप्रासं मन्यमानाः 'स्पन्दमन्दीत्यत्र कामकामीत्यत्र नकारदकारयोः ककारमकारयोरप्यनेकस्य सकृत् साम्यम्' इत्याहुः। एवमुद्योतकारा अपि 'नकारदकारस्य णकारडकारककारमकाराणामनेकेषां सकृत् साम्यम्' इत्याहुरिति बालबोधिनीकाराः। एतेन कामकामिनीत्यत्रापि वर्णसाम्यमनेकेषामभिप्रेतमिति प्रतिभाति। तच्च सकृदेव न त्वसकृत्। अयन्तु कामकामिन्योरिव क्षाम इत्यस्यापि सादृश्यघटकतामङ्गीकृत्यासकृत्साम्यमित्युक्तवानिति ज्ञेयम्।

(१०७)——————एकस्याप्यसकृत् परः ॥ ७९ ॥

एकस्य, अपिशब्दादनेकस्य व्यञ्जनस्य द्विर्बहुकृत्वो वा सादृश्यं वृत्त्यनुप्रासः।

तत्र—

(१०८) माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते।

(१०९) ओजःप्रकाशकैस्तैस्तु परुषा—

उभयत्रापि प्रागुदाहृतम्।

(११०)——————————कोमला परैः ॥ ८० ॥

परैः शेषैः। तामेव केचिद् ग्राम्येति वदन्ति।

उदाहरणम्—

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः।
अलमलमालि मृणालैरिति वदति दिवानिशं बाला ॥ ३४९ ॥

---

एकस्यापीति। 'परः' वृत्त्यनुप्रासः। अपिशब्दादिति। तथा च काव्यस्य [1]स्फुटरसवत्त्वे एकस्यानेकस्य वा असकृत्त्वे वृत्त्यनुप्रासत्वम् किन्त्वनेकस्य सकृत्त्वे [2]रसानुपकारकत्वात् सरसकाव्येऽपि [3]न वृत्त्यनुप्रासत्वं किन्तु छेकानुप्रासत्वमेव। (A)एकस्य सकृत्त्वे तु क्वापि नानुप्रासत्वमिति निष्कर्षः[4]।

उभयत्रेति। अनङ्गरङ्गेत्यादिकमुपनागरिकायां मूर्द्ध्नामुद्वृत्तेति परुषाया-मुदाहृतमित्यर्थः। (B)

अपसारयेति। (C)अत्र सानुस्वारत्वेन रेफस्य लघुत्वाभावात् न माधुर्य-व्यञ्जकत्वम्।

---

(A) "यत्तु श्रीवत्सलाञ्छनभट्टाचार्यैरुक्तं 'अत्रैकस्य सकृत्साम्येऽपि वृत्त्यनुप्रासमिच्छति यथा व्याधूतचूताङ्कुरेत्यत्र तकारस्य' इति, तत् प्रामादिकम्, तत्र 'ऊत ऊत' इत्यस्य छेकाभासत्वात्। न ह्येकस्य व्यञ्जनमात्रस्य सकृदावृत्तौ कश्चिच्चमत्कारोऽनुभूयते। एवञ्च प्रदीपकारैर्वृत्तिं व्याख्याय यदुक्तं 'वस्तुतस्तु छेकानुप्रासभिन्नं लक्ष्यम् अन्यथैकस्य सकृदावृत्तेरसङ्ग्रहापत्तेः, एवञ्चैकस्य वर्णस्य सकृदसकृद्वा अनेकस्य त्वसकृत् सादृश्यं वृत्त्यनुप्रास इति पर्यवसन्नम्' इति तदीर्ष्यामात्रम्। न खलु वाग्देवतावतारवृत्तिकारोक्तं ब्रह्मणाऽप्यतिवर्त्तितुं शक्यमित्यसकृदावेदितमस्माभिस्तत्र तत्रेति सुधीभिर्द्रष्टव्यमि"ति सुधासागरकृतो भीमसेनमहाशयाः।

(B) व्याख्यातमिदं टीकाकृता अष्टमोल्लासे माधुर्यौजसोरुदाहरणावसरे।

(C) अत्र विशेषस्त्वस्माभिरष्टमोल्लासे ९९ कारिकायाः पादटीकायामुदलेखीति तत्रैव द्रष्टव्यम्।

---

1. 'सरसत्वे' इति ग-पाठः। 2. 'गुणाव्यञ्जकत्वादि'ति ग-पाठः। 3. 'न वृत्त्यनुप्रासत्वं किन्तु' इति ग-पुस्तके नास्ति। 4. 'धूतचूतेत्यत्र तु स्वरसाहचर्यादिकत्वमित्यवधेयम्' इत्यधिकं ख-पुस्तके।

(१११) केषाञ्चिदेता वैदर्भीप्रमुखा रीतयो मताः ।

एतास्तिस्रो वृत्तयः वामनादीनां मते वैदर्भी[1]गौडीयापाञ्चाल्याख्या रीतयो मताः ।

(११२) शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः ॥ ८१ ॥

शब्दगतोऽनुप्रासः शब्दार्थयोरभेदेऽप्यन्वय(A)मात्रभेदात् लाटजनवल्लभत्वाच्च लाटानुप्रासः । एष पदानुप्रास इत्यन्ये ।

(११३) पदानां सः—

स इति लाटानुप्रासः । उदाहरणम्—

यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ।
यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ॥३५०॥

---

वैदर्भीगौडीयेति । तेनोपनागरिकानुप्रासो वैदर्भी रीतिः, परुषानुप्रासो गौडीया, कोमलानुप्रासः पाञ्चाली ।

इत्थं वर्णानुप्रासप्रभेदमुक्त्वा शब्दानुप्रासमाह—शाब्दस्त्विति । तात्पर्येति [2]उद्देश्यविधेयभावेन यत् तात्पर्यं तद्विषयार्थमात्रतो भेदेऽपीत्यर्थः । मात्रपदार्थव्यवच्छेदः, स च यमकव्यावृत्तये कृत इति बोध्यम्[2]* । शब्दार्थयोरिति । शब्दयोरर्थयोश्चेत्यर्थः । शब्दश्च पदम् । तयोर्भेदे तु वक्ष्यमाणं यमकमेवेति बोध्यम् ।

(B)'पदानाम्' अनेकपदानाम् । यस्य नेति । ( अत्र ) पूर्वार्द्धे तुहिनदीधितिरपि तापकत्वाद्दवदहनः परार्द्धे तु दवदहनोऽपि तुहिनदीधितिर्दुःखाजनकत्वादिति तात्पर्यविषयस्योद्देश्यविधेयभावेनान्वयस्य (C)भेदः । पदार्थानान्तु न भेदः । यस्येत्याद्यनेकपदानामयमनुप्रासः ।

---

(A) मूले 'भेदे तात्पर्यमात्रतः' इत्यस्य वृत्तौ 'अन्वयमात्रभेदादि'त्यर्थोक्तेरयमाशयः—तात्पर्यविषयस्तावच्छब्द-तदर्थ-तत्सम्बन्धाः । अत्र तु शब्दार्थयोः पौनरुक्त्यमेव लक्षणघटकमिति तयोर्भेदं व्याहतमिति मत्वा तमपहाय सम्बन्धापरपर्यायमन्वयमात्रमुपात्तमिति ।

(B) 'पदानामि'ति बहुवचनमनेकोपलक्षणम् , अन्यथा द्वयोः पदयोरावृत्तौ षष्ठभेदापत्तेरि'ति प्रदीपकृत् ।

(C) 'अत्र यद्यपि पूर्वार्द्धे दवदहनशब्दस्य परार्द्धे तुहिनदीधितिशब्दस्यार्थान्तरसंक्रमित-

---

1. 'गौडी'ति पाठो बहुषु । 2. 'तात्पर्यविषयान्वयमात्रभेदेऽपीत्यर्थः' क-ग ।

(११४)——————————पदस्यापि—

अपिशब्देन स इति समुच्चीयते। उदाहरणम्—

वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः।
सुधाकरः क्व नु पुनः कलङ्कविकलो भवेत्॥ ३५१॥

(११५)————————वृत्तावन्यत्र तत्र वा।

नाम्नः स वृत्त्यवृत्त्योश्च—

एकस्मिन् समासे भिन्ने वा समासे समासासमासयोर्वा नाम्नः प्रातिपदिकस्य न तु पदस्य सारूप्यम्।

---

पदस्यापीति। एकपदस्यापीत्यर्थः। अपिशब्देनेति, अपिशब्दान्तेनेत्यर्थः, तेन पदस्येति षष्ठ्यन्तस्याकाङ्क्षया तत्सम्बन्धिनः स इत्यस्य समुच्चयो बोध्यः, यथाश्रुते तु षष्ठ्यन्तोत्तरापिशब्देन प्रथमान्तसमुच्चयाव्युत्पत्तेः स्वपूर्ववर्त्तिसमानाकारकसमुच्चयस्यैव व्युत्पत्तिसिद्धत्वात्।

वदनमिति। अत्र पूर्वार्द्धेन वदने सुधाकरं रूपयित्वा तत्रैव परार्द्धेन संशेते सुधाकरः क्व न्विति। अस्या वदनं तावत् कलङ्कशून्यम्, सुधाकरः पुनः क्व न्वेवं भवेदित्यर्थः। यद्वा, कलङ्केन विकलो निकृष्टः सुधाकरः क्व नु भवेत् अकलङ्के अस्या मुखे रूपणे सुदूरपराहत एव भवेदित्यर्थः। अत्र सुधाकररूपैकपदमात्रानुप्रासः।

इत्थं विभक्त्यन्तस्य पदत्वेन तदावृत्त्या द्विविधं लाटानुप्रासमुक्त्वा समासैकदेशस्य नाममात्रत्वेन विभक्त्यन्तसमुदायरूपत्वाभावात्तत्र त्रिविधं तमुदाहरति—वृत्तौ इति, वृत्तौ समासे। तत्रैव त्रैविध्यमाह—अन्यत्रेत्यादि। (A)उदाहरिष्यमाणश्लोकस्य क्रमानुरोधात्तत्र वेत्यादिक्रमेणैवेदं व्याचष्टे—एकस्मिन्निति। वृत्त्यवृत्त्योश्चेतीत्यस्य व्याख्या—समासासमासयोरिति। न तु पदस्येति, विभक्त्यन्तात्मकस्य

---

वाच्यत्वान्नार्थभेदस्तथाऽपि शब्दार्थमात्रेणोदाहरणम्। यद्वा अविशिष्टपदावृत्तेरेवोदाहरणं द्रष्टव्यम्' इति प्रदीपः। 'अविशिष्टानां यस्य सविधे इत्यादिपदानामावृत्तेरेवेदमुदाहरणं न तु दवदहनतुहिनदीधितिपदयोरित्यर्थः' इति प्रभा।

(A) उदाहरिष्यमाणेति, तथा च 'सितकरकरे'त्युदाहरणे आदौ समस्तपदयोरुपादानान्मूले पश्चाद्गृहीतमपि समासार्थकं 'तत्र' इति पदं वृत्तौ पूर्वं व्याचष्ट इति भावः।

उदाहरणम्—

सितकरकररुचिरविभा विभाकराकार धरणिधर कीर्तिः ।
पौरुषकमला कमला साऽपि तवैवास्ति नान्यस्य ॥ ३५२ ॥

(११६)———तदेवं पञ्चधा मतः ॥ ८२ ॥

(११७) अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः ।
यमकम्———

पदस्य तथात्वे पूर्वोक्तद्विविधपदानुप्रासान्तर्भावापत्तेरिति भावः। सितकरेति। व्याख्यातमिदं दोषोल्लासे ( ३१२ श्लो० )। [1]अत्र सितकरकरेत्येकसमासैकदेशपदस्य तस्यैवैकदेशे, रुचिरविभाविभाकरेति भिन्नसमासैकदेशस्य समासान्तरैकदेशे, पौरुषकमला कमलेति समासस्यैकदेशस्यासमासे आवृत्तिः[1]*। अत्र च पौरुषमेव कमलमधिष्ठानपद्मं यस्या इति यत् (A)पूर्वं व्याख्यातं तादृशार्थकत्वाभिप्रायेण नेदमुदाहरणम्, तदा पदार्थभेदेन यमकत्वस्यैव प्रसक्तेः। किन्तु पौरुषलक्ष्मीरिव लक्ष्मीरित्यर्थकत्वाभिप्रायेणेदमुदाहृतमिति मन्तव्यम्।

तदेवं पञ्चधेति, पदानां पदस्य एकसमासे भिन्नसमासे समासासमासयोश्चेति पञ्चविधो लाटानुप्रास इत्यर्थः।

यमकालङ्कारमाह—अर्थे सतीति। लाटानुप्रासव्यवच्छेदार्थं भिन्नानामित्यवश्यं वाच्यम्, ततश्च 'शमरतेऽमरतेजसी'त्यादौ पदद्वयैकदेशवर्णैर्निरर्थकैर्यमकेऽव्याप्तिः स्यादतोऽर्थे सतीत्युक्तम्। तथा चार्थसत्त्वे पदार्थघटितं लक्षणम् अर्थासत्त्वे पुनः श्रुतिमात्रमेवेति लक्षणद्वयेऽभिप्रायः। यद्यपि लक्षणद्वयपक्षे सत्यन्तवैयर्थ्यं तथाऽपि सत्यन्तबलादेव निरर्थकानामिति लक्षणप्राप्त्या तत्सार्थकत्वं बोध्यम्। (B)अनुगमस्तु [2]एकार्थ-

(A) पूर्वमिति सप्तमोल्लासे। यत् पुनस्तत्रापि लाटानुप्रासे कथितपदस्य गुणत्वं दिदर्शयिषता टीकाकृता तथाविधं व्याख्यानं व्यधायि तदपि न प्रकृतस्थलाभिप्रायेण, अपि तु पद्यस्यार्थान्तरमपि यदत्र सम्भवेत्तदाविष्कारचिकीर्षयैवेति मन्तव्यम्। यद्वा तत्र लाटानुप्रासपदम् आवश्यकपदावृत्तिमात्रपरम्, एवञ्च यमकेऽपि तथात्वं युक्तिसाम्यान्नानुपपन्नमिति टीकाकृतामाशयः।

(B) अनुगमस्त्विवति। एकोऽर्थो येषां ते एकार्थास्तद्भिन्नानामित्यर्थः। तथा च—भिन्नार्थयोः सार्थकपदयोः, सार्थकनिरर्थकपदयोः, केवलनिरर्थकपदयोश्च संग्रहः, सर्वत्रैवैकार्थकभेदसत्त्वादित्यवधेयम्।

1. अयमंशः क-ख-पुस्तकयोर्नास्ति। 2. 'एकार्थकभिन्नानामि'ति क-पाठः।

'समरसमरसोऽयमि'त्यादावेकेषामर्थवत्त्वेऽन्येषामनर्थकत्वे भिन्नार्थानामिति न युज्यते वक्तुमिति अर्थे सतीत्युक्तम्। सेति, सरो रस इत्यादिवैलक्षण्येन तेनैव क्रमेण स्थिता।

(११८)——(A) पादतद्भागवृत्ति तद् यात्यनेकताम् ॥ ८३ ॥

प्रथमो द्वितीयादौ[३], द्वितीयस्तृतीयादौ[२], तृतीयश्चतुर्थे[१], प्रथमस्त्रिष्वपीति [१] सप्त। प्रथमो द्वितीये तृतीयश्चतुर्थे [१]

---

भिन्नानामित्येवंलक्षणेनेत्यभिप्रायः। **समरेति**। समरेऽभीतत्वेन समरसः समानरस इत्यर्थः। अत्र समरपदं सार्थकं समरसपदैकदेशो निरर्थकः। इदमप्युपलक्षणं द्वयोर्निरर्थकत्वेऽपीत्यपि बोध्यम्। **इत्यादिवैलक्षण्येनेति**, इत्यादितो वैलक्षण्येनेत्यर्थः।

**पादतद्भागेति**। तद् यमकं पादवृत्ति तद्भागवृत्ति चेत्यतोऽनेकतां यातीत्यर्थः। तत्र पादावृत्त्या एकादशविधत्वं दर्शयति—**प्रथम** इति, पाद इति शेषः। **द्वितीयादौ** इति, आवर्त्तेत इति शेषः। द्वितीये तृतीये चतुर्थे चेति त्रिविधम्। [1]**द्वितीयस्तृतीयादाविति**। द्वितीयस्य प्रथमे आवृत्तिस्तु प्रथमस्य द्वितीये आवृत्तिरूपैवेति पूर्वत्रैविध्य एव तत्प्रवेशात्तदपहायैव द्वैविध्यमिदं दर्शितम्[1]*। एव-

---

(A) पादतद्भागवृत्तीति। 'प्रथमपादो यदि द्वितीये यम्यते तदा मुखं नाम यमकम्। यथा—

'दर्पकान्तक विराजमानयाऽदर्प-कान्त-कविराज-मानया।
त्वत्प्रसादविधिलब्धया धिया साधवो दधति वैबुधीं धुरम् ॥' इति।

तृतीये चेत्तदा सन्दंशः।

यथा—उदाहृतम् 'सन्नारी'त्यादि।

चतुर्थे चेत्तदा आवृत्तिः। यथा—

'मुदाऽऽरताडी समराजिराऽजितः प्रवृद्धतेजाः प्रथमो धनुष्मताम्।
भवान् बिभर्तीह नगश्च मेदिनीमुदार-ताडी-समराजि-राजितः ॥' इति।

एवं द्वितीयपादश्चेत्तृतीये तदा गर्भः। यथा—

'अध्यास्यते शमजुषा भवतः प्रसादादामोदराजि-तरु-चारु चिरं जनेन।
दामोदरा जितरुचा रुचिरञ्जनेन कीर्णं तृणेन मृदुना वनमार्त्तवेन ॥' इति।

---

1. 'तथा चेदं वयम्। द्वितीयस्तृतीयादाविति ; द्वितीयस्य प्रथमे आवृत्तिस्तु प्रथमस्य द्वितीये आवृत्तिरूपैवेति पूर्वगणनाप्रविष्टत्वान्न गणिता' इति पाठः क-पुस्तके।

चतुर्थे चेत् सन्दष्टकम्। यथा—

'शारदीमिव नदीं प्रसादिनीमुच्च-कैरव-सरोज-राजिताम्।
स्तोतुमेष मम मूर्त्तिमैश्वरीमुच्चकैरवसरोऽजराजिताम्॥' इति।

तृतीयश्चेच्चतुर्थे तदा पुच्छम्। यथा—

'उत्तुङ्गमातङ्गकुलाकुले यो व्यजेष्ट शत्रून् समरे सदैव।
स सारमानीय महारि चक्रं ससार मानी यमहारिचक्रम्॥' इति।

प्रथमस्त्रिषु चेत्तदा पङ्क्तिः। महायमकमिति केचित्। यथा—

'तनुशङ्करवैरसमायतया-तनु शङ्कर वै रस मायतया।
तनु शं करवै रसमायतया-तनुशं कर वैरसमायतया॥' इति।

पादत्रययमकन्तु न चमत्कारकारि [ प्रत्युत दोषः ] अतो न प्रयुक्तम्। इत्येकैकपादावृत्तौ सप्त भेदाः। प्रथमो द्वितीये तृतीयश्चतुर्थे चेत्तदा युग्मकम्।

यथा—उदाहृतं 'वि-नाऽयमेनोनयते'त्यादि।

प्रथमश्चतुर्थे द्वितीयस्तृतीये चेत्तदा परिवृत्तिः। यथा—

'मुदा रताऽसौ रमणी यता यां स्मरस्यऽदोऽलंकु-रुतेन वोढा।
स्मरस्यदोऽलं कुरुतेऽनवोढामुदारतासौ रमणीयतायाम्॥' इति।

इत्यर्द्धाभ्यासमृते पादद्वयावृत्तौ द्वयमिति नव भेदाः। अर्द्धावृत्तिस्तु समुद्गः। यथा—

'कलितमोहनमारव-राजितं स्मर हरं शिखि चन्द्रकलाऽऽञ्छितम्।
कलितमोहन-मारवराऽजितं स्मरहरं शिखिचन्द्रक-लाञ्छितम्॥' इति॥

श्लोकावृत्तिर्महायमकम्।

यथा—उदाहृतम् 'स त्वारम्भरतोऽवश्यमि'त्यादि।

तदुभयमपि पादावृत्तिविशेष एवेत्येकादश पादयमकभेदाः।

पादभागावृत्ति बहुभेदम्। तथा हि—द्विधा विभक्तेषु पादेषु प्रथमादिभागानामाद्यभागाः पूर्ववद् द्वितीयादिपादेष्वाद्यभागेष्वेव यदि यम्यन्ते तदा पूर्ववन्मुखादयो दश भेदाः। श्लोकान्तरे भागावृत्तिर्न स्वदत इति श्लोकावृत्तिस्थानीय एकादशो भेदो भागावृत्तौ नास्ति। एवं प्रथमादि-पादानाम् अन्त्यभागस्य द्वितीयादिपादान्त्यभागेष्वेव यमने पूर्ववद्दश भेदाः। एवं द्विखण्डीकृतेषु पादेषु विंशतिः। त्रिखण्डीकृतेषु त्रिंशत्, चतुःखण्डीकृतेषु चत्वारिंशद्भेदाः स्थानापरिवर्त्तिनो भवन्ति।

अथ स्थानपरिवर्त्तनभेदाः—प्रथमादिपादानामन्त्यादिभागा द्वितीयादिपादानामाद्यादिभागेषु यम्यन्त इत्याद्यन्वर्थतानुसारेणान्ताद्यादियमकादयः प्रभेदा भवन्ति। तथा हि—द्विखण्डे यथा प्रथमपादस्यान्त्यमर्द्धं द्वितीयपादस्याद्यार्द्धे चेद् यम्यते तदा अन्तादियमकम्। प्रथमभाग एव चेदन्त्यभागे तदा आद्यन्तयमकम्। एवं प्रथमपादस्याद्यन्तभागौ द्वितीयस्यान्त्यादिभागयोर्यदि

प्रथमश्चतुर्थे द्वितीयस्तृतीये [१] इति द्वे तदेवं पादजं नवभेदम्। अर्धावृत्तिः श्लोकावृत्तिश्च इति द्वे। द्विधा विभक्ते पादे प्रथमादिपादादिभागः पूर्ववद् द्वितीयादिपादादिभागेषु, अन्तभागोऽन्तभागेष्विति विंशतिर्भेदाः। श्लोकान्तरे हि नासौ भागावृत्तिः। त्रिखण्डे त्रिंशत् चतुःखण्डे चत्वारिंशत्।

प्रथमपादादिगतान्त्यार्धादिभागो द्वितीयपादादिगते आद्यार्धादिभागे यम्यते इत्याद्यन्वर्थतानुसरणेनानेकभेदम्। अन्त्यादिकम्

मुत्तरत्रापि बोध्यम्। **प्रथमस्त्रिष्वपीति**—पादचतुष्टयं सममित्यर्थः। प्रथमो द्वितीये तृतीयश्चतुर्थ इत्येवं मिलितमेकम्, एवमुत्तरत्रापि मिलनं बोध्यम्। **अर्द्धावृत्तिरिति**। इदं प्रथमस्य तृतीये द्वितीयस्य चतुर्थे मिलनेनावृत्तिरूपम्। श्लोकावृत्तिस्तु पूर्वश्लोकीयपादचतुष्टयस्यैव परश्लोकीयपादचतुष्टये आवृत्तिरूपम् अत इदमपि पादावृत्तिरूपमेव। [1]इत्थमेकादशधा पादावृत्तिमुक्त्वा भागावृत्तिमाह[1]*—**द्विधेति**। पादस्य द्विधा विभक्तत्वे एकपादीयादिभागानामन्यपादीयादिभागेष्वेकपादीयान्त्यभागानामन्यपादीयान्त्यभागेषु च एवं रीत्या यमने तद्द्वैगुण्येन द्वाविंशतिविधत्वप्रसक्तावाह—**श्लोकान्तरे हीति**। अत उक्तं—**विंशतिरिति**। एवं पादस्य त्रिखण्डादित्वे एवं रीत्या भागं प्रति दशवृद्ध्याऽनेकविधत्वमित्याह—**त्रिखण्ड इत्यादि**।

एवं सजातीयभागस्य सजातीयभागे आवृत्तिमुक्त्वा विजातीयभागानामपि दशधा आवृत्तिं तत्समुच्चयेन चाधिकामपि दर्शयति—**प्रथमपादादीति**। अन्वर्थतानुसारे-

यम्येते तदा आद्यन्तान्तादियमकसमुच्चयः। अत्र त्रिखण्डचतुःखण्डयोः पूर्वपादमध्यभाग उत्तरपादस्यादिभागे यदि यम्यते तदा मध्यादियमकम्। पूर्वस्यादिभागश्चेत्तदुत्तरपादस्य मध्यभागे तदा आदिमध्ययमकम्। पूर्वस्य मध्यादिभागौ चेदुत्तरस्याद्यमध्ययोस्तदा मध्याद्यादिमध्ययोः समुच्चयः। एवं प्रथमस्यान्त्यभागो द्वितीयस्य मध्यभागे चेत्तदा अन्त्यमध्यम्। पूर्वस्य मध्यभागश्चेद्द्वितीयस्यान्त्यभागे तदा मध्यान्तिकम्। पूर्वस्यान्त्यमध्यभागौ चेद्द्वितीयस्य मध्यान्त्यभागयोस्तदान्त्यमध्यमध्यान्त्ययोः समुच्चयः। यद्यपि पूर्वस्यादिभाग उत्तरस्यान्त्यभागे चेत्तदा आद्यन्तकं मध्यभागस्त्वाद्यभागे चेत्तदा अन्तादिकमित्यादि प्रकारद्वयं सम्भवति, तथापि द्विखण्डान्तर्गतमेव तदिति पृथङ् न गण्यते। सर्वेषां चैषामपरः समुच्चयः इति भिन्नपादे यमने प्रभेदाः। एवं तस्मिन्नेव पादे आद्यादिभागानां मध्यादिभागेष्वावृत्तौ भेदा द्रष्टव्या इत्यादि प्रदीपे स्पष्टम्।

[ अत्रत्योदाहरणानि निर्णयसागरमुद्रितसाहित्यदर्पणादाहृतानि। ]

1. 'एवमेकादशधा पादयमकं बोध्यम्' इति पाठो ग-पुस्तके।

आद्यन्तिकम्, तत्समुच्चयः। मध्यादिकम्, आदिमध्यम्, अन्तमध्यम्, मध्यान्तिके, तेषां समुच्चयः। तथा तस्मिन्नेव पादे आद्यादिभागानां मध्यादिभागेषु अनियते च स्थाने आवृत्तिरिति प्रभूततमभेदम्। तदेतत्काव्यान्तर्गडुभूतम् इति नास्य भेदलक्षणं कृतम्। दिङ्मात्रमुदाह्रियते—

सन्नारीभरणोमायमाराध्य विधुशेखरम्।
सन्नारीभरणोऽमायस्ततस्त्वं पृथिवीं जय॥ ३५३॥

(A)वि-नाऽयमेनो नयताऽसुखादिना विना यमेनोनयता सुखादिना।
महाजनोऽदीयत मानसादरं महाजनोदी यतमानसादरम्॥ ३५४॥

णैव नामान्याह—अन्त्यादिकमिति। अन्त्यस्यादौ यमने अन्त्यादिकं दशविधम्। एवमाद्यस्य आद्ये यमने आद्यन्तिकमपि तावत्, तदुभयसत्त्वे तु तत्समुच्चयः। एवं मध्यादिकादावपि बोध्यम्। इत्थं भिन्नपादयमनमुक्त्वा एकस्मिन्नपि पादे एकभागस्यापरभागे यमनमाह—तथा तस्मिन्नेवेति। अनियमेनाप्येकदेशे यमनमाह—अनियते च स्थान इति[1]। 'गडुः' विषमग्रन्थिः।

सन्नारीति। त्वं विधुशेखरम् आराध्य [2]आराधय। राधिरत्र (B)पञ्चम्यन्तो दैवादिकः। ततोऽनन्तरं त्वं पृथिवीं जय। कीदृशं विधुशेखरम्? सतीर्नारीर्बिभर्त्ति पालयतीति सन्नारीभरणा तादृशीमुमां याति पत्नीत्वेन प्राप्नोतीति यातेः क-प्रत्ययः तादृशम्। त्वं कीदृशः? सन्ना अवसन्ना अरीणामिभा यस्मात्तादृशो रणो यस्य तादृशः। अमायो मायायुद्धरहितः, बलेनैव जयित्वात्। अत्र प्रथमपादस्य तृतीयपादे यमनम्(C)।

वि-नाऽयमिति। मृतं जटायुषं दृष्ट्वा रामं प्रति लक्ष्मणस्येयमुक्तिः। अयं 'वि-ना' विपुरुषः पुंपक्षी जटायुः 'एनः' अपराधं विना 'यमेन' 'मानसात्' मनसः 'अरम्' अत्यर्थम् 'अदीयत' अखण्ड्यत अत्यन्तध्वस्तमनःसंयोगः कृतः, अमार्यतेत्यर्थः। यमेन

(A) वि-नाऽयमिति। वि-ना अयम् एनः नयता असुखादिना विना यमेन ऊनयता सुखादिना। महाजनः अदीयत मानसात् अरं महाजनोदी यतमानसादरम् इति पदच्छेदः।

(B) पञ्चम्यन्त इति पञ्चमी अनुमतौ धातूत्तरं जायमाना विभक्तिः, यस्याः पाणिनीये 'लोट्' इति संज्ञा।

(C) इदं सन्दंशः।

1. एतदनन्तरं ख-पुस्तके 'इदञ्च भिन्नाभिन्नपदसाधारणं बोध्यम्' इत्यधिकम्।' 2. 'आराधय' इति ग-पुस्तके नास्ति।

(A)स त्वारम्भरतोऽवश्यमबलं विततारवम्।
सर्वदारणमानैषीदवानलसमस्थितः ॥ ३५५ ॥
सत्वारम्भरतोऽवश्यमवलम्बित-तारवम्।
सर्वदारण-मानैषी दवानलसमस्थितः ॥ ३५६ ॥

---

कीदृशेन ? 'नयता' स्वपुरं प्रापयता। 'असुखादिना' प्राणघातनेन, 'सुखादिना' 'ऊनयता' हीनं कुर्वता, आदिना सुखकारणपरिग्रहः ; इति पूर्वार्द्धार्थः। वि-ना कीदृशः ? महाजनः तथा महाजनोदी—अज क्षेपणे, गुद प्रेरणे इत्याभ्यां महाक्षेपक-क्षेपीत्यर्थः, महाप्रहर्त्तुरपि प्रहर्त्तेति यावत्। तन्नोदनक्रियाविशेषणमाह—यतमानेति। 'यतमानस्य' स्वरक्षापरहिंसाप्रयत्नवतः 'सादम्' अवसादं 'राति' ददाति तादृश-नोदीत्यर्थः। अत्र प्रथमो द्वितीये तृतीयश्चतुर्थे आवृत्तः(B)।

(C)श्लोकावृत्तिमुदाहरति—**स त्वारम्भेति**। प्रबन्धे राजान्तरवर्णनानन्तरं भरत-वर्णनमिदम्। तथा च स त्विति तुशब्दः पूर्ववर्णितराजव्यवच्छेदे। स तु भरतो राजा 'आरम्' अरिसमूहम् 'अवश्यं' स्ववशतामनापन्नम् 'अवलं' स्वापेक्षया दुर्बलम् 'विततारवं' विस्तृतार्त्तरावं 'सर्वदा अरणं' त्यक्तरणञ्च यथा स्यात्तथा 'अवलम्बिततारवम्' आश्रिततरुत्वम् 'आनैषीत्' प्रापयामासेत्येतत्क्रियाविशेषणमबलादित्रयम्। तरुतलप्रेष-णेन दुर्बलं कृतवान् इत्यर्थः। राजा कीदृशः ? 'अलसं' यथा स्यात्तथा 'अवान्' अगच्छन् सत्वरगामीत्यर्थः 'वा गतिगन्धनयोरि'त्यस्य, तथा 'अस्थितः' शत्रूणामस्थि-तक्षकः ; ड-प्रत्ययान्तस्य तक्ष्णोते रूपमिदम्। भरतः कीदृशः ? अवश्यं नियतं सत्वारम्भे सात्त्विकक्रियारम्भे यज्ञादौ रतः न केवलं शत्रुमारणात्तामस इत्यर्थः।

---

(A) स त्वारम्भेति। स तु आरं भरतः अवश्यम् अबलं विततारवं सर्वदा अरणम् अनैषीत् अवान् अलसः अस्थितः, इति प्रथमश्लोके ; सत्वारम्भरतः अवश्यम् अवलम्बिततारवम् सर्वदा-रण-मानैषी दवानलसमस्थितः, इत्यावृत्तश्लोके पदच्छेदः।

स तु प्रकृतो राजा आरमरिसमूहं सर्वदा सर्वकालम् अवश्यं निश्चितं भरतोऽतिशयेन [ अतिशयवाचिनस्तृतीयान्ताद् भरशब्दात्तसिल् ] रणं युद्धम् आनैषीत् प्रापितवान्। आरं कीदृशम् ? अबलं सैन्यशून्यम्। कीदृशः ? अस्थि तस्यति उपक्षिपतीति अस्थितः। ( तसु दसु उपक्षये इत्यस्मात् ) सान्तत्वेऽपि 'अधातोरि'ति निषेधाद्दीर्घत्वाभावः। यद्वा, ए विष्णौ स्थितः तत्पर इत्यर्थः।......अवलम्बितानि घनतया स्वीकृतानि तारवाणि तरुसम्बन्धिवल्कलानि येन तत्।......। इत्युदाहरणचन्द्रिकायां विशेषः।

(B) इदं युग्मकम्।

(C) इदं महायमकम्।

अनन्तमहिमव्याप्तविश्वां वेधा न वेद याम्।
या च मातेव भजते प्रणते मानवे दयाम्॥ ३५७॥

(A)यदानतोऽयदानतो नयात्ययं न यात्ययम्।
शिवेहितां शिवे हितां स्मरामितां स्मरामि ताम्॥ ३५८॥

सरस्वति प्रसादं मे स्थितिं चित्तसरस्वति।
सर स्वति कुरु क्षेत्रकुरुक्षेत्रसरस्वति॥ ३५९॥

---

अत्र सत्वेति पृषोदरादित्वादेकतकारलोपाद् यमकमक्षुण्णम्। तथा सर्वेषां दारुणो हृदयविदारको यो मानः आधिक्येन पूज्यत्वं तदिच्छुः। दवानलसमानं स्थितं (स्थितिः) परदाहकत्वमर्यादा यस्य तादृशः।

भागावृत्तिमुदाहरति—(B)अनन्तेति यदानत इति च। (C)युग्मकमिदम्। ताम् अर्थाद् दुर्गां स्मरामि, यां वेधा अपि न वेद न जानाति, यतोऽनन्तमहिमव्याप्तविश्वां, या च प्रणते मानवे मातेव दयां भजते तथा यदानतो यस्यामानतोऽयं संसारी जनः नयस्य नीतेरत्ययं विप्लवम् अयदानतः शुभावहविधिदानान्न याति। तां कीदृशीं स्मरेणामितां प्राप्तां 'अम भ्रमे'त्यादेर्गत्यर्थस्य रूपमिदम्। अत एव शिवे महेशे ईहितं कामचेष्टा यस्यास्तादृशीम्। तथा अस्माकं शिवे कल्याणे हितामनुकूलाम्। अत्राऽऽद्यश्लोके द्वितीयपादान्त्यभागस्य चतुर्थपादान्त्यभागे आवृत्तिः। परश्लोके तु तत्र तत्रैव पादे पादे आद्यान्तिकम्।

सरस्वतीति। अत्र परार्द्धस्थं सरस्वतीति सम्बोधनम्। हे सरस्वति स्वतिप्रसादं शोभनमतिप्रसादं मे मह्यं सर गच्छ। (D)'स्वत्यतीव च पूजने' इति कोषः। तथा हे

---

(A) यदानत इति। यदानतः अयदानतः न याति अयं नयात्ययम्। शिवे हितां शिवेहितां स्मरामि तां स्मरामिताम्। इति पदच्छेदः।

(B) इदं सन्दष्टकम्। यदानतेति आद्यान्तिकम् आद्यन्तकमिति प्रदीपसम्मतः पाठः।

(C) युग्मकमिदमिति। अनन्तेत्यादिपद्यम् आनन्दवर्द्धनप्रणीते देवीशतके प्रथमम्, यदानत इत्यादिपद्यञ्च तत्रैवोनपञ्चाशत्तममिति बालबोधिनीकाराः। यद्यप्यनयोर्योगो दुर्घट एव तथाप्यकृतप्रकरणादिपर्यालोचनस्य एतच्छ्लोकद्वयमात्रं पश्यतोऽन्वयैक्यात् प्रथमस्य यच्छन्दसाकाङ्क्षतया च युग्मकत्वेन प्रतिभानमनवद्यमेवेति ज्ञेयम् इति।

(D) 'स्वत्यतीव च निर्भरे' इत्यमरः, 'पूजने स्वती' इति च स एव, परं 'स्वत्यतीव च पूजने' इत्याकारः कोषः क्वापि नोपलभ्यते।

ससार साकं दर्पेण कन्दर्पेण स-सारसा ।
शरन्नवाना विभ्राणा नाविभ्राणा शरन्नवा ॥ ३६० ॥

मधुपराजिपराजितमानिनीजनमनःसुमनःसुरभि श्रियम् ।
अभृत(A)वारितवारिजविप्लवं स्फुटितताम्रततताम्रवणं जगत् ॥३६१॥

एवं वैचित्र्यसहस्रैः स्थितमन्यदुन्नेयम् ।

---

देवकुरुक्षेत्रसरस्वति मच्छरीरात्मककुरुक्षेत्रस्थसरस्वतीनामनदि, मम चित्तसरस्वति चित्तसागरे स्थितिं कुरु नद्याः सागरस्थित्यौचित्यात् । 'सरस्वान् सागरोऽर्णवः' इत्यमरः । अत्राद्यान्तिकयोरन्त्यादिकयोश्च समुच्चयः ।

ससारेति । 'नवा' नवीना 'शरत्' ससार आगता, कन्दर्परूपेण दर्पेण साकं सहेत्यर्थः । 'स-सारसा' सपद्मा 'सारसं सरसीरुहम्' इति कोषः । 'नवाना' नवम् अनः शकटं यस्यां तादृशी ; वर्षापगमे शकटप्रवृत्तेः । 'विभ्राणा' वीनां पक्षिणां भ्राणः शब्दो यस्यां तादृशी, शरदि पक्षिशब्दबाहुल्यात् । शरं शरकाण्डं नाबिभ्राणा किन्तु बिभ्राणैव । नञद्वयेनायोगव्यवच्छेदः, तदानीं शरकाण्डस्यावश्यम्भावेनायोगाभावात् । अत्राद्यान्तिकयोरन्त्यादिकयोश्च समुच्चयः ।

मधुपेति । वसन्तकालवर्णनमिदम् । जगत् श्रियम् अभृत । कीदृशं जगत् ? मधुपराज्या भ्रमरश्रेण्या पराजितं त्याजितमानं मानिनीजनानां मनो यत्र तादृशम् उद्दीपिकया भ्रमरश्रेण्या मानिनीनां मनःक्षोभणात् । सुमनोभिः पुष्पैः सुरभि सुगन्धि । तथा वारितो वारिजानां शिशिरकृतविप्लवो यत्र तादृशम् । तथा स्फुटितं प्रफुल्लम् अत एव ताम्रं ततं विस्तृतम् आम्रवणं यत्र तादृशम् । (B)अत्र तत्र तत्रैव पादे भागानियमेन भागावृत्तेः समुच्चयः ।

---

(A) वारितवारिजेत्यादि । "यत्तु [वारिजवारिजेति पाठमाश्रित्य] श्रीवत्सलाञ्छनभट्टाचार्यैर्व्याख्यातं 'वारि जलं तस्माज्जायते उत्पद्यते यस्तादृशो वारिजानां कमलानां विप्लवो नाशो यत्र इति' तदसमञ्जसमिति सुधीभिर्ध्येयम्" इति सुधासागरकाराः । तदसामञ्जस्ये बीजन्तु—अत्र हि भागानियमेन चतुर्षु पादेष्वाद्यवर्णद्वयानन्तरं वर्णत्रयावृत्ति यमकमुदाहृतमिति ज्ञायते । एवञ्च यथास्थितपाठे एव 'अभृ' इत्यक्षरद्वयानन्तरं 'तवारि तवारि' इत्यक्षरत्रितयावृत्त्या प्रक्रान्तभागानियतयमकमिदं स्यात् । असमञ्जसपक्षीयव्याख्याने तु 'वारिज वारिज' इति पाठप्राप्त्या चतुःखण्डपादे द्वितीयभागस्य तृतीयभागे यमनात् प्रक्रमभङ्गः स्यादिति ।

(B) अत्रेत्यादि । 'चतुःखण्डे पादे द्वितीयभागस्य तृतीयभागे यमनं यथा इति प्रदीपकाराः प्राहुः, तदज्ञानविजृम्भितम्, न ह्युदाहरणे वर्णत्रयात्मकद्वितीयभागस्य पुनः श्रुतिः ; न वा

(११९) वाच्यभेदेन भिन्ना यद् युगपद्भाषणस्पृशः।
श्लिष्यन्ति शब्दाः श्लेषोऽसावक्षरादिभिरष्टधा ॥ ८४ ॥

'अर्थभेदेन शब्दभेदः' इति दर्शने 'काव्यमार्गे स्वरो न गण्यते' इति च नये वाच्यभेदेन भिन्ना अपि शब्दा यद् युगपदुच्चारणेन श्लिष्यन्ति भिन्नं स्वरूपमपह्नुवते स श्लेषः। स च वर्ण-पद-लिङ्ग-भाषा-प्रकृति-प्रत्यय-विभक्ति-वचनानां भेदादष्टधा।

---

श्लेषालङ्कारमाह—**वाच्यभेदेनेति**। वृत्तावेवास्य स्फुटा व्याख्या। (A)**अर्थभेदेनेति**। नैयायिकमत एव एकस्य शब्दस्यानेकेऽर्थाः, दर्शनविशेषे तु यावन्तोऽर्थास्तावन्त एव शब्दाः (B) एकेनैव प्रयत्नेनोच्चार्यन्ते एकप्रयत्नोच्चार्यत्वरूपदोषात्तु तद्भेदाग्रह इति मतं दर्शितमनेन। नन्वर्थभेदे उदात्तादिस्वरोऽपि भिद्यते, तथा च स्वरभेदे तदनुकूलोच्चारणप्रयत्नभेदात् कथमेकप्रयत्नोच्चार्यत्वमत आह—**काव्यमार्ग** इति। भिन्नं स्वरूपमिति श्लिष्यन्तीत्यस्य व्याख्या। स्वभेदं न ग्राहयन्तीत्यर्थः। **स श्लेष** इति, तादृशसंश्लेषणमेव श्लेषालङ्कार इत्यर्थः। **अक्षरादिभिरिति** व्याचष्टे—**स चेति**। तत्र पदयोरेकवर्णकृतवैरूप्येऽपि व्याकरणकृतकार्यवशादैकरूप्यं वर्णश्लेषः। तमुदाहरति—

---

भागान्तरकल्पनाऽपि सम्भवति वर्णस्य सिद्धत्वेन भागत्वाभावात्। किन्तु भागमनपेक्ष्यानियतस्थानयमकभेदा अपि भवन्तीति सूचनाय पादेष्वाद्यवर्णद्वयानन्तरं वर्णत्रयावृत्ति यमकमिदमुदाहृतं श्रीवृत्तिकारैरिति तत्त्वम्' इति सुधासागरकाराः।

(A) अर्थभेदेनेति, वर्णश्लेषेऽपि स्वघटितसमुदायद्वारा अर्थभेदो बोध्यः। स्वरूपभेदेनैव तत्र भेदस्यानावश्यकता वा इत्युद्द्योते स्पष्टम्।

(B) एकेनैव प्रयत्नेनोच्चार्यन्त इति। नन्वेकोच्चारणेन सदृशनानाशब्दोत्पत्तिर्दुर्घटा। न चानेकार्थप्रतिपिपादयिषयोच्चारणात्तथा, नानाघटचिकीर्षातः कपालादिसंयोगादेकस्मान्नानाघटोत्पत्त्यापत्तेः। अत्र चक्रवर्त्तिनः—घटादेः समवाय्यसमवायिभेदान्न तथा तदैक्यात्ततसम्भव इत्याहुः। तच्चिन्त्यम्, सामग्र्यैक्ये कार्यैक्यात्; भेदे मानाभावाद् गौरवाच्च। एकस्मादपि शब्दात् 'सकृदुच्चरितः' इत्यादिनियमसत्त्वे आवृत्त्या नानार्थबोधः सम्भवति, आवृत्तिः पुनरनुसन्धानमिति तत्कृतानुपूर्वीभेदाद्वृत्तिभेदाच्च पदभेद इत्याहुः। तदपि न रमणीयम्। आवृत्त्यङ्गीकारे एकवृन्तगतफलद्वयन्यायानुपपत्त्या श्लेषस्य दुरुपपादत्वात्, यत्रानेकत्र क्रमेण प्रकरणादिकमवतरति तत्रावृत्तिरिति सिद्धान्तात्। अपरे तु—द्वितीयक्षणे शब्दजशब्दोत्पत्त्या पदभेदः सम्भवतीत्याहुः। तदपि मौनिमात्रविदित-श्लेषाव्यापकमिति न रमणीयम्। वयन्तु—वस्तुतः एकः शब्दः सकृदुच्चरितः सकृदर्थं गमयति न त्वेकोच्चारणापहुतभेदोऽपीति। श्लिष्टस्योभयत्र तात्पर्यग्राहकस्य सद्भावेऽभावे वा एकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकत्वादुद्बुद्धस्वस्वसंस्कारेण द्वयोर्युगप-

क्रमेणोदाहरणम्—

(१) अलङ्कारः शङ्काकरनरकपालं परिजनो
विशीर्णाङ्गो भृङ्गी वसु च वृष एको [1]गतवयाः ।
अवस्थेयं स्थाणोरपि भवति सर्वामरगुरो-
र्विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ॥ ३६२ ॥

(२) पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम् ॥ ३६३ ॥

(३,८) भक्तिप्रह्वविलोकनप्रणयिनी (A)नीलोत्पलस्पर्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये ।

---

(१) अलङ्कार इति । वक्रे कुटिले विधौ चन्द्रे मूर्ध्नि स्थितवति सति सर्वामरगुरोः स्थाणोर्महेशस्यापीयमवस्था, वयममी पुनर्विधौ भाग्ये मूर्ध्नि वक्रे प्रतिकूले स्थितवति सति सुतरां तादृशावस्थाप्रातियोग्या एवेत्यर्थः । विधाविति शब्दैक्याद्विधुभाग्ययोः, वक्र इति शब्दैक्यात् कुटिलप्रतिकूलयोश्चैकत्वाध्यासादिदमुपपादनीयम् । स्थाणोरवस्थामाह—अलङ्कार इति । शङ्का अशुचित्वशङ्का, भृङ्गिनामा विशीर्णाङ्गः कश्चित् परिजनः । गतवया एको वृषश्च वसु धनमिति । अत्र विधुविधिशब्दान्त्यस्वरात्मकैकवर्णभेदेऽपि सप्तम्यामैकरूप्यम् ।

(२) पदश्लेषमाह—पृथुकेति । न्यूनाधिकवर्णकयोः पदयोर्भेदेऽपि मिलनादैकरूप्यं तत्त्वम् । पृथुकेति, व्याख्यातमिदं दोषोल्लासे ( ३८८ पृः ) । अत्र पृथुकादिपदानां न्यूनाधिकवर्णानां (B)भेदेऽपि मिलनादैकरूप्यम् ।

(३,८) लिङ्गश्लेषं वचनश्लेषञ्चैकत्रैवोदाहरति—भक्तीति । विभिन्नलिङ्गयो-

---

दुपस्थितिस्ततश्च सकृदित्यादिनियमवशात् सदृशनानाशब्दबोधः । तदेतदुक्तं वाग्देवतावतारैः—'अर्थभेदेन शब्दभेदः' इति । शब्दे सादृश्यन्तु—कचित् साहजिकं यथा 'विद्वन्मानसहंसः' इत्यादावखण्डपदश्लेषे युक्तमुत्पश्यामः । एवञ्च एकोच्चारणेन सदृशनानाशब्दोत्पत्तिर्दुर्घटेति रिक्तं वचः' इति सुधासागरेऽनुसन्धेयम् ।

(A) एतेन हरिरत्र कृष्णावतारीत्यवधेयम्, तनुपक्षे यथोक्तविशेषणवत्त्वस्य तत्रैव प्राप्तेः ।

(B) भेदेऽपीति पृथुकानां बालानामार्त्तस्वरस्य पात्रम्, पक्षे पृथु विपुलं कार्त्तस्वरस्य काञ्चनस्य पात्रं यत्रेत्यादिक्रमेणेत्यादि व्याख्यात एव विशेषेणावगन्तव्यम् ।

---

1. 'बहुवयाः' इति पाठः क्वचित् ।

लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ॥ ३६४ ॥

एष [1]एव च वचनश्लेषोऽपि ।

(४) महदे सुरसन्धम्मे तमवसमासङ्गमागमाहरणे ।
हरबहुसरणं तं चित्तमोहमवसर उमे सहसा ॥ ३६५ ॥

र्विभिन्नैकद्व्यादिवचनान्तयोश्चैकरूप्यं (A)तत्त्वद्वयम् । हरेर्नेत्रे नेत्रद्वयं तनुर्वा युष्माकं भवार्त्तिशमनं कुरुताम् । पञ्चम्याः (लोटः) परस्मैपदद्विवचने आत्मनेपदैकवचने चेदं रूपम् । नेत्रयोस्तनोश्च विशेषणान्याह—भक्तिप्रह्वेति । भक्तिप्रह्वो भक्तिनम्रः । नेत्रपक्षे (B)तत्कर्मकं तनुपक्षे तु(C) तत्कर्तृकं विलोकनम्, तत्र प्रणयिनी वत्सले वत्सला च । नीलेति नेत्रपक्षे आकारस्य वर्णस्य च, तनुपक्षे तु वर्णस्यैव साम्यम् । ध्यानेति । नेत्रपक्षे समाधिनिरतैर्योगिभिर्ध्यानालम्बनतां ध्येयतां हितस्य प्राप्तये नीते, नेत्रयोरपि ध्येयत्वात् । तनुपक्षे तु ईहितस्य वाञ्छितस्य प्राप्तये तथातां नीता । महानिधी महाश्रयौ महानिधिर्महाश्रयश्च । रेफे परे विसर्गस्थानीयस्य रेफस्य लोपे दीर्घः । लक्ष्मीदृशो रसिकतां तन्वाने तन्वाना च । उभयस्यैव लक्ष्म्या हर्षेण दृश्यमानत्वात् । अत्र महानिधी इति विना सर्वत्रैव नपुंसकलिङ्गस्त्रीलिङ्गयोरैकरूप्यम् । एकद्वि-वचनान्तयोरैकरूप्यं तु सर्वत्रैव, तदाह—एष एव चेति । अत्र च महानिधी इत्यत्र कुरुतामित्यत्र च लिङ्गश्लेषं विनापि वचनश्लेषः । 'हरिस्तन्नाम चाघनुत्' इत्यादौ वचनश्लेषं विना लिङ्गश्लेषो बोद्धव्यः ।

(४) भाषाश्लेषमाह—(D)महदे इति । अर्थभेदेऽपि संस्कृतप्राकृतादिभाषयोरैकरूप्यं

(A) तत्त्वद्वयमिति । तथा च विभिन्नलिङ्गयोरैकरूप्यं लिङ्गश्लेषत्वम्, विभिन्नैकद्व्यादि-वचनान्तयोश्च वचनश्लेषत्वमित्यर्थः । एकत्रोदाहृतत्वान्मृग्याऽनयोरसङ्कीर्णतेति सूच्यते । यच्च टीकाकारैरूहितो वचनश्लेषाल्लिङ्गश्लेषस्य विविक्तो विषयः 'हरिस्तन्नाम चाघनुत्' इति, तदपि चिन्त्यम् । प्रथमान्तद्वयोत्तरं श्रूयमाणेन चकारेण तदुभयगतद्वित्वानुकर्षणाद् 'अघनुत्' इत्यत्र द्विवचनस्यैव संस्कारप्राप्तेः तादृशवाक्ये वैचित्र्याभावेनालङ्कारान्तःपाताभावाच्च ।

(B) तत्कर्मकमिति भक्तिप्रह्वकर्मकम् । तथा च भक्तिप्रह्वाणां भक्तिनम्राणां जनानामिति शेषः, विलोकने दर्शने तान् द्रष्टुमित्यर्थः, प्रणयिनी ।

(C) तत्कर्तृकमिति, भक्तिप्रह्वकर्तृकम् । तथा च भक्तिप्रह्वैर्जनैस्तत्कर्तृकमित्यर्थः यद् विलोकनं तत्र प्रणयिनी भक्तिप्रह्वा मां पश्यत्वित्यभिलाषवतीत्यर्थः ।

(D) महदे इत्यादि । अत्र प्राकृतात् संस्कृते परिणमने 'महम्' इति 'चित्तमोहम्' इति

1. 'एव च' इति क्वचिन्नास्ति ।

तत्त्वम्। (A)भाषासमावेशे तु [ भाषासमे तु ] नार्थभेदः। अत्र संस्कृतप्राकृतयोर्विभिन्नः पदविच्छेदोऽवधेयः। तथा हि—संस्कृतपक्षे 'महदे' इति, 'सुरसन्धम्' इति, 'मे' इति, 'तम्' इति, 'अव' इति, 'समासङ्गम्' इति, 'आगमाहरणे' इति, 'हर' इति, 'बहुसरणम्' इति, 'तम्' इति, 'चित्तमोहम्' इति, 'अवसर' इति, 'उमे' इति, 'सहसा' इति च पदविच्छेदः। तदर्थश्च—हे महदे उत्सवदात्रि! आगमस्य वेदस्याऽऽहरणे स्वीकरणे तं प्रसिद्धं मे मम समासङ्गम् अव रक्ष जनयेति यावत्। कीदृशं समासङ्गम्? सुरसन्धं (B)सुरान् सन्धत्ते संसर्गिणः कुरुते इत्यातः क-प्रत्ययः, सुरगणसहचारित्वकारकमित्यर्थः। तथा तं प्रसिद्धं चित्तमोहम् अवसरे मृत्युकालरूपे सहसा हर अपनय। कीदृशं चित्तमोहम्? बहुसरणं निषिद्धानिषिद्धबहुविषयगामिनम्। प्राकृतपक्षे पदविच्छेदस्तु—'मह' इति, 'देसु' इति, 'रसम्' इति, 'धम्मे' इति, 'तमवसम्' इति, 'आसम्' इति, 'गमागमा' इति, 'हर' इति, 'णे' इति, 'हरबहु' इति, 'सरणम्' इति, 'तम्' इति, 'चित्तमोहम्' इति, 'अवसरउ' इति, 'मे' इति, 'सहसा' इति च। तदीयं संस्कृतञ्च—

मम देहि रसं धर्मे तमोवशामाशां गमागमाद्धर नः।
हरवधु! शरणं त्वं चित्तमोहोऽपसरतु मे सहसा॥

इति बोध्यम्। तदर्थश्च—हे हरवधु! मम धर्मे रसं देहि, गमागमात् संसारात् तमोवशामाशां नोऽस्माकं हर; त्वं मे शरणं रक्षित्री। सहसा मे चित्तमोहोऽपसरत्विति। अत्र सहसापदं भाषासमावेशः [ भाषासमः ] सत्यप्यर्थाभेदेऽपि भाषाद्वये समानमिति भाषाश्लेषः।

---

'हरवधूः' इति विशेषम्, चित्तमोहमिति मोहशब्दस्य गुणवाचकत्वात् क्लीबे गुणगा इति सूत्रेण नपुंसकत्वमि'ति चाहुरुद्योतकृतः। 'हरबहु' इत्यस्य हरबधूरिति संस्कृतं रामचरणतर्कवागीशपादानामप्यभिमतम्। हरबधूस्त्वं शरणमिति तदर्थः। अत्र संस्कृतप्राकृतयोर्भाषयोः श्लेष इति प्रदीपसुधासागरकृदादयः, संस्कृतमहाराष्ट्र्योरिति साहित्यदर्पणे विश्वनाथः; तत्र महाराष्ट्रीपदं प्राकृतपरमिति केचिद् ब्रुवते 'महाराष्ट्राश्रयां भाषां प्रकृष्टं प्राकृतं विदुरि'त्यादिदण्ड्युक्तेः।

(A) यद्यपि प्रकृतग्रन्थे भाषासमावेशो वा भाषासमो वा तादृशार्थकमन्यत् किञ्चनालङ्कारनाम चोपलभ्यते, तथापि ग्रन्थान्तरस्वरसेन तादृशार्थकालङ्कारेऽतिव्याप्तिं वारयितुं टीकाकृतोऽयमुद्यमः। तथा च—

'शब्दैरेकविधैरेव भाषासु विविधास्वपि।
वाक्यं यत्र भवेत् सोऽयं भाषासम इतीष्यते॥' सा० द० १०५०।

इत्याद्यर्थके भाषासमालङ्कारेऽर्थैक्यम्, इह तु अर्थौ भिद्यत इति नातिव्याप्तिरिति भावः। अत एव च सहसेत्यत्रार्थाभेदाद् भाषासमावेश एव न श्लेष इति टीकाकृता स्वयमेव वक्ष्यते।

(B) सुरान् सन्धत्ते इति। 'सुरसन्ध'पदव्युत्पत्तावियं वैयाकरणी टीप्पनी नातिसमीचीनेव

(५) अयं सर्वाणि शास्त्राणि हृदि ज्ञेषु च वक्ष्यति ।
सामर्थ्यकृदमित्राणां मित्राणां च नृपात्मजः ॥ ३६६ ॥

(६) रजनिरमणमौलेः पादपद्मावलोक-
क्षणसमयपराप्तापूर्वसम्पत्सहस्रः ।
प्रमथनिवहमध्ये जातुचित् त्वत्प्रसादा-
दहमुचितरुचिः स्यान्नन्दिता सा तथा मे ॥ ३६७ ॥

---

(५) प्रकृतिश्लेषमाह—अयमिति । प्रत्ययैक्ये प्रकृतिभेदेऽप्यैकरूप्यं तत्त्वम् । अयमिति । राजपुत्रे जाते ज्योतिर्विद उक्तिरियम् । अयं राजपुत्रः सर्वाणि शास्त्राणि हृदि वक्ष्यति ; अत्र वह-धातुः । ज्ञेषु पण्डितेषु वक्ष्यति ; अत्र वच-धातुः, प्रत्ययस्त्वेकः । तथा मित्राणाममित्राणाञ्च सामर्थ्यकृत् सामर्थ्यस्य कारकश्छेत्ता च । अत्र कृञ्-कृती-धातू, प्रत्ययश्चैकः ।

(६) प्रत्ययश्लेषमाह—रजनीति । प्रकृत्यैक्ये आख्यातकृत्तद्धितप्रत्ययभेदेऽप्यैक-रूप्यम् तत्त्वम् । महेशगणमध्ये तिष्ठासोः कस्यचिदुक्तिरियम् । अहं तत्प्रसादात् रजनिरमणमौलिप्रसादात् प्रमथनिवहमध्ये जातुचित् कदाचित् उचितरुचिर्योग्यदीप्तिः स्याम् । अहं कीदृशः ? नन्दिता आनन्दकर्त्ता ; तथा रजनिरमणमौलेः पादपद्माव-लोकरूपस्य उत्सवस्य समये पराप्तं प्राप्तम् अपूर्वं सम्पत्सहस्रं येन तादृशः, सहस्रमिति पाठे तु स्यामिति क्रियाया विशेषणम् । तथा सा प्रसिद्धा नन्दिता नन्दिनामगणाधिपत्यं मे स्यात् । अत्र अस-धातुरेकः यात्-यां-प्रत्ययभेदः सन्धावैक-रूप्यम् । तथा नन्दितेत्यत्र नन्द-धातुरेकः 'अव्यवहितात्ततस्तृच्प्रत्ययस्य कृत्प्रत्यय-व्यवहितात्ततस्तद्धितप्रत्ययस्य भेदः, रूपञ्चैकम्'[1]* ।

---

प्रतिभाति । अत्र हि गोसन्दायमित्यादिवत् सुरसन्धायमित्यनेनैव भवितुं युज्यते सोपसर्गत्वात् । तथा च 'आतोऽनुपसर्गात् कः' (का० कृत् १९४सू०) इत्यत्रानुपसर्गादित्यस्य 'गोसन्दायमि'त्यत्रैव व्यावृत्तिः प्रदर्शिता । न च 'नाम्नि स्थश्च' (का० कृत् १९९ सू०) इत्यनेन क-प्रत्ययो भवतु अधिकृताकारान्तद्वारेणैव सिद्धे पुनः स्थग्रहणम् अनुपसर्गादित्यस्य निवृत्त्यर्थमिति तत्रोक्तेरिति वाच्यम् ? स्थाग्रहणस्यान्यथाऽनुपपत्त्या तं प्रत्येवानुपसर्गाधिकारनिवृत्तेरभ्युपगमात् । अत एवा-त्रोद्द्योतकारादिभिः 'सुरैः सन्धा सन्धिर्मिलनं यस्मात्तथे'त्यादि व्याख्यातम् इति ।

---

१. 'ततस्तृच्प्रत्ययस्य णिनिप्रत्ययान्तात्ततस्तद्धितप्रत्ययस्य च भेदेऽप्यैकरूप्यम्' इति पाठः क-पुस्तके ।

(७) सर्वस्वं हर सर्वस्य त्वं भवच्छेदतत्परः।
नयोपकारसाम्मुख्यमायासि तनुवर्तनम्॥ ३६८॥

(१२०) भेदाभावात् प्रकृत्यादेर्भेदोऽपि नवमो भवेत्।

नवमोऽपीत्यपिर्भिन्नक्रमः। उदाहरणम्—

योऽसकृत् परगोत्राणां पक्षच्छेदक्षणक्षमः।
शतकोटिदतां बिभ्रद्विबुधेन्द्रः स राजते॥ ३६९॥

---

(७) विभक्तिश्लेषमाह—**सर्वस्वमिति**। सुप्तिङ्विभक्तिभेदेऽपि (A)नामधात्वोरैकरूप्यं तत्त्वम्। शिवं प्रति तद्भक्तस्य पुत्रं प्रति दस्योश्चोक्तिरियम्। भक्तपक्षे—हे हर! त्वं सर्वस्य जनस्य सर्वस्वं भवस्य संसारस्य छेदतत्परश्च। नयोपकारयोः साम्मुख्यं प्राप्तिर्यस्मात् तादृशं तनुवर्त्तनं शरीरस्थितिमायासि आगच्छसि। दस्युपक्षे—त्वं सर्वस्य सर्वस्वं हर छेदतत्परो भव; उपकारसाम्मुख्यं नय अपनय तद्विमुखो भवेत्यर्थः। आयासि परायासकारकं वर्त्तनं स्थितिं तनु विस्तारय। अत्र हर भव नय आयासि तन्वित्यत्र लुप्तसुब्विभक्तिर्लुप्ताख्यातविभक्तिश्च, रूपन्त्वेकम्।

**भेदाभावादिति**। (B)प्रकृत्यादेरित्यत्र प्रकारवाच्येवादिशब्दः। तेन तत्प्रकारादक्षरादेरित्यर्थः। भेदाभावात् (C)अक्षरादिप्रभेदाष्टकाभावादित्यर्थः। **नवमोऽपीति**। स च समानवर्णकाखण्डपदश्लेषरूपो बोध्यः।

---

(A) नामधात्वोरिति। ऐकरूप्यमित्यैकरूप्येण परिणतिः, प्रकृत्यवस्थायां हृ-हर-रूपायां तथात्वाभावात्। एवं पूर्वत्रापि ज्ञेयम्। नाम्ना सह धातोरैकरूप्यमित्यर्थः न पुनर्नाम्नोर्धात्वोर्वा पृथगैकरूप्यम्। नाम्नोरैकरूप्ये 'महानिधी' इत्यादिवद् वचनश्लेषप्रसङ्गात्, धात्वोरैकरूप्ये वक्ष्यतीतिवत् प्रकृतिश्लेषानपलापाच्च। 'न जगाम गमेर्धातोरि'ति वैयाकरणस्मृतेः गै-गमोर्लिट उत्तमपुरुषबहुवचन-प्रथमपुरुषैकवचनयोरैक्ये, अन्यत्राप्येवंविधस्थलेषु प्रत्ययश्लेषेण गतार्थतया वा, 'सुप्तिङ्' इत्यत्र सुपस्तिङोश्चेति व्याख्यानमाश्रित्य विभक्तिश्लेषान्तर्भावाद् वा समाधानमूहनीयम्। 'अस्य च भेदस्य प्रत्ययश्लेषेण गतार्थत्वेऽपि प्रत्ययान्तरासाध्यसुबन्ततिङन्तगतत्वेन विच्छित्तिविशेषाश्रयणात् पृथगुक्तिः' इति दर्पणकृतः।

(B) मूले प्रकृत्यादेरित्यत्राक्षरादेरित्युचितः पाठः। यथाश्रुते तु वर्णादिसंग्रहार्थम् आह—प्रकारवाच्येवेत्यादि। आदिशब्दः प्रकारवाची एव न त्वाद्यावयववाचीति तदर्थः। प्रकारश्च साजात्यम्, साजात्यञ्च स्वनिर्वाहश्लेषनिर्वाहकत्वेन। अयमभङ्गः शब्दश्लेषः।

(C) अक्षरादीति। तथा च—पूर्वोक्तप्रकृत्यादिरूपभेदकाभावे यत्रार्थद्वये युगपत्तात्पर्यमवगम्यते स नवमः प्रकार इत्यर्थ इत्युद्योतादौ स्पष्टम्।

अत्र प्रकरणादिनियमाभावाद् द्वावप्यर्थौ वाच्यौ ।

---

योऽसकृदिति। यो राजा य इन्द्रश्च परगोत्राणां शत्रुकुलानां प्रकृष्टगोत्राणामचलानाञ्च पक्षस्य सहायस्य पतत्रस्य च छेदे क्षणात् क्षमः, (A)शतस्य कोटेश्च दातृतां (B)शतकोटिना वज्रेण खण्डकतां च बिभ्रत्। विबुधानां पण्डितानां देवानां च इन्द्रः प्रभुः स राजत इत्यर्थः। अत्र शतकोटिदताम् इत्यंशे पदश्लेषः, सर्वत्रान्यत्राखण्डपदैर्नवमः श्लेषः।

नन्वत्रैकार्थे प्राकरणिकतया वाच्येऽन्योऽर्थो व्यङ्ग्य एवेत्यत 'उल्लास्य कालकरवाल' (१५५पृ०) इत्यादिवदुपमाध्वनिरेवायं न तु श्लेष इत्यत आह—अत्रेति।

ननु सभङ्गश्लेषः शब्दश्लेषः, तत्र भङ्गेन विभिन्नप्रयत्नोच्चरितयोः स्वरभेदेन भिन्नयोः शब्दयोः श्लिष्टत्वात्; अभङ्गश्लेषस्त्वेकप्रयत्नोच्चार्य एक एव न श्लिष्टः, तदभेदादर्थश्लेष एवासौ, तथा (C)एतद्द्वयमप्यर्थालङ्कारान्तरज्ञानज्ञाप्यत्वेन अर्थालङ्कार एव परैरुच्यते।

---

(A) शतकोटिं ददातीति व्युत्पत्तेः।

(B) शतकोटिना द्यति खण्डयतीति निरुक्तेः।

(C) अर्थालङ्कारेत्यादि। अयञ्च 'अलङ्कारान्तरप्रतिभोत्पत्तिहेतुरि'ति वृत्तिग्रन्थस्यानुवादः। वृत्तिव्याख्यायाञ्च टीकाकृता अलङ्कारान्तरप्रतिभा उत्पत्तिहेतुर्यस्येति बहुव्रीहिरवलम्बितः, स च अलङ्कारान्तरप्रतिभाया उत्पत्तिहेतुरिति तत्पुरुषाश्रयणेनालङ्कारान्तरप्रतिभाजनक इत्यर्थमङ्गीकुर्वतां प्रदीपकृदादीनां विरुद्धोऽपि निरूपणीयस्य 'श्लेषोऽर्थालङ्कार' इत्यस्यैव साधक इति न वस्तुक्षतिं जनयति। तथाहि—बहुव्रीहिपक्षे अलङ्कारान्तरज्ञानजनितः श्लेष इत्यायाति, एवञ्च—यः खल्वर्थालङ्कारान्तरज्ञानजनितः स कथं शब्दालङ्कारः स्यादिति युक्तं श्लेषस्यार्थालङ्कारत्वम् इति। तत्पुरुषपक्षेऽपि अलङ्कारान्तरज्ञानजनकः श्लेष इत्यर्थप्राप्तौ—यो ह्यर्थालङ्कारज्ञानं जनयति कथं नाम स स्वयं शब्दालङ्कारः स्यात् जन्यजनकयोरैकरूप्यस्य शास्त्रतो युक्तितश्च प्राप्तेः, तस्मात् श्लेषोऽर्थालङ्कार इति पूर्वपक्षिणामाशयः। परं बहुव्रीहिपक्षे यद्यलङ्कारान्तराणां श्लेषनिर्वाहकत्वं टीकाकृता दर्शितमभविष्यत् तदैव सर्वमनवद्यं स्यात्, यथा—'स्वयञ्चे'त्यादौ श्लेषाधीनमुभयवाचकशब्दरूपसाधर्म्यज्ञानं तेन चोपमाज्ञानम्' इत्यनेन दर्शितम्।

व्याख्यातमिदं प्रदीपोद्द्योतयोः—'ननु श्लेषस्तावद्द्विधा सभङ्गपदोऽभङ्गपदश्च। तत्राद्यः शब्दश्लेषः, स्वरितादिगुणभेदाद्भिन्नप्रयत्नोच्चार्यतया भिन्नानां शब्दानां बन्धे जतुकाष्ठन्यायाच्छब्दयोरेव श्लिष्टत्वात्। द्वितीयस्त्वर्थश्लेषः स्वरितादिगुणाभेदादेकप्रयत्नोच्चार्यतया शब्दभेदाभावादेकवृन्तगतफलद्वयन्यायेनार्थयोरेव श्लिष्टत्वात्। यद्यपि 'अर्थभेदेन शब्दभेद' इति नयेन द्वितीयेऽपि शब्दस्य भेदस्तथाप्युपपत्त्या शब्दभेदप्रतीतावप्येकताध्यवसायान्नास्ति शब्दभेदः। स एष द्विविधोऽपि श्लेषः श्लेषस्थले अवश्यमलङ्कारान्तरप्रतिभासत्त्वान्निरवकाशतया सर्वालङ्कारबाधक इत्यलङ्कारान्तराणां प्रतिभामात्रमुत्पादयति न तु तत्पर्याप्तिम्। यथा 'स्वयञ्च' [इति]।

(A)ननु स्वरितादिगुणभेदाद् भिन्नप्रयत्नोच्चार्याणां तदभावाद्भिन्नप्रयत्नोच्चार्याणां च शब्दानां बन्धेऽलङ्कारान्तरप्रतिभोत्पत्तिहेतुः शब्दश्लेषोऽर्थश्लेषश्चेति द्विविधोऽप्यर्थालङ्कारमध्ये परिगणितोऽन्यैरिति कथमयं शब्दालङ्कारः।

उच्यते—इह दोषगुणालङ्काराणां शब्दार्थगतत्वेन यो विभागः सोऽन्वयव्यतिरेकाभ्यामेव व्यवतिष्ठते। तथाहि—कष्टत्वादिगाढत्वाद्यनुप्रासादयो व्यर्थत्वादिप्रौढ्याद्युपमादयस्तद्भावतदभावानुविधायित्वादेव शब्दार्थगतत्वेन व्यवस्थाप्यन्ते।

---

तत् कथं त्वया शब्दालङ्कार एवायमुच्यते इत्याशङ्कते—नन्विति। 'स्वरितं' समाहारस्वरः। तदादिर्गुणो धर्मः स्वररूपस्तदादिभेदादित्यर्थः। अलङ्कारान्तरेति। अलङ्कारान्तरमर्थालङ्कारस्तत्प्रतिभा तज्ज्ञानम् उत्पत्तेर्ज्ञानोत्पत्तेर्हेतुर्यस्य श्लेषस्य तादृश इत्यर्थः। अर्थालङ्कारज्ञानजनक इति वस्तुलार्थः। एवमेव वारंवारमीदृशलिखनस्यार्थो बोध्यः। शब्दश्लेषोऽर्थश्लेषश्चेति। भिन्नाभिन्नप्रयत्नोच्चार्यत्वे यथासंख्यं बोध्यम्। इदं परोक्तमर्थालङ्कारत्वबीजमयुक्तम्, किन्त्वन्वयव्यतिरेकानुविधानमेव बीजमित्याह—उच्यत इहेति। कष्टत्वादीति। कष्टत्वं श्रुतिकटुत्वं तदादिः

---

अत्र पूर्वार्द्धेऽभङ्गपदो द्वितीयार्द्धे सभङ्गपदः श्लेषः। द्वयमप्युपमाप्रतिभोत्पत्तिहेतुः साधर्म्याभावेन तस्याः प्ररोहाभावात्। यदुक्तम्—

एकप्रयत्नोच्चार्याणां तच्छायाञ्चैव बिभ्रताम्।
स्वरितादिगुणैर्भिन्नैर्बन्धः श्लिष्ट इहोच्यते॥
अलङ्कारान्तरगतां प्रतिभां जनयत् पदैः।
द्विविधैरर्थशब्दोक्तिविशिष्टं तत् प्रतीयताम्॥

इति द्विविधोऽप्यलङ्कारसर्वस्वकारादिभिरर्थाश्रितत्वेनार्थालङ्कारमध्ये पठितस्तत् कथं शब्दालङ्कारमध्ये पठ्यत इती'ति।

(A) नन्वित्यादि। त्र्यंशोऽयं संशयः। एकप्रयत्नोच्चार्यत्वादभङ्गश्लेषस्य अर्थालङ्कारत्वमित्येकः स, 'उच्यते' इत्यादिना प्रत्युक्तः; श्लेष उपमाद्यलङ्कारप्रतिभाजनकः ( टीकाकृन्मते उपमाद्यलङ्कारज्ञानजन्यः ) तेन चार्थालङ्कार इति द्वितीयः, स च 'न चायमुपमाप्रतिभोत्पत्तिहेतुरि'त्यादिना निराकृतः; तृतीयश्च अर्थपरतन्त्रः शब्द इति तदुपाधिकोऽपि श्लेषोऽर्थालङ्कार एवेति, स तु 'अर्थमुखप्रेक्षित्वमेतेषाम्' इत्यादिना परिष्कृत इति ज्ञेयम्।

इयञ्च पल्लवाताम्रभास्वत्करविराजिता। (इत्यभङ्गः)

प्रभातसन्ध्येवास्वापफललुब्धेहितप्रदा ॥३७०॥ (इति सभङ्गः)

इति द्वावपि शब्दैकसमाश्रयाविति द्वयोरपि शब्दश्लेषत्वमुपपन्नम्, न त्वाद्यस्यार्थश्लेषत्वम्। अर्थश्लेषस्य तु स विषयः, यत्र शब्दपरिवर्त्तनेऽपि न श्लेषत्वखण्डना। यथा—

स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्।

अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च ॥ ३७१ ॥

(A)न चायमुपमाप्रतिभोत्पत्तिहेतुः श्लेषः, अपि तु श्लेषप्रतिभोत्पत्तिहेतुरुपमा। तथा हि—यथा—

---

शब्ददोषः। गाढत्वमुद्धतवर्णविन्यासस्तदादिः परोक्तः शब्दगुणः। अनुप्रासः शब्दालङ्कारः। तथा व्यर्थत्वमपुष्टार्थत्वं तदादिरर्थदोषः। प्रौढत्वं 'परार्थे वाक्यरचने'-त्यादिचतुर्विधप्रौढिरूपौजोगुणः तदादयोऽर्थगुणाः परोक्ताः। उपमादयोऽर्थालङ्काराः। 'तद्भावतदभावौ' तदन्वयव्यतिरेकौ, तदनुविधायित्वादित्यर्थः। अतोऽर्थालङ्कारज्ञानज्ञेयत्वेऽपि शब्दान्वयव्यतिरेकानुविधायित्वात् श्लेषः शब्दालङ्कार एवेति साधयितुम् उदाहरणमाह—इयञ्चेति। क्वचित्तु स्वयञ्चेति पाठः। अत्र प्रबन्धगम्या पार्वती विशेष्या। कीदृशी? प्रभातसन्ध्येव पल्लववदाताम्रेण भास्वता दीप्यमानेन करेण पाणिना, पक्षे तु पल्लवे आताम्रेण भास्वतः सूर्यस्य करेण रश्मिना विराजितेत्यर्थः। अत्रार्द्धे भास्वत्करशब्दयो(B)रखण्डत्वेनार्थश्लेषस्तैरुक्तः। अस्वापे सुखालभ्ये दुरापे फले लुब्धानामीहितस्य वाञ्छितस्य प्रदात्री। पक्षे तु स्वापो निद्रा अस्वापो जागरणं तद्रूपफललुब्धे जने जागरणरूपहितप्रदा, प्रभाते जागरणात्। अत्र तु आपेति भङ्गेन शब्दश्लेषस्तैरुक्तः। शब्दान्वयव्यतिरेकानुविधानात्तु द्वयोरपि शब्दश्लेषत्वमाह—द्वावपीति। नन्वेवमर्थश्लेषोच्छेद इत्यत्राह—अर्थश्लेषस्य त्विति। स्तोकेनेति। 'तुलाकोटिः' मानतुलाग्रभागः। अत्र उन्नतिशब्दस्थाने उच्छ्रायोत्पतनादिशब्दानाम्, अधोगतिशब्दस्थाने नमन-पतनादिशब्दानाञ्च दानेऽपि नार्थश्लेषहानिः।

इत्थम् 'इयञ्च पल्लवे'त्यादौ पूर्वार्द्धे अभङ्गश्लेषत्वेनार्थश्लेषत्वं तदुक्तं निषिध्य

---

(A) न चायमिति। अयम् 'इयञ्च पल्लवाताम्र'इत्यादिश्लोकोदाहृतः।

(B) अखण्डत्वेनेति। तन्मते पदानां खण्डत्वाखण्डत्वे एव सभङ्गाभङ्गत्वनियामके। एतन्मते तु तेषां पर्यायपरिवृत्तिसहत्वासहत्वे इति विशेषः।

'कमलमिव मुखं मनोज्ञमेतत्कचतितराम्'

इत्यादौ गुणसाम्ये क्रियासाम्ये उभयसाम्ये वा उपमा, तथा—

'सकलकलं पुरमेतज्जातं सम्प्रति सुधांशुबिम्बमिव'

इत्यादौ शब्दमात्रसाम्येऽपि सा युक्तैव। तथा ह्युक्तं रुद्रटेन—

"स्फुटमर्थालङ्कारावेतावुपमासमुच्चयौ किं तु।
आश्रित्य शब्दमात्रं सामान्यमिहापि सम्भवतः॥" इति।

न च 'कमलमिव मुखम्' इत्यादिः साधारणधर्मप्रयोगशून्य उपमाविषय इति वक्तुं युक्तम्, पूर्णोपमाया निर्विषयत्वापत्तेः।

---

शब्दान्वयव्यतिरेकानुविधानाच्छब्दश्लेषत्वे साधिते उपमाज्ञानज्ञेयत्वेन तत्रार्थश्लेषत्वमपि तदुक्तं खण्डयति—**न चायमुपमाप्रतिभेति**। न चायमुपमाज्ञानज्ञेयः किन्तु वैपरीत्यमेवेत्याह—**अपि त्विति**। श्लेषाधीनमुभयवाचकशब्दरूपसाधर्म्यज्ञानं तेन चोपमाज्ञानमित्यर्थः। उभयवाचकैकशब्दोऽपि साधर्म्यं भवतीति साधयति—**तथा हीति**। (A)कचति दीप्यते। **गुणसाम्य इति**। मनोज्ञत्वमत्र गुणः। कचनक्रियाविवक्षावशादेकतरेणोभयेन वा साम्यम्। इदमर्थसाम्यं दृष्टान्तयित्वा शब्दसाम्यं दृष्टान्तयति—**तथा सकलकलमिति**। सकला कला यस्य तादृशं चन्द्रविम्बम्। पुरन्तु कलकलशब्दसहितम्। उभयवाचकैकशब्दोऽपि साधर्म्यं भवतीत्यत्र रुद्रटोक्तमपि प्रमाणयति—**तथा ह्युक्तमिति**। इहापि शब्दालङ्कारमध्येऽपि उपमासमुच्चयौ सम्भवत इत्यर्थः। अत्रोपमायां शब्दमात्रसाम्यं सकलकलमिति दर्शितमेव।

'तवाधरे च रागोऽभूद्‌ रम्भोरु हृदये च मे।'

इति रक्तिमानुरागयोः श्लिष्टं रागपदं साधर्म्यम्। ननु मनोज्ञत्वं कचनञ्च कमलमुखयोर्विभिन्नव्यक्तिकत्वान्नैकमुभयसाधारणम्, अतस्तदुभयवाचकं मनोज्ञादिपदमेव तत्र साधर्म्यम्, शब्दसाधर्म्यं च श्लेष एवालङ्कारः उपमा तु तन्निर्वाहकत्वेनैवोपात्ता नालङ्कारः; उपमालङ्कारस्तु अनुपात्तमनोज्ञत्वादिके 'कमलमिव मुखमि'त्यादावेवेत्यत उपमाश्लेषयोरेकत्र समावेश एव नास्ति कथं श्लेषज्ञानज्ञेयत्वमुपमाया इत्याशङ्क्ते—**न चेति**। **पूर्णोपमाया इति**, उपमानोपमेय-साधारणधर्म-यथेवाद्युपमाप्रति-

---

(A) गणपाठे कचधातुरयमात्मनेपदिषु बन्धनार्थं पठितः। दीप्तावप्ययमित्याह कातन्त्रीयगणव्याख्यायां रमानाथः, परस्मैपदन्तु न कस्यापि सम्मतमिति चिन्तनीयं तत्।

देव त्वमेव पातालमाशानां त्वं निबन्धनम् ।
त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः ॥ ३७२ ॥

इत्यादिः श्लेषस्य(A)चोपमाद्यलङ्कारविविक्तोऽस्ति विषय इति

---

पादकानां चतुर्णामुपादाने हि पूर्णा, साधारणधर्मानुपादान एव उपमास्वीकारे तु तन्निर्विषयत्वापत्तेरित्यर्थः। तथा च तन्निर्विषयत्वापत्तिभिया साधारणधर्मोपादानेऽपि उपमा स्वीकार्या। मनोज्ञत्वत्वादिना अनुगमेन मनोज्ञत्वादीनां साधर्म्यं भविष्यति। तथा चानुपात्तसाधर्म्यान्तरे 'सकलकलमि'त्यादौ श्लिष्टशब्द एव साधर्म्यम्। तथा च श्लेषज्ञानज्ञाप्यैवोपमा श्लेषस्तु तत्र नालङ्कार इति साधितम्।

(B)ननु क्वचित् साधर्म्यज्ञाने सत्युपमा ज्ञायते; क्वचिदुपमायां ज्ञातायामपि तदुपपादकतया साधर्म्यं ज्ञायत इति कथं साधर्म्यज्ञानाधीनमेवोपमाज्ञानं येनोपमासङ्कीर्णस्य श्लेषस्यानलङ्कारत्वं स्यादित्यतः पृथक्सिद्धयोर्द्वयोः इयञ्चेत्यादौ वरं सङ्कीर्णत्वमेवास्त्वित्यभ्युपगन्तुम् उपमाऽसङ्कीर्णं पृथक्सिद्धं श्लेषं दर्शयति—**देव त्वमेवे**त्यादि। इदमुपमाविनिर्मुक्तश्लेषोदाहरणम्। हे देव एकस्त्वं लोकत्रयात्मकः। यतस्त्वमेव पातालम् अलं पालयिता श्लेषात् पाताललोकः। तथा आशानाम् अर्थिप्रत्याशानां त्वं निबन्धनं श्लेषादाशानां दिशां निबन्धनं ज्ञापको भूलोक इत्यर्थः, तत्रैव दिङ्निबन्धनात्। तथा चामरीयमरुतां त्वं भूमिराश्रयः। श्लेषादमराणां मरुद्गणानाञ्च त्वं भूमिराश्रयश्चेत्यर्थः। **इत्यादिः श्लेषस्य चे**ति। उपमायास्तु कमलमिव मुखमित्यादिरेव श्लेषविभक्तो विषयः। श्लेषं विनैव मनोज्ञत्वत्वादिना अनुगमेन साधर्म्यत्वसम्भवादिति पृथक्सिद्धयोर्द्वयोः इयञ्चेत्यादिना मिलनमेव न त्वेकतरस्यानलङ्कारत्वम्। श्लेषस्य तु शब्दान्वयाद्यनुविधानात्तथापि शब्दालङ्कारत्वमक्षुण्णमेवेत्यभि-

---

(A) उपमाद्यलङ्कारविविक्त इति। तथा हि—न तावदत्रोपमा, इवाद्यप्रयोगात्। नापि तुल्ययोगितादीपके प्रकरणादिनियमाभावात्। नापि पातालादिना रूपकं व्यङ्ग्यस्य तस्य सम्भवेऽपि वाच्यापेक्षयैवासङ्करगवेषणमिति। किञ्च—विद्वन्मानसेत्यादौ मनसि मानसत्वारोपे स्वच्छत्वस्य, राज्ञि हंसत्वारोपे मोदावहत्वस्य प्रतीतेः परम्परितत्वसत्त्वेऽपीह राज्ञि पातालत्वादिरूपणे प्रयोजनाभावादुक्तश्लेष एव कवेस्तात्पर्यमित्यपि बोध्यमिति प्रदीपोद्योतादौ द्रष्टव्यम्। अत्र 'गुर्वर्चसि पृथुहरसि' इत्यादिवत् श्लिष्टातिशयोक्तिमूल उल्लेखः कथं न स्यादिति तु विभावनीयम्।

(B) ननु क्वचिदिति। श्लेषस्य पृथक्सिद्धताप्रदर्शनार्थं 'देव त्वमेवे'त्याद्युदाहरणोत्थितौ उपोद्घातोऽयम्। प्रदीपकारास्तु—'नन्वेवं श्लेषस्य निर्विषयत्वमसङ्कीर्णस्थलाभावादि'त्याचक्षते।

द्वयोर्योगे सङ्कर एव। (A)उपपत्तिपर्यालोचने तु उपमाया एवायं युक्तो विषयः, अन्यथा विषयापहार एव पूर्णोपमायाः स्यात्। न च

'अबिन्दुसुन्दरी नित्यं गलल्लावण्यबिन्दुका'

इत्यादौ विरोधप्रतिभोत्पत्तिहेतुः श्लेषः, अपि तु श्लेषप्रतिभोत्पत्तिहेतुर्विरोधः। नह्यत्रार्थद्वयप्रतिपादकः शब्दश्लेषः, द्वितीयार्थस्य प्रतिभातमात्रस्य (B)प्ररोहाभावात्। न च विरोधाभास इव विरोधः

---

प्रायेणाह—**द्वयोर्योग** इति। नन्वेवमपि पूर्णोपमाविषयाभावादनुपपत्तिरेव, अलङ्कारद्वयमिलने वक्ष्यमाणसङ्करालङ्कारस्यैवोदयादुपमाश्लेषयोरेकतरस्यापि तत्राभावात्। न च कमलमिव मुखमित्यादावेव मनोज्ञत्वत्वादिना अनुगमे तत्साधर्म्यमादायैव श्लेषविनिर्मुक्तायाः पूर्णोपमायाः सम्भवेनानुपपत्त्यभाव इति वाच्यम् अनुगमकस्य मनोज्ञत्वत्वस्य मनोज्ञपदादनुपस्थितेः, प्रकारीभूतमनोज्ञत्वव्यक्तिद्वयस्यैव मनोज्ञशब्दादुपस्थित्या तस्य श्लिष्टत्वानपायेन सङ्करालङ्कारापत्त्या पूर्णोपमाया विषयापहारादित्यत आह—**उपपत्ती**ति। पूर्णोपमाविषयापहारपरीहारार्थम् इयञ्चेत्यादौ श्लेषस्यालङ्कारत्वानङ्गीकार एवोपपत्तिस्तदाह—**अन्यथे**ति। अथैवमनिष्टापत्तिभयेन माऽस्तु उपमासङ्कीर्णश्लेषो मा चास्तु उपमाज्ञानज्ञाप्यः श्लेषः अन्यालङ्कारज्ञानज्ञाप्यतया तु श्लेषोऽर्थालङ्कारः स्यादित्यतस्तदपि खण्डयति—**न च अबिन्दुसुन्दरी**ति। अप्सु प्रतिबिम्बित इन्दुः अबिन्दुः इन्दुप्रतिबिम्बः, तद्वत् सुन्दरी, गलन् लावण्यबिन्दुर्यस्यास्तादृशी प्रतिरोमकूपं दृश्यमानस्य दीप्यमानत्वस्य बिन्द्वाकारत्वेन बिन्दुत्वाध्यासः। अत्र अबिन्द्वित्यत्र बिन्दुशून्यत्वं श्लेषलभ्योऽर्थः, तमादाय च विरोधः, स च श्लेषज्ञानज्ञेय एव न तु तज्ज्ञानज्ञेयः श्लेष इति समुदायार्थः। तत्र हेतुमाह—**न ह्यत्रे**ति। तदा विरोधज्ञानज्ञेयः श्लेषः स्याद् यदि श्लेषलभ्योऽर्थः शब्दानुभवविषयः स्यात् स एव तु नेत्यर्थः। 'प्ररोहः' पार्य-

---

(A) उपपत्तीत्यादि। उपपत्तिश्चेयम्—'व्यपदेशाः प्राधान्येन भवन्तीति वस्तुस्थितिः। प्रधानञ्चात्रोपमा श्लेषस्य तन्निर्वाहकस्य तदङ्गत्वात्। न हि श्लेषं विना समानशब्दवाच्यत्वलक्षणं साधर्म्यमुपमानिर्वाहकं निर्वहति। उपमा तु न श्लेषाङ्गम्, श्लेषप्रतीतिं विना तत्प्रतीत्यभावेन तदनुपकारकत्वादिति' इति प्रदीपः।

(B) प्ररोहाभावादिति 'शाब्दबोधाविषयत्वादि'त्युद्द्योतः।

श्लेषाभासः श्लेषः । [1]तस्मादेवमादिषु वाक्येषु श्लेषप्रतिभोत्पत्तिहेतुरलङ्कारान्तरमेव । तथा च

सद्वंशमुक्तामणिः ॥ ३७३ ॥

[ परम्परितरूपकम् ]

नाल्पः कविरिव स्वल्पश्लोको देव ! महान् भवान् ॥३७४॥

[ श्लेषव्यतिरेकः ]

अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः ।
अहो दैवगतिश्चित्रा तथाऽपि न समागमः ॥ ३७५ ॥

[ श्लेषसमासोक्तिः ]

---

न्तिकोऽनुभवः । नन्वत्र विरोधोऽपि न पार्यन्तिकानुभवविषयः किन्त्वाभासरूप एव सः, तद्वत् श्लेषोऽप्याभासरूप एवालङ्कारः, स एव विरोधाभासज्ञानज्ञेयः स्यादित्यतः श्लेषाभासस्यालङ्कारत्वेन केनाप्यनभ्युपगम्यमानत्वमाह—**न च विरोधाभास इवेति** । विरोधाभाससाधारणो विरोधालङ्कारः सर्वैः स्वीकृतः, श्लेषस्तु श्लेषाभाससाधारणतया केनापि न स्वीकृत इत्यर्थः । एवञ्च श्लेषो नालङ्कारान्तरज्ञानेनापि ज्ञेय इत्याह—**तस्मादेवमादिष्विति** । अत्र चालङ्कारान्तरमित्यस्य विशेषणं श्लेषप्रतिभोत्पत्तिहेतुरिति यथोक्तबहुव्रीहावनुपपन्नं पुंलिङ्गत्वानुपपत्तेः, तत्पुरुषे तु श्लेषप्रतिभाज्ञेयत्वरूपोऽर्थो न घटते अतोऽत्र हेत्विति पाठमेव चक्रवर्त्ती कल्पयति । तच्च क्वापि पुस्तके न दृश्यते इत्यतोऽत्र 'को हेतुः कारणं किं वे'त्यत्रेव हेतुपदं कार्यपरमेव अलङ्कारान्तरपदञ्च तज्ज्ञानपरं तथा चालङ्कारान्तरज्ञानं श्लेषप्रतिभोत्पत्तिजन्यमित्येवार्थः । (A)तथात्वम् अलङ्कारान्तरे परम्परितरूपकादावपि घटयति—**सद्वंशेति** । सत्कुलमेव सद्वेणुस्तत्र मुक्तामणिः वंशेऽपि मणिविशेषोत्पत्तेः । अत्र परम्परितरूपकम् एकदेशविवर्त्तीति परोक्तनाम्ना दर्शितम् । **नाल्पः कविरिवेति** । श्लोकः पद्यं यशश्च । अत्र श्लेषव्यतिरेकः । **अनुरागेति** । सन्ध्या सायंसन्ध्या अनु दिवसस्य पश्चात् रागवती रक्तिमवती, सा पुरःसरी यस्य दिवसस्तादृशः । श्लेषादनुरागयुक्तनायिकापुरःसरनायकलाभः । तथाप्यसमागमे विस्मयादाह—अहो दैवेति । अत्र श्लेषसमासोक्तिः ।

---

(A) तथात्वमिति श्लेषप्रतिभोत्पत्तिहेतुत्वम् ।

---

1. 'तदेवमादिष्वि'ति पाठो बहुषु पुस्तकेषु ।

आदाय चापमचलं कृत्वाऽहीनं गुणं विषमदृष्टिः ।
यश्चित्रमच्युतशरो लक्ष्यमभाङ्क्षीन्नमस्तस्मै ॥ ३७६ ॥

[ श्लेषविरोधः ]

इत्यादावेकदेशविवर्तिरूपक-श्लेष-व्यतिरेक-समासोक्ति-विरोधत्वमुचितम्, न तु श्लेषत्वम्। शब्दश्लेष इति चोच्यते अर्थालङ्कारमध्ये च लक्ष्यते इति कोऽयं नयः। किं च वैचित्र्यमलङ्कार इति य एव कविप्रतिभासंरम्भगोचरस्तत्रैव विचित्रता इति सैवाऽलङ्कारभूमिः।

अर्थमुखप्रेक्षित्वमेतेषां शब्दानामिति चेत्, अनुप्रासादीनामपि

आदायेति। यो हरो लक्षं त्रिपुररूपमभाङ्क्षीद् बिभेद तच्चित्रम्, अतस्तस्मै नमः। किं कृत्वाऽभाङ्क्षीत्? अचलं हिमालयं चापमादाय (A)अहीनमहिपतिं वासुकिं गुणं कृत्वा। हरः कीदृशः? विषमदृष्टिस्त्रिलोचनः। अच्युतो विष्णुः शरो यस्य तादृशः। अत्र चलनरहितं चापम् आदाय गुणञ्च हीनं छिन्नं कृत्वा लक्ष्ये समदृष्टिरहितः अस्खलितशरो लक्षसंख्यमभाङ्क्षीदिति श्लेषविरोधः। इत्यादाविति। परम्परितरूपकमेव एकदेशविवर्त्ति रूपकं परैरुच्यते। उक्तोदाहरणेषु यथासंख्यमिदमलङ्कारचतुष्टयं बोध्यम्। 'नयः' मतम्। (B)ननूपाधिभेदादुभयमुच्यत इत्यत आह— किञ्चेति। (C)'प्रतिभासंरम्भ'-स्तत्पर्याप्तिः। 'अलङ्कारभूमिर'लङ्कारत्वज्ञानविषयः। (D)अतोऽत्र श्लेषघटिते

(A) अहीनाम् इनं पतिम्। 'इनः सूर्ये नृपे पत्यौ धनं गोधनवित्तयोरि'ति विश्वः।

(B) नन्विति। उपाधिः शब्दोऽर्थश्च। उक्तञ्चोद्द्योते—'ननु शब्दवैचित्र्येण शब्दश्लेष उच्यते अलङ्कारत्वं पुनरर्थस्यैवेत्यत आह—अपि (किं)चे'ति।

(C) प्रतिभेति। अत्रोक्तमुद्द्योते—प्रतिभा शक्तिर्निपुणतैव वा। संरम्भो यत्नः। एकं विना परस्याकिञ्चित्करत्वादुभयमुपात्तम्। तथा च कविप्रतिभायत्नगोचरत्वं यत्र तत्रैव विचित्रता। तत्त्वं च प्रकृते शब्द एवेति तत्र विचित्रता श्लेषरूपा तदाश्रयः शब्द एवेति प्रघट्टार्थः इति। (कविप्रतिभासंरम्भयोरनुमापिका विचित्रतेति निर्विवादम्, परं तस्याः शब्दनिष्ठतार्थनिष्ठता वा सहृदयवेद्येत्येव वादिनोर्विप्रतिपत्तिः)

(D) अतोऽत्र इति। शब्दश्लेषस्यार्थालङ्कारत्वनिरसनप्रस्तावात् 'कविप्रतिभासंरम्भगोचरत्वाच्छब्दस्य स एवालङ्कारभूमिरि'त्युद्द्योतादिव्याख्यानमेवात्रोपादेयम्। टीकाकारस्तु—छिन्नसूत्रमपि श्लेषस्यार्थालङ्कारबाधकत्वमिह पुनर्योजयितुमैहतेति द्रष्टव्यम्।

तथैवेति तेऽप्यर्थालङ्काराः किं नोच्यन्ते। (A)रसादिव्यञ्जकस्वरूपवाच्यविशेषसव्यपेक्षत्वेऽपि ह्यनुप्रासादीनामलङ्कारता। शब्दगुणदोषाणामप्यर्थापेक्षयैव गुणदोषता, अर्थगुणदोषालङ्काराणां शब्दापेक्षयैव व्यवस्थितिरिति तेऽपि शब्दगतत्वेनोच्यन्ताम्। 'विधौ वक्रे मूर्ध्नि' इत्यादौ च वर्णादिश्लेषे एकप्रयत्नोच्चार्यत्वेऽर्थश्लेषत्वं शब्दभेदेऽपि प्रसज्यतामित्येवमादि (B)स्वयं विचार्यम्।

(१२१) तच्चित्रं यत्र वर्णानां (C)खड्गाद्याकृतिहेतुता ॥ ८५ ॥

सन्निवेशविशेषेण यत्र न्यस्ता वर्णाः खड्ग-मुरज-पद्माद्याकार-

---

सर्वत्रार्थालङ्कार एव विचित्रतेति स एवालङ्कार इति भावः। नन्वनुप्रासस्यार्थापेक्षैव नास्तीत्यत्राह—**रसादीति**। अर्थो रसादिव्यञ्जकस्तद्बोधकञ्चानुप्रासविशिष्टं पदमित्यर्थः। एवञ्चार्थापेक्षाशब्दापेक्षाविचार्यत्वे गुणदोषादावप्येवमव्यवस्था स्यादित्याह—**शब्दगुणेति**। एकप्रयत्नोच्चार्यत्वेऽर्थश्लेषत्वं यदुक्तं वर्णश्लेषे तदव्याप्ति- (तदतिव्याप्ति ?) माह—**विधाविति**।

अलङ्कारसामान्यस्यैव चित्रत्वेऽपि चित्रसंज्ञकमलङ्कारमनेकविधमाह—**तच्चित्रमिति**। **खड्गाद्याकृतीति**, खड्गाकारादीत्यर्थः। एवमेव वृत्तावपि व्याख्येयम्।

---

(A) अयमत्रोद्योताभिप्रायः—'रसादि च व्यञ्जकस्वरूपञ्च वाच्यञ्च एतत्सव्यपेक्षत्वेनेत्यर्थः। माधुर्यादिव्यञ्जकस्वरूपवैचित्र्येण ह्यनुप्रासस्यालङ्कारता, सा च नार्थप्रतीतिं विनेति भावः' इति।

(B) स्वयमिति। न केवलमस्मद्वचःस्वेव विश्वस्याः परं स्वयमपि चिन्तय—किं नामाभङ्गश्लेषस्यार्थालङ्कारत्वे नैतानि दूषणान्यापतन्तीति।

तदनेन महता ग्रन्थभागेन—अभङ्गशब्दश्लेषो नार्थालङ्कारः स च 'इयञ्जे'त्यादौ नोपमाप्रतिभां जनयति न वा सद्वंशेत्यादौ तत्तदलङ्कारप्रतिभाम्, शब्दश्लेषोऽर्थालङ्कार इति च व्याघातः। एकप्रयत्नोच्चार्यत्वम् अर्थालङ्कारत्वोपपादकम् इत्यपि नोपपद्यते, 'विधौ वक्रे' इत्यादिसभङ्गपदेऽप्यर्थालङ्कारत्वप्रसक्तेरित्युक्तम्।

(C) यद्यपि वर्णानामाकाशगुणानां खड्गाद्याकृतिहेतुत्वमसम्भवि तथापि विन्यस्तवर्णानुमापिका लिपयः सन्निवेशविशेषवत्त्वेन यत्र खड्गाद्याकारमुल्लासयन्ति तच्चित्रमिति विवक्षितम्। तर्हि लिपिनिष्ठत्वाच्छब्दालङ्कारत्वं न स्यादिति चेन्न, तादृशवर्णविन्यासं विना तादृशलिपिविन्यासाभावात्, शब्दान्वयव्यतिरेकयोरभग्नत्वात्। लिपेर्वर्णाभेदस्य लोकप्रसिद्धिमाश्रित्य शब्दा-

मुल्लासयन्ति, तच्चित्रं काव्यम्। कष्टं काव्यमेतदिति दिङ्मात्रं प्रदर्श्यते। उदाहरणम्—

मारारिशक्ररामेभमुखैरासाररंहसा।
साराब्धस्तवा नित्यं [1]तदर्तिहरणक्षमा ॥ ३७७ ॥
माता नतानां सङ्घट्टः श्रियां बाधितसंभ्रमा।
मान्याऽथ सीमा रामाणां शं मे दिश्यादुमा[2]दिजा ॥३७८॥

( खड्गबन्धः )

---

(A)तेनाऽऽकारविशेषाभावेऽपि सर्वतोभद्रादेश्चित्रत्वम्। तत्र खड्गबन्धमाह—**मारारी**ति। श्लोकद्वयेनात्रान्वयो बन्धश्च। आदिजा नित्या, पाठभेदाद्द्रिजा वा, उमा मे मम शं कल्याणं दिश्यात्। कीदृशी ? मारारिः कामारिः शिवः, शक्र इन्द्रः, रामा रामत्रयम्, इभमुखो गणेशः, तैः (B)आसाररंहसा कणावृष्टिरीत्या सारं यथा स्यात्तथा आरब्धस्तवा, यतस्तेषामर्त्तिहरणक्षमा। नतानां माता, श्रियां शोभानां संघट्टः यन्त्रणस्थितिस्थानं शोभाबाहुल्यात्। तथा बाधितः सम्भ्रमो भयं यया तादृशी, मान्या। अथ समुच्चये। रामाणां स्त्रीणां सीमा आधिक्यस्य पात्री काष्ठापन्ना।

अत्र मुष्टेरुपर्यधः शाखाद्वयवान् खड्गो लेख्यः। तत्रोपरिशाखामध्यचतुष्पथे (C)प्राथमिको 'मा'कारो लेख्यः, खड्गवामे च 'रारी'त्यादय उपर्युपरिक्रमेण चतुर्दश

---

लङ्कारत्वमिति कश्चिदिति प्रदीपसुधासागरादौ विशेषः। 'तस्य च तथाविधलिपिसन्निवेशविशेषवशेन चमत्कारविधायिनामपि वर्णानां तथाविधश्रोत्राकाशसमवायविशेषवशेन चमत्कारविधायिभिर्वर्णैरभेदोपचाराच्छब्दालङ्कारत्वम्' इति साहित्यदर्पणे विश्वनाथः।

(A) तेनेति। तथा च खड्गपदात् परम् आदिपदश्रुतौ खड्गमुरजादितत्तद्वस्तुविशेषस्यैव प्रतीतिः स्यादिति वस्तुविशेषाव्यञ्जकस्य सर्वतोभद्रस्य चित्रत्वं न स्यात्। आकृतिपदोत्तरमादिपदश्रुतौ तु आकारविशेषाप्रतीत्या वैचित्र्याधायकवर्णविन्यासमात्रस्यैवालङ्कारत्वमव्याहतम्।

(B) आसारो वर्णधारासम्पातस्तस्य रंह उद्रेकोऽविच्छेदस्तेन करणेनाऽऽरब्धः स्तवो यस्या इत्युद्द्योतः। 'आसाररंहसा वृष्टिकणरीत्ये'ति दर्पणे तर्कवागीशाः।

(C) प्राथमिको माकार इति। अयं माकारः श्लिष्टः, एवमधोमुष्टिचतुष्पथमध्यगोऽपि माकारः श्लिष्टः, अश्लिष्टः पुनर्मुष्टेरधः तृत्सरुवर्त्ती माकारः। एवञ्च—सङ्कलनेन उपरिशाखामध्य-

---

1. 'तदार्त्ति-' इति क्वचित् पाठः। 2. '-द्रिजा' इति क्वचित् पाठः।

वर्णाः खड्गोपरि 'सा'कारस्तदन्तिमः ; ततस्तमेव (A)साकारमारभ्य 'रारब्धे'त्यादयश्चतुर्दश वर्णा अधोऽधःक्रमेण त्रान्ताः खड्गदक्षिणे लेख्याः। चतुष्पथमध्यगो 'मा'कारस्तदन्तिमः, ततस्तमेव 'मा'कारमारभ्य (B)खड्गदक्षिणशाखायां 'तानते'त्यादयः सप्त वर्णाः, खड्गवामशाखायाश्च 'श्रियामि'त्यादयः सप्त वर्णाः, चतुष्पथमध्यगो माकारस्तदन्तिमः। ततस्तमेव माकारमारभ्याधोऽधःक्रमेण 'न्याथसी'ति त्रयो वर्णा मुष्टौ लेख्याः, अधश्चतुष्पथमध्ये च 'मा'कारः। ततस्तमेव 'मा'कारमारभ्य तद्दक्षिणशाखायां 'रामाणां शम्' इति चत्वारो वर्णाः, वामशाखायाश्च 'मे दिश्यादु' इति चत्वारो वर्णाः, (C)चतुष्पथमध्यगो माकारस्तदन्तिमः। ततो मुष्टेरधः त्सरुके

---

गस्य प्राथमिकमाकारस्य पञ्चकृत्वः, अधःशाखाचतुष्पथमध्यगस्य द्वैतीयीक-माकारस्य द्विः, मुष्टेरधः त्सरुकमध्यवर्त्तिनस्तार्त्तीयीक-माकारस्य तु सकृत् पाठाच्छ्लोकनिष्पत्तिरित्यवधेयम्।

(A) साकारमारभ्येति। एतेन साकारोऽपि श्लिष्टस्तस्य च द्विः पाठेन श्लोको निर्वाह्यः।

(B) खड्गदक्षिणशाखायामिति खड्गस्य उपरि दक्षिणशाखायामित्यर्थः। एतच्च पूर्वोक्तेन 'खड्गवामे रारीत्यादयश्चतुर्दश वर्णाः, खड्गदक्षिणे च रारब्धेत्यादयश्चतुर्दश वर्णा लेख्याः' इत्यनेन विरुध्यते। तथा हि—'रारी'त्यादयो वर्णा वाम इति 'तानतानां सङ्घट्टः' इति वर्णसप्तकमपि चित्रक्रमाद् वामशाखायामेव भवितुमर्हतीति कथं दक्षिणशाखायामित्युक्तम्? न हि भवति यैव धारा दक्षिणा तत्रत्यैव शाखा वामेत्यवश्यमेकत्र प्रमादः कल्पनीयः। स च प्रमादः किं शाखानिर्णये किं वा धारानिर्णये इति प्रश्ने वक्ष्यमाणो विचारः प्रवर्त्तते—यदि खड्गवतः पुरुषस्य वामादिभागानुपाती खड्गस्य वामादिव्यवहारः स्यात्तदा यदुक्तं 'खड्गवामे रारी'त्यादि तदुपपन्नं स्यात्, अनुपपन्नं पुनः 'खड्गदक्षिणशाखायां तानतेत्यादयः सप्त वर्णा' इति यदुक्तं तत्; यदि च चित्रान्तरमिव पुरुषाभिमुख एव खड्गो भवेत्तदा खड्गदक्षिणशाखायामिति यदुक्तं तदनाकुलम्, आकुलञ्च 'खड्गवामे रारीत्यादयश्चतुर्दशवर्णा' इत्यादि यदुक्तं तत्। किं पुनरत्र युक्तम्? खड्गवामे रारीत्यादि यदुक्तं तदेव, अयुक्तं पुनः पुरुषाभिमुखत्वकल्पनया खड्गदक्षिणशाखायामिति वचनम्, पुरुषक्रमेण वामदक्षिणादिव्यवहारस्य रथ्यादावपि दृष्टत्वात्। एतेन 'दक्षिणशाखायां ता इत्यादिवर्णसप्तकमि'ति साहित्यदर्पणविवृतौ तर्कवागीशेन यदुक्तं तत्तुल्ययोगक्षेमत्वादनादेयमेव। यच्च प्रदीपकृद्भिः 'मेति प्रथमेन माशब्देन श्लिष्टम्' इत्युक्त्वा 'तद्दक्षिणपार्श्वे' इत्युक्तम्, तत् 'मा' इत्यक्षरापेक्षि, न तु खड्गापेक्षीति ज्ञेयम्। यदि च पुरुषाभिमुखः खड्ग इति युक्तं स्यात्तदा सर्वं 'खड्गदक्षिणशाखायामि'त्युक्त्या तर्कवागीशोक्तमप्यदुष्टं स्यात्, प्रदीपकृदुक्तमपि खड्गदक्षिणपार्श्वत्वाभिप्रायकत्वकल्पनया कथञ्चिद् योजनीयम्। 'खड्गवामे रारी'त्याद्युक्तञ्च प्रामादिकमिति। एतेन धाराद्वयं शाखाद्वयञ्च वामदक्षिणादिभिरविशेष्य एकत्र धारायाम् एकत्र शाखायाञ्चेति बालबोधिन्यां यदुक्तं स एव निष्प्रत्यूहः पन्था इति विभावयामः।

(C) चतुष्पथमध्यग इति अधःशाखामध्यचतुष्पथग इत्यर्थस्तदन्तिमशब्दबललभ्यः।

'दिजा' इति 'द्रिजा' इति वा वर्णद्वयं लेख्यमिति वर्णविन्यासः। तस्य संस्थानञ्च लिखित्वाऽत्रैव दर्शितमवधेयम्। इति खड्गबन्धः।

---

## खड्गबन्धः



**शरला बहुलारम्भतरलालिबलारवा।**
**वारलाबहुलाऽमन्दकरला बहुलामला ॥ ३७९ ॥**

मुरजबन्धमाह—शरलेति। अत्र शरद् विशेष्या प्रबन्धगम्या। शरत् कीदृशी? (A)शरला शरकाण्डोद्गमवती। ला आदाने। बहुलारम्भाणां (प्रचुरसंरम्भाणां) तरलानामलिबलानामारवो यस्यां तादृशी। वारला हंस्यो बहुला यस्यां तादृशी। अमन्दाः परचक्राक्रमणसोद्योगाः करलाः करग्राहिणो राजानो यस्यां तादृशी। बहुले कृष्णपक्षेऽप्यमला।

अत्र पङ्क्तिचतुष्टयेन पादचतुष्टयं लेख्यम्। पादानामाद्यान्तिमवर्णान् विहाय (B)पादद्वयीयद्विद्विवर्णैर्मुरजत्रयाकारः। एवमपरपादद्वयेऽपीति (C)षण्मुरजाः। अस्य संस्थानमपि लिखित्वा दर्शितमवधातव्यम्।

**मुरजबन्धः**




(A) सरलेति दन्त्यादिपाठ उद्द्योतकाराद्यभिप्रेतः; मेघादिकौटिल्यरहितेति तदर्थः।

(B) पादद्वयीयेत्यादेः प्रपञ्चस्तु—पंक्तिचतुष्टयेन लिखितस्य पादचतुष्टयस्याधःक्रमेण यथा-क्रमं प्रथमद्वितीयतृतीयचतुर्थान्, ऊर्द्ध्वक्रमेण पञ्चमषष्ठसप्तमाष्टमान् वर्णान् गृहीत्वा प्रथमः पादः। द्वितीयात् प्रथमम्, प्रथमाद् द्वितीयतृतीयौ, द्वितीयात् चतुर्थपञ्चमौ, प्रथमात् षष्ठसप्तमौ, द्वितीयादष्टमं गृहीत्वा द्वितीयः पादः। तृतीयात् प्रथमम्, तुर्याद्द्वितीयतृतीयौ, तृतीयात् तुर्यपञ्चमौ, तुर्यात् षष्ठसप्तमौ, तृतीयादष्टमं गृहीत्वा तृतीयः पादः। पादचतुष्टयस्योर्द्ध्वक्रमेण प्रथमद्वितीयतृतीयचतुर्थान् अधःक्रमेण पञ्चमषष्ठसप्तमाष्टमान् गृहीत्वा चतुर्थः पादः पाठ्यः, एवं मुरजसिद्धिरिति दर्पणविवृतौ तर्कवागीशाः।

(C) षण्मुरजा इति। एवमेव विवरणकृतामप्याशय इति बालबोधिनीतो ज्ञायते, मुरजत्रयाकारो भवतीति सुधासागरे। प्रदीपे सामान्यतो 'मुरजाकारते'त्युक्तम्।

भासते प्रतिभासार ! रसाभाता हताविभा।
भावितात्मा शुभा वादे देवाभा बत ते सभा ॥ ३८० ॥

पद्मबन्धमाह—भासत इति। बत हर्षे। हे प्रतिभासार ! ते तव सभा भासते दीप्यते। कीदृशी ? देवाभा देवतुल्यदीप्तिः। रसाभाता रसैराभाता। हताविभा अविभा विभाभावः हततत्का। भावितात्मा प्रवर्त्तितबुद्धिः। 'आत्मा यत्नो धृतिर्बुद्धिरि'ति कोषः। वादे उद्ग्राहे शुभा। अत्र चतुर्दिक्षु विततमष्टदल-पद्मं लेख्यम्। तत्कर्णिकायाम् आद्यो भाकारस्ततो दले दले निर्गमप्रवेशरीत्या द्वौ द्वौ वर्णौ लेख्यौ, किन्तु दिग्दलेषु निर्गमः प्रवेशश्च। प्राच्यदले त्वादौ निर्गमः श्लोकान्त एव प्रवेशः। अन्यदिग्दलेषु निर्गमानन्तरमेव प्रवेशः। आग्नेयवायव्यकोणयोः प्रवेश एव ईशाननैर्ऋतकोणयोर्निर्गम एव इति। अस्य संस्थानमपि लिखितं द्रष्टव्यम्

पद्मबन्धः



रसासार रसा सारसायताक्ष क्षतायसा ।
सातावात तवातासा रक्षतस्त्वस्त्वतक्षर ॥ ३८१ ॥

( सर्वतोभद्रम् )

---

सर्वतोभद्रबन्धमाह—**रसासारे**ति । हे रसासार भूमौ मुख्य, हे सारसायताक्ष पद्मदीर्घनयन, हे सातावात, साते सुखे अवात अचञ्चल अलोलुप इति यावत्, हे अतक्षर, अतक्षम् अनल्पं रासि ददासि तादृश, तव तु रसा पृथिवी अतासा अनुपतापा अस्तु । 'सारसं सरसीरुहम्' इति, 'शर्म-सात-सुखानि च' इति कोषः । 'तक्षू त्वक्षू तनूकरणे' ; 'रा ला दाने' (A) 'तसु उपतापे' इति धातवः । तव कीदृशस्य ? रक्षतः पालयतः । रसा कीदृशी ? क्षतायसा क्षतो नाशित आय उपचयः अयः शुभावहो विधिर्वा यैस्तान् स्यति अन्तं प्रापयति तादृशी, आयस्य अयस्य वा नाशकनाशिकेत्यर्थः । अत्र पङ्क्तिचतुष्टयेन लिखनम्, अनुलोमप्रतिलोमाभ्यां(B) प्रतिपादपाठः । (C)ऊर्द्ध्वाधश्च प्रतिपादवर्णैः पाठः ।

सर्वतोभद्रम्

र सा सा र र सा सा र
सा य ता क्ष क्ष ता य सा ।
सा ता वा त त वा ता सा
र क्ष त स्त्व स्त्व त क्ष र ॥(D)

---

(A) तसु दसु उपक्षये इति पाणिनीये कलापीये च गणपाठे । उपक्षयो हानिरित्यर्थः ।

(B) प्रतिपादेति । न केवलं प्रतिपादपाठे प्रतिपादार्द्धपाठेऽपि तत्तत्पादसम्पत्तिर्द्रष्टव्या ।

(C) ऊर्द्ध्वाधश्चेति । इहाप्यनुलोमप्रतिलोमाभ्यामिति योज्यम् । अत्रायं प्रपञ्चः—पाद-चतुष्टयस्य चतुर्णामाद्याक्षराणामनुलोमप्रतिलोमाभ्यां पाठेन प्रथमः पादः, तथाऽष्टमानामपि चतुर्णामक्षराणामनुलोमप्रतिलोमाभ्यां पाठेन । एवं द्वितीयानां सप्तमानाञ्च चतुर्णां चतुर्णां वर्णानां तथा पाठेन द्वितीयः पादः । तृतीयानां चतुर्णामक्षराणां तथा पाठेन तृतीयः पादः, एवं षष्ठानामपि । चतुर्थानां चतुर्णामक्षराणाञ्च तथा पाठेन चतुर्थपादः, एवं पञ्चमानामपि ।

(D) अत्र रक्षतः तु अस्तु अतक्षर इति विषमपदच्छेदः ।

(A)सम्भविनोऽप्यन्ये प्रभेदाः शक्तिमात्रप्रकाशकाः, न तु काव्यरूपतां दधतीति न प्रदर्श्यन्ते।

(१२२) पुनरुक्तवदाभासो विभिन्नाकारशब्दगा।
एकार्थतेव

भिन्नरूपसार्थकानर्थकशब्दनिष्ठमेकार्थत्वेन मुखे भासनं पुनरुक्तवदाभासः। स च—

(१२३) ——————————शब्दस्य
सभङ्गाभङ्गरूपकेवलशब्दनिष्ठः।

---

पुनरुक्तवदाभासालङ्कारमाह—पुनरुक्तेति। विभिन्नाकारशब्दगामिनी एकार्थतेव शब्दस्यायमलङ्कार इत्यर्थः। 'मुखे' आपाततः। शब्दस्येति व्याचष्टे—स च

---

(A) टीकाकृताऽव्याख्यातोऽप्ययमंशः सर्वेष्वादर्शभूतमुद्रितपुस्तकेषूपलब्ध इतीह सन्निवेश्यते। प्रदीपकृता स्पृष्टोऽपि उद्योतकृदादिभिरुज्झित इत्यत्रातिरोहितार्थतैव यदि कारणं स्यादस्तु तदा टीकाकृतः परित्यागेऽपि तदेव कारणमिति नामूलोऽयं वक्तुं शक्यते। परं 'कष्टं काव्यमेतदिति दिङ्मात्रं प्रदर्श्यत' इत्युक्त्यैव भेदान्तरसत्त्वमनुमीयत इति सुखार्थोऽयं ग्रन्थः। बन्धभेदा बाहुल्येनाग्निपुराणादावुद्दिष्टाः। तथा च—

१ २ ३ ४
"गोमूत्रिकार्द्धभ्रमणे सर्वतोभद्रमम्बुजम्।
५ ६ ७ ८
चक्रं चक्राब्जकं दण्डो मुरजश्चेति चाष्टधा॥ ३६॥

तथा— बाणबाणासनव्योमखड्गमुद्गरशक्तयः।
द्विचतुर्थत्रिश‍ृङ्गाटा दम्भोलिमुषलाङ्कुशाः॥
पदं रथस्य नागस्य पुष्करिण्यसिपुत्रिका।
एते बन्धास्तथा चान्य एवं ज्ञेयाः स्वयं बुधैः॥" इति।

(अग्नि० ३४३ अ० ६४-६९ श्लो०)

बन्धविशेषे छन्दोविशेषस्योपयोगित्वमाह तत्रैव—

द्वितीयं चक्रं शार्दूलविक्रीडितकसम्पदम्।
गोमूत्रिका सर्ववृत्तैरन्ये बन्धास्त्वनुष्टुभा॥ इति। (अ० ३४३, श्लो० ६२)

उदाहरणम्—

अरिवधदेहशरीरः सहसारथिसूततुरगपादातः ।
भाति सदानत्यागः स्थिरतायामवनितलतिलकः ॥३८२॥

चकासत्यङ्गनारामाः कौतुकानन्दहेतवः ।
तस्य राज्ञः सुमनसो विबुधाः पार्श्ववर्तिनः ॥ ३८३ ॥

(१२४) ———— तथा शब्दार्थयोरयम् ॥ ८६ ॥

उदाहरणम्—

(A)तनुवपुरजघन्योऽसौ करिकुञ्जररुधिररक्तखरनखरः ।
तेजोधाम महःपृथुमनसामिन्द्रो हरिर्जिष्णुः ॥ ३८४ ॥

---

शब्दस्येति । अरिवधदेहेति । अवनितलतिलको भवान् सदाऽनत्या परप्रणिपातेन विना भातितराम् । कीदृशः अरथिसूततुरगपादातो रथ्यादिरहितोऽपि अरिवधदा ईहा यस्य तादृशं शरीरं यस्य तादृशः, स्वयमेव सहसा तेषां विहन्तेत्यर्थः । स्थिरतायामगः पर्वतः । अत्र देह-शरीर-सारथि-सूत-दान-त्यागपदानि पुनरुक्तप्रायाणि ।

अभङ्गशब्दोऽपि दर्शयति—चकासतीति । तस्य राज्ञः पार्श्वपरिवर्त्तिनो विबुधाः पण्डिताः चकासति दीप्यन्ते । कीदृशाः, अङ्गनारामाः अङ्गन(B) एवाऽऽरमन्ते, अप्रवासिन इत्यर्थः । कौतुकस्य प्रहेलिकाद्यूतादेरानन्दस्य हेतवः । सुमनसः शोभनचित्ताः । अत्र अङ्गनारामा-कौतुकानन्द-सुमनोविबुधपदानि पुनरुक्तप्रायाणि ।

शब्दमात्रगतमेनमुक्त्वा शब्दतदर्थगतमप्येनमाह—तथा शब्दार्थयोरिति । तनुवपुरिति । असौ हरिः सिंहस्तनुवपुरपि स्वल्पशरीरोऽपि तेजोधाम तेजसामाश्रयः, महःपृथुमनसां स्वतेजःपुष्टमनसामस्य इन्द्रो विलक्षणः प्रभुः जिष्णुर्जयशीलः । करिकुञ्जराणां हस्तिश्रेष्ठानां रुधिरेण रक्तः शोणः खरः प्रचण्डो नखरो यस्य तादृशः ।

---

(A) 'तनुवपुरप्यन्योऽसावि'ति टीकाकृद्व्याख्यापेक्षी पुस्तकान्तरविलक्षणः पाठः ।

(B) अत्र आरमन्तीत्युचितः पाठः, 'व्याङ्परिभ्यो रमः' इत्यापानुशासनस्य जागरूकत्वात् । 'स्थितेर्गतिश्चिन्तनीया' इति चेत्, सानुबन्धस्याङो योग एवात्मनेपदानुशासनादिह निरनुबन्धः स इत्यभ्युपगन्तव्यम् । निरनुबन्धस्य चाऽऽकारस्य प्रकृते क्रियायोगः कथं कथमपि सोढव्य इति ब्रूमः ।

अत्रैकस्मिन् पदे परिवर्तिते नालङ्कार इति शब्दाश्रयः, अपरस्मिंस्तु परिवर्तितेऽपि स न हीयते इत्यर्थनिष्ठ (A)इत्युभयालङ्कारोऽयम् ।

इति काव्यप्रकाशे शब्दालङ्कारनिर्णयो नाम नवम उल्लासः ॥ ९ ॥

---

अत्रैकस्मिन्निति । तनु-(B)कुञ्जर-रक्त-धाम-हरि-जिष्णुपदानि परिवृत्त्यक्षमाणि, (C)वपुरादिपदानि तु परिवृत्तिक्षमाणि ।

---

(A) इत्युभयालङ्कारोऽयमिति । यद्यप्युभयालङ्कारोऽत्र न प्रकृतस्तथापि शब्दमात्रालङ्कारस्यैव तद्भेदस्यात्र प्रकरणेऽवश्यवक्तव्यतया तत्प्रसङ्गादुभयालङ्कारत्वानपायाच्चोभयालङ्कारभूतोऽप्ययमत्रोक्तः । उभयालङ्कारान्तराणान्तु न कोऽपि भेदः शब्दमात्रालङ्कार इति न तान्यत्र पठितानीति सर्वं रमणीयम् इत्यादि प्रदीपे द्रष्टव्यम् ।

(B) यद्यपि—'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः॥' इत्यनुशासनादत्र कुञ्जरपदपरिवृत्त्या नागपदप्रक्षेपेऽप्यक्षतोऽलङ्कार इति 'तनु-कुञ्जर-रक्त-धाम-हरि-जिष्णुपदानि परिवृत्त्यक्षमाणी'ति टीकाकृद्वचनमसङ्गतमिव प्रतिभाति, तथापि परिवृत्त्यक्षमाणीत्यस्य पर्याय-यावत्पदपरिवृत्त्यक्षमाणीत्यर्थो विधेयः, परिवृत्तिपदस्य सर्वत्र तथाऽभिप्रायदर्शनात् । तथा चात्र पर्यायभूतस्य केवलनागपदस्य सन्निवेशक्षमत्वेऽपि हस्त्यादियावत्पर्यायपदसन्निवेशक्षमत्वं कुञ्जरपदस्य नास्तीति सर्वमनवद्यम् ।

(C) वपुरादिपदानीति । आदिपदग्राह्याण्यत्र करिहधिरेन्द्रपदानि, परिवृत्त्यक्षम कुञ्जरादिपदपारिशेष्यात् । परिवृत्तिक्षमत्वाक्षमत्वे च यावद्भिरेव पर्यायपदैरित्यधस्तादुक्तं स्मारयामः ।

अत्र च बालबोधिनीकारेण—'इन्द्रशब्दस्य परिवृत्तिसहत्वन्तु वृषशब्देनेति बोध्यम् । वृषशब्दस्य श्रेष्ठवाचित्वं देवेन्द्रवाचित्वञ्च—'वृषो गव्याखुधर्मयोः । पुंराशिभेदयोः शृङ्ग्यां वासवे शुक्लेऽपि च । श्रेष्ठे स्यादुत्तरस्थे च' इति हेमचन्द्रकोषेषु सुप्रसिद्धमिति ज्ञेयम्' इति यदात्मनो वैदुष्यमाविष्कृतं तदत्यल्पमिति कल्पयामः । न हीन्द्रपदमपि मुख्यया वृत्त्या श्रेष्ठार्थबोधकमनभिधानात्, परं लक्षणयैवेत्यवश्यमभ्युपेयम् अन्यथा प्रकृतपदार्थ एव विघटितः स्यात् । एवञ्च—किं नामापराद्धं वराकैर्मरुत्वदादिपर्यायपदैर्येन तान्यपि लक्षणया तदर्थं नावगमयेयुः । यच्च तेन श्रेष्ठरूपोऽर्थ इन्द्रशब्दस्य व्युत्पत्तिलभ्य इति दर्शयितुम्—'इदि परमैश्वर्ये इति धातुस्तस्माद् रक्प्रत्ययः' इत्युक्तम्, तदपि मनोरथमात्रम्, श्रेष्ठपर्याये परमैश्वर्यशालित्ववाचकशब्दादर्शनात् । किञ्च, हैमकोषादपि उत्तरपद एव वृषशब्दः श्रेष्ठार्थवाचक इति लभ्यते, समासान्तिमपदञ्च उत्तरपदत्वेन रूढमित्यसमासे 'पृथुमनसामिन्द्रः' इत्यत्र 'पृथुमनसां वृष' इत्यस्य कुतः प्राप्तिर्येन तन्मात्रेणैवेन्द्रपदं परिवृत्तिक्षममिति कल्प्येत । सिद्धान्ते तु—मुख्यया वृत्त्या श्रेष्ठार्थं

(A)यद्यप्यरिवधदेहेत्यादावपि शरीरादिपदानि परिवृत्तित्तमाणीत्यविशेषः, तथापि दान-त्यागपदयोः परिवृत्त्यत्तमत्वात्तदंश एव शब्दमात्रालङ्कारोदाहरणं तदिति मन्तव्यम् ।

इति श्रीमहेश्वर-न्यायालङ्कार-भट्टाचार्यकृतकाव्यप्रकाशादर्शे नवमः शब्दालङ्कारप्रतिबिम्बः ।

---

प्रतिपादयतो वृषशब्दस्योत्तरपदत्वाभिधानात् लक्षणया तदर्थबोधकस्य पुरन्दरवाचकस्य तस्य न तथात्वमिति न काचिदनुपपत्तिः । अपि च, यथा नागपदमात्रेण परिवृत्तिसहत्वेऽपि कुञ्जरपदस्य परिवृत्त्यसहत्वं पर्यायपावत्पदपरिवृत्त्यसहत्वादङ्गीकृतम्, एवमत्रापि न्यायसाम्यात् पर्यायपावत्पद-परिवृत्तिसहत्वमेव तत्त्वमभ्युपगन्तव्यम्, अतो मरुत्वदादि-यावत्पर्यायशब्देनैव परिवृत्तिक्षमत्व-मिन्द्रपदस्यावश्यकम्, न वृषशब्दमात्रेणेति सर्वं चतुरस्रम् ।

(A) यद्यपीति । शरीरादीत्यादिपदात् सूतपरिग्रहः । स्वकृतव्याख्याविषमूर्च्छितेनात्र टीकाकृता दानत्यागपदयोरेव शब्दालङ्कारत्वमिति यदुक्तं तदुत्करमिति पश्यामः । तथा हि— यद्यत्र—'अरिवधदा ईहा यत्र तादृशान् शरिण ईरयती'ति, तथा 'सहसा हठेन रथिना सुष्ठु उतं तुरगपादातं यस्ये'ति च प्रदीपकृदुक्तदिशा श्लोकोऽयं व्याख्यातोऽभविष्यन्न नूनमस्यैवं कर्कटकीगर्भायितत्वमभविष्यत् ।

## दशम उल्लासः

(A)अर्थालङ्कारानाह—

### ( १२५ ) (B)साधर्म्यमुपमा भेदे

(A) अर्थालङ्कारानाहेति। ते चैकषष्टिर्न्यूनाधिकत्वसंशयापनुत्तये प्रदीपे गणिताः ; तथा हि—

१ २ ३ ४ ५ ६ ७
'उपमाऽनन्वयस्तद्वदुपमेयोपमा ततः। उत्प्रेक्षा च ससन्देहो रूपकापह्नुती तथा ॥
८ ९ १० ११ १२
श्लेषस्तथा समासोक्तिः प्रोक्ता चव निदर्शना। अप्रस्तुतप्रशंसातिशयोक्ती परिकीर्त्तिते ॥
१३ १४ १५ १६ १७
प्रतिवस्तूपमा तद्वद्दृष्टान्तो दीपकं तथा। तुल्ययोगितया चैव व्यतिरेकः प्रकीर्त्तितः ॥
१८ १९ २० २१ २२ २३
आक्षेपो विभावना च विशेषोक्तिस्तथैव च। यथासंख्यमर्थान्तरन्यासः स्यातां विरोधवत् ॥
२४ २५ २६ २७ २८ २९ ३०
स्वभावोक्तिस्तथा व्याजस्तुतिः प्रोक्ता सहोक्तिवत्। विनोक्तिपरिवृत्ती च भाविकं काव्यलिङ्गवत् ॥
३१ ३२ ३३ ३४ ३५ ३६
पर्यायोक्तमुदात्तञ्च समुच्चय उदीरितः। पर्यायश्चानुमानञ्च प्रोक्तः परिकरस्तथा ॥
३७ ३८ ३९ ४० ४१ ४२ ४३ ४४
व्याजोक्तिपरिसंख्ये च विज्ञेये हेतुमालया। अन्योन्यमुत्तरं सूक्ष्मसारौ तद्वदसङ्गतिः ॥
४५ ४६ ४७ ४८ ४९ ५० ५१ ५२
समाधिश्च समेन स्याद्विषमस्त्वधिकेन च। प्रत्यनीकं मीलितञ्च स्यातामेकावलीस्मृती ॥
५३ ५४ ५५ ५६ ५७ ५८ ५९
भ्रान्तिमांस्तु प्रतीपेन सामान्यञ्च विशेषवत्। तद्गुणातद्गुणौ चैव व्याघातः परिकीर्त्तितः ॥
६० ६१
संसृष्टि-सङ्करौ चैवमेकषष्टिरुदीरिताः ॥ इति,

तेष्वनेकालङ्कारमूलभूतत्वेन सौकुमार्यातिशयाच्च प्रधानमुपमां प्रथमं लक्षयती'ति च प्रदीपकृतः। "तेष्वनेकेति—उपमेयोपमाऽनन्वय-प्रतीप-स्मरण-रूपक-ससन्देह-भ्रान्तिमदपह्नवोत्प्रेक्षातिशयोक्ति-तुल्ययोगिता-दीपक-प्रतिवस्तूपमा-दृष्टान्त-निदर्शना-व्यतिरेक-सहोक्ति-समासोक्त्याद्यनेकेत्यर्थः" इति तद्व्याख्यामावसरे उद्द्योतकृतः।

(B) साधर्म्यमिति। समानस्तुल्यो धर्मो गुणक्रियादिरूपो ययोस्तौ सधर्माणौ तयोर्भावः साधर्म्यं समानो धर्म इत्यर्थः। तथा च उपमानोपमेयानुयोगिकः साधारणधर्मप्रतियोगिकः सम्बन्धः साधर्म्यमित्यर्थः। सादृश्यन्तु उपमानप्रतियोगिक उपमेयानुयोगिकः सम्बन्ध

(A)उपमानोपमेययोरेव [1]न कार्यकारणयोः[1]* साधर्म्यं भवतीति तयोरेव समानेन धर्मेण सम्बन्ध उपमा। भेदग्रहणमनन्वय-व्यवच्छेदाय

---

उपमालङ्कारमाह—साधर्म्यमिति। भेद इति (B) उपमानोपमेययोर्भेद इत्यर्थः। उपमानोपमेयलाभश्चार्थवशादित्याह—उपमानेति। न कार्यकारणयोरिति। उपमानोपमेयत्वेनाविवक्षितयोः कार्यकारणयोरेव नेत्यर्थः। तथात्वेन विवक्षणे तु कार्यकारणयोरपि भवति। यथा [2]'पुत्रं लभस्वात्मगुणानुरूपं भवन्तमीड्यो भवतः पितेव' (रघु० ५।३४), यथा वा[2]* वक्ष्यमाणे 'भणितिरिव मतिर्विमले'त्यत्र भणिति-मत्योः कार्यकारणयोः साधर्म्यमाह। तयोरेव समानेनेति। तदुभयसाधारणेन धर्मेणोपमानस्य सम्बन्ध इत्यर्थः। 'चन्द्र इव मुखमि'त्यत्र हि चन्द्रप्रतियोगिक-[3]सादृश्याश्रयो मुखमिति प्रतीतिः। अत्र च चन्द्रप्रतियोगिकसादृश्यस्य इवशब्दार्थत्वेऽपि चन्द्रनिष्ठं यत् सादृश्यप्रतियोगित्वं सैवोपमा लाघवात् न तु सादृश्यांशोऽपीत्यभिप्रायेण सम्बन्धपर्यन्तानुधावनम्, एतच्चाग्रे उपमायाः श्रौतार्थत्वविभागेन व्यक्तीभविष्यति। न च सादृश्यमेव इव-शब्दार्थः, प्रतियोगितांशश्च संसर्गमर्यादयैव लभ्यते इति वाच्यम्,

---

इत्यनयोर्भेदः। अनयोश्च साधर्म्यसादृश्ययोः प्रयोजकप्रयोज्यभावः सम्बन्धः। एवञ्च पद्म-मिव मुखं मनोज्ञम् इत्यत्र मनोज्ञत्वस्योभयवृत्तित्वात् पद्ममुखानुयोगिकमनोज्ञत्वप्रतियोगिकः सम्बन्धः प्रकृते साधर्म्यम्, तच्च पद्मप्रतियोगिकमुखानुयोगिकस्य इव-शब्दवाच्यस्य सादृश्याख्य-सम्बन्धस्य प्रयोजकमिति। अत एव विश्वनाथेनापि 'साधारणधर्मो द्वयोः सादृश्यहेतू गुणक्रिये मनोज्ञत्वादि' इत्यनेन सादृश्यस्य साधारणधर्मप्रयोज्यत्वमुक्तम्।

(A) उपमानोपमेययोरेवेति। साधारणधर्मवत्तया प्रसिद्धः पदार्थ उपमानम्। तद्वत्तया वर्णनीयः पदार्थश्चोपमेयम्।

(B) उपमानोपमेययोर्भेद इति। "उपमेयतावच्छेदकोपमानतावच्छेदकयोर्भेद इत्यर्थः; न तूपमेयोपमानयोर्भेद इति, तथा सति देशकालभेदेन स्वेनैव स्वस्य साधर्म्येऽव्याप्तेः, यथा—

---

1. 'न तु कार्यकारणादिकयोः' इति पाठः क्वचित्। 2. अयमंशः क-ग-पुस्तकयोर्नास्ति। 3. 'सादृश्यवन्मुखमित्यर्थः। तत्र च चन्द्रनिष्ठसादृश्यप्रतियोगितारूपस्य सम्बन्धस्यापि सादृश्यवाचकेवादिशब्दवाच्यत्वस्य तादृशसम्बन्धस्यैवोपमात्वस्य च वक्ष्यमाणत्वात्। समानधर्मस्तु नोपमा प्रतियोगितारूपसम्बन्धस्यैव वाच्यत्वावाच्यत्वाभ्याम् उपमायाः श्रौतीत्वार्थीत्वयोर्वक्ष्यमाणत्वात्। समानधर्मांशमपहाय तत्सम्बन्धमात्रस्यैवोपमात्वकल्पने लाघवमिति तु तदभिप्रायः।' एषा विचारसमाप्तिरयं पाठः ग-पुस्तके।

(१२६)————————पूर्णा लुप्ता च

उपमानोपमेय-साधारणधर्मोपमाप्रतिपादकानामुपादाने पूर्णा, एकस्य द्वयोस्त्रयाणां वा लोपे लुप्ता।

(१२७)——————————————साऽग्रिमा।

श्रौत्यार्थी च भवेद्वाक्ये समासे तद्धिते तथा॥ ८७।

अग्रिमा पूर्णा। यथेववादिशब्दा यत्परास्तस्यैवोपमानता-

---

अव्ययानामन्विताभिधायित्ववादिनामेषां मते चन्द्रप्रतियोगिकत्वविशिष्टसादृश्यस्यैव इवादिशब्दवाच्यत्वात्; एतच्चाग्रे व्यक्तीभविष्यति (४८० पृ०)। तथा च समानेन धर्मेण तयोरेव सम्बन्ध इति नान्वयः, किन्तु तयोरेव समानेन (A)धर्मेण उपमाने सादृश्य-प्रतियोगिताख्यः सम्बन्ध उपमेत्येवार्थः[3]*। अनन्वयेति, 'नितम्बिनी सैव नितम्बिनीवे'ति वक्ष्यमाणानन्वयालङ्कारव्यवच्छेदायेत्यर्थः।

तस्य द्वैविध्यमाह—पूर्णेति। लोप इति, अनुपादान इत्यर्थः।

साऽग्रिमेति सूत्रैकदेशः। उक्तयोः पूर्णालुप्तयोरग्रोक्तत्वेन पूर्णा। सा द्विविधेत्याह—श्रौत्यार्थी चेति। द्विविधैव सा वाक्यसमासतद्धितगामित्वभेदात् षड्विधा भवतीत्याह—भवेद् वाक्ये इत्यादि। तत्र श्रौतीत्वं ग्राहयति—यथेव-वादीति। आदिपदाद् (B) व-शब्दपरिग्रहः[1]। तत्सद्भावे श्रौतीत्यग्रेऽन्वयः। यत्परा इति, यत्परभावेनैव स्वार्थान्वयबोधका इत्यर्थः, तेन 'तथा मुखं यथा चन्द्रः'

---

"लोहितपीतैः कुसुमैरावृतमाभाति भूभृतः शिखरम्।
दावज्वलनज्वालैः कदाचिदाकीर्णमिव समये॥"

इति केश्चिद् यदुक्तं तदर्वाचीननैयायिकमतानुसारेण; विशिष्टात् केवलं पृथगिति प्राचीनमते तु कुसुमावृतशिखराद् भिन्नमेव दावज्वलनज्वालाकीर्णं शिखरमिति न काचिदनुपपत्तिः। वस्तुत-स्त्वत्र कदाचिदादिपदैरभिहितः काल एव तयोर्भेदक इत्युपपन्नोपमेति नात्रानन्वयशङ्का।

A. धर्मेणेति गुणेन क्रियया वा। क्वचित्त्वेकशब्दवाच्यत्वरूपमपि साधर्म्यं भवति।

B. व-शब्दपरिग्रह इति, 'व वा यथा तथैवैवं साम्ये' इत्यमरात्, 'वं प्रचेतसि जानीयादिवार्थे च तदव्ययम्' इति विश्वकोषाच्चेवार्थकत्वं व-शब्दस्येति भावः।

---

1. एतदनन्तरं क-पुस्तके 'क्वचित्तु यथेववाशब्दा इत्येव पाठस्तिष्ठति स न रुचिरस्तदा व-शब्दापरि-ग्रहापत्तेः' इत्यधिकः।

प्रतीतिरिति यद्यप्युपमानविशेषणान्येते तथापि शब्दशक्तिमहिम्ना

इत्यत्र यथाशब्दस्य चन्द्रात् पूर्वं मुखाच्च परतः पातेऽपि चन्द्र एवोपमानताप्रतीतिः, अन्वयबोधे चन्द्रपरभावेनैव यथाशब्दस्योपमानताप्रत्यायकत्वनियमात्।

ननु तस्यैवोपमानताप्रतीतिरित्युक्त्या अन्यस्योपमानता न प्रतीयते इत्येवार्थो लभ्यते, तच्च कथमुपमायाः श्रौतीत्वसाधकम्? तुल्यादिपदोपादाने यत्राऽऽर्थीत्वमुपमाया वक्ष्यते तत्राप्यन्यस्योपमाप्रतीत्यभावेनाविशेषादिति चेत्, न; तस्योपमाप्रतीतिरेवेत्येवमेवकारयोजनया उपमाप्रतीत्ययोगव्यवच्छेदलाभात्। तुल्यादिपदोपादाने तु उपमाप्रतीत्ययोगोऽप्यग्रे (A)दर्शयिष्यते। तथा यच्छब्दोपादाने अन्तरा बाधोपस्थितिं विना यत्प्रतीत्यवश्यम्भावरूपो यत्प्रतीत्ययोगव्यवच्छेदः सोऽर्थस्तद्वाच्य एवेति व्याप्तिदर्शनमनेन कृत्वा उपमायाः शब्दवाच्यत्वं साधितम्। न चोपमानतायाः प्रतीत्ययोगव्यवच्छेदेऽपि कथमुपमायास्तथात्वसिद्धिरिति वाच्यम्, (B)उपमाननिष्ठायाः सादृश्यप्रतियोगिताया एवोपमानतात्वमुपमान(मात्व ?)ञ्चेति सिद्धान्तेन तयोरभेदादुपमानतायाः श्रौतीत्वमेवोपमायाः श्रौतीत्वम्।

तादृश्या उपमाया इवादिवाच्यत्वरूपं श्रौतीत्वं साधयितुं चन्द्र इव मुखमित्यादौ चन्द्रपदोत्तरं (C)प्रकारीभूतार्थकविभक्तिभिन्नप्रथमाविभक्तिसत्त्वे चन्द्रोपमाप्रतीत्यनुपपत्तिं वाक्यमध्य एव कण्टकं यद्यपीत्यादिनाऽऽशङ्क्य तथापीत्यादिना समाधित्सुराह—(D)**यद्यपीति**। विशेषणानीत्यत्र विशेषणपदमन्वयिपरम्। तथा

---

(A) दर्शयिष्यत इति 'तेन तुल्यं मुखम्' इत्यादिग्रन्थव्याख्यानावसरे (४८२ पृः) इत्यर्थः।

(B) उपमानेत्यादि। एतच्चेतः पूर्वम् उपमानिर्णयावसरे—'उपमानोपमेययोरेव समानेन धर्मेण उपमाने सादृश्यप्रतियोगिताख्यः सम्बन्ध उपमा' इत्यादिना विवृतं टीकाकृता।

(C) प्रकारीभूतार्थकेत्यादि। अयमत्राशयः—'चन्द्र इव मुखम्' इत्यत्र चन्द्रान्वयिन इवशब्दस्य सादृश्यमर्थः, तदंशे च चन्द्रो भेदेन विशेषणम्। एवञ्च नामार्थद्वयस्य भेदेनान्वयबोधे प्रकारीभूतविभक्त्यर्थोपस्थितेस्तन्त्रतया चन्द्रस्येवेति षष्ठी भवितुमर्हति न पुनश्चन्द्र इवेति प्रथमा, तथा चात्रोपमाप्रतीत्यनुपपत्तौ प्रथमा विभक्तिरेव बीजत्वे पर्यवस्यतीति भावः।

(D) यद्यपीत्यादिग्रन्थस्योत्थितिबीजमन्यथैवाहुः सुधासागरप्रदीपकारादयः—नन्वयं विभागोऽनुपपन्नः, उभयत्र सादृश्यप्रत्ययाविशेषात्। न च वाच्यं यथादिशब्दैः साधारणधर्मसम्बन्ध उभयत्र शक्त्यैव बोध्यते न पुनस्तुल्यादिशब्दैः, अयमेव विशेष इति, यतो यथादिशब्दा यदनन्तरमुपात्तास्तस्यैवोपमानताप्रतीतिरित्युपमानविशेषणानि ते; अत उपमाने तत्सम्बन्धं बोधयन्तु न पुनरुपमेये, अन्यविशेषणस्यान्यत्र सम्बन्धबोधकत्वादर्शनादिति।

**श्रुत्यैव षष्ठीवत् सम्बन्धं प्रतिपादयन्तीति तत्सद्भावे श्रौती उपमा।**

---

च एते इवादयो यद्यपि उपमानविशेषणानि विशेष्यीभूय उपमानान्वितस्वार्था इत्येवार्थः, चन्द्रप्रतियोगिकसादृश्यरूपे स्वार्थे चन्द्रस्य विशेषणत्वात्, न तूपमानं विशेषणं येषामिति बहुव्रीहिणैतादृशार्थलाभः, तदा विशेषणानीति (A)नपुंसकत्वानुपपत्तेः। एवञ्चोपमानस्य चन्द्रस्य भेदेन सादृश्यविशेषणत्वे तत्र चन्द्र इवेति प्रथमाविभक्त्यनुपपत्तिरिति यद्यपीत्याद्याशङ्कार्थः, नामार्थद्वयस्य भेदेनान्वयबोधे प्रकारीभूतविभक्त्यर्थोपस्थितेस्तन्त्रत्वेन प्रकारानुपस्थापकप्रथमासत्त्वे तदनुपस्थितेः (पत्तेः ?); समाधानान्तरसत्त्वे निपाताव्ययातिरिक्तविशेषणस्यादेयत्वमिति मीमांसकाभिप्रायात्। समाधानमेवाह—**तथापीति**। इवाद्यव्ययपदानां शक्तेः सामर्थ्यस्य महिम्ना इवादयः श्रुत्यैव (B)शक्त्यैव सादृश्यप्रतियोगितारूपं सम्बन्धं प्रतिपादयन्तीत्यर्थः। तत्र दृष्टान्तमाह—**षष्ठीवदिति**। चन्द्रस्य सदृश इत्यत्र यथा षष्ठी चन्द्रनिष्ठप्रतियोगितारूपं सादृश्यस्य सम्बन्धं प्रतिपादयति, तथा चन्द्र इवेत्यादावपीवादयस्तं सम्बन्धं प्रतिपादयन्तीत्यर्थः। चन्द्रनिष्ठसादृश्यप्रतियोगितारूपसम्बन्ध इवादिपदार्थ एव न तु वाक्यार्थः, येन संसर्गविधया तद्बोधे प्रथमानुपपत्तिरिति भावः।

न च सम्बन्धस्य इवादिवाच्यत्वे भेदेन चन्द्रे तदन्वयेऽपि सैवानुपपत्तिरिति वाच्यम्, अव्ययानां सुब्विभक्तीनाञ्चान्विताभिधायित्वमतावलम्बनेनैतत्सिद्धान्तात्। एवञ्च घटो न पटो नेत्यादावपि (C)एवमेव समाधानम्। (D)चन्द्रादिपदन्वितरान्वितत्वेन गृहीतशक्तिकस्य इवादेरितरविशेषस्मारकम् इति तत्सिद्धान्तः। यत्तु 'वाच्य एव वाक्यार्थ इति त्वन्विताभिधानवादिन' इति प्रागुक्तं तदप्यव्ययविभक्तिघटितवाक्यार्था-

---

(A) नपुंसकेत्यादि, पुंविशेषणत्वादिति भावः।

(B) शक्त्यैवेति। तुल्यादिशब्दास्तु सादृश्यमात्रं शक्त्या प्रतिपादयति। प्रतियोगिता तु वाक्यार्थ इति तेषां भेदः। 'एवञ्च तुल्यादिपदानामनव्ययतयाऽन्विताभिधानस्वीकारेण अर्थबोधात् प्राक् पदार्थोपस्थितिमात्रं जनयित्वा उपमेय एव विश्रान्तिः, पश्चात्तूपमानपदार्थानुसन्धानेन च उपमानस्य सादृश्योपमानप्रतीतिरिति भावः' इति दर्पणे तर्कवागीशाः।

(C) एवमेवेत्यादि। यथाऽन्विताभिधानमतावलम्बनेन चन्द्र इव मुखमित्यत्र इवशब्दः पदार्थोपस्थितिमन्तरेण समभिव्याहृतपदार्थयोरन्वितं सादृश्यं बोधयति, तथा घटो नेत्यत्रापि नञ्पदं सम्बन्धिपदार्थयोरन्वितं भेदं ग्राहयति। घटो नेत्यत्र घटनिष्ठभेदप्रतियोगित्वं नञर्थस्तस्याभेदेन घटपदार्थेऽन्वयाद् घटो भेदप्रतियोगीत्यर्थ इति।

(D) न चैवं चन्द्रादिपदं व्यर्थम्, सम्बन्धविधया इवाद्यर्थ एव तदर्थस्य प्रवेशादित्याह—चन्द्रादीत्यादि। एवञ्च किञ्चिन्निष्ठप्रतियोगितारूपं सादृश्यस्य सम्बन्धमिवादिर्बोधयतु विशिष्य चन्द्रनिष्ठप्रतियोगित्वं तु न बोधयेदित्यतश्चन्द्रपदोपादानम्।

**तथैव "तत्र तस्येव" (पा० ५।१।११६) इत्यनेनेवार्थे विहितस्य वतेरुपादाने।**

**'तेन तुल्यं मुखमि'त्यादावुपमेये एव, 'तत्तुल्यमस्ये'त्यादौ**

---

भिप्रायेण, मतविशेषे सर्ववाक्यार्थस्यैव तथात्वाभिप्रायेण वा। इह तु तुल्याद्यनव्ययानां पदानामतथात्वस्य वक्ष्यमाणत्वादव्ययानामेव तथात्वेऽभिप्राय इति बोध्यम्।

अथ प्रकारीभूतविभक्त्यर्थोपस्थितेस्तन्त्रन्वस्य नैयायिकोक्तेन (A)निपाताव्ययातिरिक्तविशेषणेनैव समञ्जसे किमर्थं प्रतियोगितारूपस्य सम्बन्धस्येवाद्यव्ययपदवाच्यत्वमङ्गीकृत्यान्विताभिधानमतावलम्बनमिति चेन्न; चन्द्रस्य सदृशं मुखमित्यत्र षष्ठी भवति, चन्द्र इव मुखमित्यत्र षष्ठी न भवतीत्यत्र षष्ठ्यर्थस्येवादिवाच्यतया (B)षष्ठ्यप्रयोगस्यैव तद्बीजत्वात्, सदृशाद्यनव्ययपदानान्तु वाच्यो न सम्बन्ध इति तत्र षष्ठीप्रयोगान्निपाताव्ययातिरिक्तविशेषणदाने गौरवाच्च(C)। 'श्रौती' शब्दवाच्या। इवार्थकवतेरप्युपमावाचकत्वमाह—**तथैवेति**, इवादिशब्दसद्भावस्थल इवेत्यर्थः। 'तत्र तस्येवे'ति पाणिनिसूत्रम्, तत्रेव तस्येवेति तदर्थः, षष्ठ्यन्तात् सप्तम्यन्ताद् वा विहितो वतिप्रत्यय इवार्थक इत्यर्थः। इवशब्दवदेव तस्यापि व्युत्पत्तेस्तस्यापि वाच्या उपमेत्यर्थः।

(D)तुल्याद्यनव्ययपदानान्तु नोपमा वाच्येत्यतस्तत्सद्भावे आर्थ्येवोपमेति साधयितुं तुल्यादिपदसद्भावे शब्दत उपमाप्रतीत्ययोगं दर्शयन्नाह—(E)**तेन तुल्यमि**ति। उप-

---

(A) निपातेत्यादि। तथा च तन्मते निपाताव्ययस्थले प्रथमाविभक्तिसत्त्वेऽपि भेदान्वयः।

(B) षष्ठ्यप्रयोगस्येति। 'चन्द्रस्य सदृशम्' इत्यत्र षष्ठी चन्द्रनिष्ठप्रतियोगितारूपं सादृश्यस्य सम्बन्धं बोधयति, असति बाधके समानार्थकस्थले चन्द्र इवेत्यत्रेवशब्देनापि तस्यैव सम्बन्धस्य प्रतिपादनौचित्यात्। तथा च षष्ठ्यप्रयोगस्योक्तार्थतैव बीजमिति भावः।

(C) अत्रायं सङ्क्षेपः—चन्द्र इव मुखमित्यत्रेवशब्दार्थः सादृश्यप्रतियोगितारूपः सम्बन्धः स एवोपमा, न तु केवलं सादृश्यम्, 'चन्द्रस्य सदृशं मुखम्' इत्यादौ च प्रतियोगितांशविनाकृतमेव सादृश्यं सदृशशब्दार्थः, अतस्तथाविधस्थले सादृश्यप्रतियोगितारूपाया उपमाया आर्थीत्वम्। तथा प्रतियोगितारूपसम्बन्धस्य तुल्यादिपदेनानुपस्थापनात् चन्द्रपदात् तद्बोधिका षष्ठी तिष्ठति। 'चन्द्र इव मुखम्' इत्यत्र च सादृश्यप्रतियोगित्वरूपं षष्ठ्यर्थम् इवशब्द एव वक्तीति श्रौती (वाच्या) उपमा। 'उक्तार्थात् प्रथमैव ह्री'ति नियमानुसारेण च चन्द्रपदात् प्रथमैवेति।

(D) तुल्याद्यनव्ययेत्यादि। तुल्यादिपदानां सादृश्यमात्रार्थकत्वादिति भावः।

(E) अत्र सर्वत्र तत्पदार्थश्चन्द्रबिम्बम् इदंपदार्थश्च मुखमिति ज्ञेयम्। यच्च टीकाकृता तत्पदार्थश्चन्द्रबिम्बम् इदंपदार्थो मुखमित्येकत्र, इदंपदार्थः पद्मं तत्पदार्थो मुखमित्यपरत्र प्रत्य-

चोपमान एव, 'इदं च तच्च तुल्यमि'त्युभयत्रापि तुल्यादिशब्दानां विश्रान्तिरिति साम्यपर्यालोचनया तुल्यताप्रतीतिरिति साधर्म्यस्याऽऽर्थत्वात् तुल्यादिशब्दोपादाने आर्थी; तद्वत् "तेन तुल्यं क्रिया चेद् वतिः"(पा० ५।१।११५) इत्यनेन विहितस्य वतेः स्थितौ।

---

मेय एव तुल्यादिशब्दानां विश्रान्तिरित्यग्रेऽन्वयः। एवमन्यद्वयेऽपि बोध्यम्। विश्रान्तिश्च विशेष्यताप्रतीतिः, तत्प्रतीत्या च तत्रोपमेयतैव, विशेषणे चोपमानतैव प्रतीयते; उपमानोपमेययोर्मध्ये विशेष्यताया उपमेयताव्याप्यत्वाद् विशेषणतायाश्चोपमानताव्याप्यत्वादिति भावः। **तत्तुल्यमस्येति**, 'तत्' चन्द्रबिम्बम्, 'अस्य' मुखस्य तुल्यमित्यर्थः। (A)न चात्र चन्द्रबिम्बमुपमेयमेवेति वाच्यम्, प्रसिद्ध्या तत्रैवोपमानतायां तात्पर्येऽप्येवं प्रयोग इति भावात्। 'इदं' पद्मं 'तच्च' मुखम्। (B)'एवञ्च विशेषणे उपमाने तुल्यादिशब्दादुपमानतारूपाया उपमायाः प्रतीत्ययोगेन तस्यास्तुल्यादिशब्दवाच्यत्वं'[1]* नास्तीत्यतस्तत्र पर्यालोचनयैवोपमाप्रतीत्या तत्सद्भावे आर्थीत्वमाह— **साम्यपर्यालोचनयेति**। साम्येन या पर्यालोचना तया 'तुल्यतायाः' उपमायाः प्रतीतिरित्यर्थः। 'साधर्म्यस्य' समानधर्मसम्बन्धस्य उपमाया इत्यर्थः। तुल्यार्थकस्य वतेरप्यार्थीत्वमाह—**तद्वदिति**, तुल्यादिपदवदित्यर्थः। 'तेन तुल्यमि'ति पाणिनिसूत्रम्। 'स्थितौ' उपादाने। मुखमिदं चन्द्रो यथेत्यादौ श्रौत्या वाक्य-

---

पादि तदनवधाननिबन्धनमिति प्रतीयते, एकार्थे नियमनसम्भवे तत्पदस्य नानार्थकल्पनस्यान्याय्यत्वात्। यच्चेदंपदार्थः पद्ममित्यादि तदपि नातिमनोरमम्। इदंपदस्य सन्निकृष्टवस्तुविषयकतया प्रायेणोपमेयवाचकतैव स्वारसिकी नोपमानवाचकता। एतद्दोषपरिजिहीर्षया 'इदं मुखं तच्च पद्मम्' इति तर्कितक्रमविपर्ययोऽपि पाठः पूर्वदोषानुद्धाराद्धेयपक्ष एव निक्षेप्तव्यः स्यादिति।

(A) न चात्रेति। न चास्तु चन्द्रबिम्बमेवात्रोपमेयं को दोष इति वाच्यम्, उपमेये तुल्यादिशब्दानां विश्रान्तेः पूर्वमुक्तत्वात् पुनरुक्तत्वापत्तेः। तर्कवागीशानान्तु—वस्तुतस्तु कमलमत्रोपमेयमेव। इयमेव विपर्यासोपमेति दण्डी, 'तवाननमिवोन्निद्रमरविन्दमभूदिति। सा प्रसिद्धिविपर्यासाद्विपर्यासोपमेष्यते॥' इति तल्लक्षणादित्याशयः।

(B) एवञ्चेति। तुल्यादिपदानां नियमेनैकत्र विश्रान्तेरभावादित्यर्थः। ततश्च क्वचिदुपमाने विश्रान्तात्तुल्यादिपदादुपमानतारूपाया उपमायाः प्रतीतेर्योगे सम्भवत्यपि सर्वत्र तथात्वाभावान्न तुल्यादिपदयोगे श्रौत्युपमेति टीकाकृतामाशयः।

---

1. एवञ्च पूर्वोक्तद्वये यथा तथा वा भवतु 'इदञ्च तच्चे'त्यादौ तु द्वयोरेव तुल्यपदार्थसादृश्यविशेषणत्वेन विशेषणतानियताया उपमानतारूपोपमायाः प्रतीत्ययोगेन तुल्यादिशब्दानामुपमावाचकत्व'' इति ख-पाठः।

(A)"इवेन नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च" इति (वा० २।४।७१) नित्यसमासे इवशब्दयोगे समासगा। क्रमेणोदाहरणम्—

स्वप्नेऽपि समरेषु त्वां विजयश्रीर्न मुञ्चति।
प्रभावप्रभवं कान्तं स्वाधीनपतिका यथा॥ ३८७॥

चकितहरिणलोललोचनाया:
क्रुधि तरुणारुणतारहारिकान्ति।

गामित्वं स्फुटमेव। तस्याः समासगामित्वन्तु दर्शयति—इवेनेति। इदं पाणिनिसूत्रम्। पूर्वपदेति। असमासकाले य उदात्तादिस्वरः समासकालेऽपि तादृश एव स्वर इत्यर्थः। क्रमेणेति, श्रौत्याार्थ्योर्वाक्यगामित्वं ततः समासगामित्वं ततस्तद्धितगामित्वमिति क्रमेणेत्यर्थः। स्वप्नेऽपीति। स्वप्नो निद्रा, सा च विजयश्रिय एव, निद्रिताऽपि त्वामालिङ्ग्य तिष्ठतीत्यर्थः। चक्रवर्त्ती तु—स्वप्नो निद्रायां विषयानुभवः स च राज्ञ एव, राजा स्वस्वप्ने विजयश्रियं पश्यतीत्यर्थ इत्याह, तन्न; एतावता (B)अमोचनभ्रमस्यैव सिद्धिर्न त्वमोचनस्य, भ्रमेण च राज्ञ उत्कर्षालाभात्। स्वाधीनपतिका यथा निद्रायामपि कान्तं न मुञ्चति तथेत्यर्थः। स्वाधीनत्वेन तस्याप्रवासित्वप्राप्त्या सर्वदैवामोचनसिद्धिः। राजपक्षे प्रभावः पौरुषम्, कान्तपक्षे प्रकृष्टो नायिकाया भावोऽनुरागस्तज्जनकमित्यर्थः। अत्र यथाशब्दात् श्रौती, तेन सह समासाभावाद् वाक्यगा, उपमानादिचतुष्टयोपादानात् पूर्णा, विजयश्रीस्वाधीनपतिकयोरमोचनं साधारणधर्मः, राजकान्तयोस्तु प्रभावप्रभवत्वम्। वाक्यगां पूर्णामार्थीमाह—चकितेति। क्रुधि क्रोधे तस्या आननम् इदं हस्तस्थं सरसिजञ्च समं द्वयोरेव

(A) इवेनेत्यादि। 'इवेन समासो विभक्त्यलोपश्चे'ति वार्त्तिकसूत्रम्। यत्त्वत्र टीकाकारेण—'इदं पाणिनिसूत्रम्' इत्युक्तं तत् सम्प्रदायाभिप्रायेण। यथा वस्तुगत्या शार्ववर्मिकसूत्रस्य कलापत्वेऽपि वररुचिकृतकृद्वृत्तेः श्रीपतिकृतपरिशिष्टस्यापि कलापत्वेन प्रसिद्धिः सर्वाध्यक्षा। अस्य च समासस्य नित्यत्वं न वैयाकरणसम्मतम्। तथा च तत्त्वबोधिन्याम् (वेङ्कटेश्वर-सं० २०९ पृ०) "अयमपि समासः क्वाचित्क एव, तेन जीमूतस्येवेत्यादौ तैत्तिरीयाणां पृथक्पदत्वेन पाठः, 'उद्वाहुरिव वामनः' [उद्वाहुर्वामन इव] इति व्यस्तप्रयोगश्च सङ्गच्छते इति मनोरमायां स्थितम्" इति। अत एवोद्द्योतकारोऽपि—'व्याकरणे वैकल्पिकत्वाङ्गीकाराद्वार्त्तिके तथाऽपाठाच्च नित्यपदप्रक्षेपोऽप्रामाणिकः' इत्याह।

(B) अमोचनभ्रमस्यैवेत्यादि। तथा च स्वप्नानुभूतत्वाद् विजयश्रीकर्मकावलोकनं राज्ञो भ्रम एव, स चास्मदादिसाधारणः सर्वत्र सुलभत्वाद् इति न ततो राज्ञ उत्कर्षलाभ इति भावः।

सरसिजमिदमाननं च तस्याः
सममिति चेतसि सम्मदं विधत्ते ॥ ३८६ ॥

अत्यायतैर्नियमकारिभिरुद्धतानां
दिव्यैः प्रभाभिरनपायमयैरुपायैः ।
शौरिर्भुजैरिव चतुर्भिरदः सदा यो
लक्ष्मीविलासभवनैर्भुवनं बभार ॥ ३८७ ॥

अवितथमनोरथ[1]पदप्रथनेषु (A)प्रगुणगरिमगीतश्रीः ।
सुरतरुसदृशः स भवानभिलषणीयः [2]क्षितीश्वरो न कस्य ॥३८८॥

रक्तत्वात्, अयमर्थो मम चेतसि सम्मदं हर्षं विधत्ते। मुखपद्मयोर्धर्ममाह—तरुणेति। तरुणारुणवन्मुखस्य तरुणारुणेन पद्मस्य तारा उज्ज्वला हारिणी कान्तिर्बोध्या। अत्र समशब्दाद्यार्थी असमासाद् वाक्यगा, उपमानादिचतुष्कोपादानात् पूर्णा।

समासगां श्रौतीं पूर्णामाह— **अत्यायतैरि**ति। यो राजा साम-दान-भेद-दण्डरूपै-श्चतुर्भिरुपायैः अदो भुवनं सदा बभार, शौरिर्विष्णुश्चतुर्भिर्भुजैरिव। द्वयोर्विशेषणान्याह—अत्यायतैरित्यादीनि। नियमः शास्तिः उद्धता दुर्वृत्ता जना असुराश्च, प्रभा अनुष्ठान-प्रकर्षाः कान्तयश्च ताभिर्दिव्यैः उत्कृष्टैः। अनपायो व्याघातविरहोऽपराजयश्च तन्मयैस्तत्सम्बद्धैः। अत्रैवेन (B)नित्यसमासगा श्रौती पूर्णा।

समासगां पूर्णामार्थीमाह—**अवितथे**ति। स प्रसिद्धः क्षितीश्वरो भवान् कस्य

(A) प्रगुणेत्यादि, प्रकृष्टो गुणगरिमा यत्र तद् यथा स्यात्तथा गीतश्रीरित्यर्थः।

(B) "ननु नेदमुदाहरणं समासगाया भवितुमर्हति, समासे कृते 'भुजैरिव' इत्यस्यैक-पदार्थतया पदार्थैकदेशे भुजे 'अत्यायतैरि'त्यादीनां विशेषणानामन्वयस्यानुपपत्तेः। 'पदार्थः पदा-र्थेनान्वेति न तु पदार्थैकदेशेने'ति न्यायेनैकदेशान्वयस्य निषिद्धत्वात्। भुजेऽन्वयाभावे तु अत्यायतत्वादीनां धर्माणां साधारणत्वाभावेनोपमाया एवानिष्पत्तिप्रसङ्गः स्यात्। अत्रोच्यते। पदार्थैकदेशे भुजे विशेषणानामन्वयस्य शाब्दस्याभावेऽपि आर्थिकस्य सत्त्वेनादोषत्वम्। यत उपमेये एव शाब्दो विशेषणानामन्वयः, उपमाने त्वार्थिकोऽपीति सम्प्रदायः। अन्ये तु 'उपमान-विशेषणान्येते' इति मूलकारोक्तसिद्धान्तरीत्या इवशब्दार्थस्य साधर्म्यस्य विशेषणतया भानाद् भुजैरिवेति समासात् साधर्म्यविशिष्टैर्भुजैरित्यर्थबोधाद् विशेष्यभूते भुजे विशेषणानामन्वयस्य सत्त्वेन नात्र कश्चिदपि शङ्काकलङ्क इत्याहुः। केचित्तु 'सक्त्वाढकमापणीयानाम्' इति समर्थसूत्रस्थ-भाष्यप्रयोगात् क्वचित् क्वचिदेकदेशान्वयस्याप्यङ्गीकर्त्तव्यतयाऽत्र पदार्थैकदेशे भुजे अत्यायतत्वादीनां विशेषणानामन्वयस्य सुलभत्वमित्याहुः" इति बालबोधिनी।

1. '-पथप्रथनेष्वि'ति क्वचित् पाठः। 2. 'क्षितीश्वर' इति सम्बोधनान्तः पाठोऽपि क्वचित्।

गाम्भीर्यगरिमा तस्य सत्यं गङ्गाभुजङ्गवत् ।
दुरालोकः स समरे निदाघाम्बररत्नवत् ॥ ३८९ ॥

स्वाधीनपतिका कान्तं भजमाना यथा लोकोत्तरचमत्कारभूः, तथा जयश्रीस्त्वदासेवनेनेत्यादिना प्रतीयमानेन विना यद्यपि नोक्तेर्वैचित्र्यम्, वैचित्र्यं चालङ्कारः, तथापि न ध्वनिगुणीभूतव्यङ्ग्य-व्यवहारः; न खलु(A) व्यङ्ग्यसंस्पर्शपरामर्शादत्र चारुताप्रतीतिः, अपि तु वाच्यवैचित्र्यप्रतिभासादेव। (B)रसादिस्तु व्यङ्ग्योऽर्थोऽलङ्कारा-

नाभिलषणीयः याचितुमिति शेषः। कीदृशः? अवितथस्य मनोरथस्य यत् पदं विषयः तत्प्रथनेषु(C) तज्ज्ञानेषु सत्सु प्रकृष्टेन गुणगरिम्णा हेतुना अर्थिभिरेव गीतश्रीः, सुरतरुसदृशः, सुरतरोः कल्पद्रुमस्याप्येवंभावात्। अत्र (D)सदृशपदात्तस्य सुरतरुपदेन समासाच्च समासगा आर्थी पूर्णा।

तद्धिते पूर्णां श्रौतीमार्थीञ्चैकत्रैवाह—गाम्भीर्येति। भुजङ्गः कामुकः। (E)गङ्गाकामुकस्य समुद्रस्येव यस्य गाम्भीर्यगरिमा सत्यं स राजा समरे दुरालोकः, निदाघीयेनाम्बररत्नेन सूर्येण तुल्यः। अत्र पूर्वार्द्धे षष्ठ्यन्तादिवार्थे वतिरिति श्रौती, परार्द्धे तुल्यार्थे वतिरित्यार्थी। गाम्भीर्यगरिमदुरालोकत्वे साधारणधर्मौ।

सालङ्कारस्य चित्रकाव्यत्वाच्चित्रलक्षणे चाव्यङ्ग्यमित्युक्तत्वादत्र व्यङ्ग्यसत्त्वे कथं चित्रमित्याशङ्क्तं—स्वाधीनेति। प्रतीयमानेन विनेति। न हि घटत्वजातिः पटत्व-मिवेत्युक्तौ वैचित्र्यविशेषानुभव इति भावः। वैचित्र्यञ्चालङ्कार इति। तथा च तादृश-प्रतीयमानवैचित्र्यमादायालङ्कारध्वनिरेवायं स्यादित्याशङ्कार्थः। समाधत्ते—तथापीति। येन चारुताऽनुभूयते तेनैव व्यवहार इत्यतोऽत्र वाच्योपमावशादेव व्यवहार इत्यर्थः।

(A) व्यङ्ग्यसंस्पर्शपरामर्शादिति। व्यङ्ग्यस्य 'स्वाधीनपतिका कान्तं भजमाना यथा लोकोत्तरचमत्कारभूरि'त्यादिरूपस्य यः संस्पर्शः सम्बन्धस्तस्य परामर्शाद् अनुसन्धानादित्यर्थः।

(B) रसादिस्त्विति। यद्यप्यत्र राजविषयकरतिभावस्य सत्त्वाच्छृङ्गाररसस्य व्यङ्ग्यत्वेन नालङ्कारत्वम्, कथञ्चिदलङ्कारत्वस्वीकारेऽपि 'प्रभावप्रभवमि'त्यत्रानुप्रासाऽलङ्कारसत्त्वान्नोपमा शुद्धा अपि तु सन्देहः सङ्करो वाऽलङ्कारान्तरं भवितुमर्हति तथाप्यौदासीन्येन तत् सर्वमविगणय्य केवलोपमालङ्कारा एवोदाहृता इति बालबोधिनीकृतामाशयः।

(C) प्रथनेषु विस्तारेष्वित्युचितोऽर्थः, तथा सति विषयसप्तमीयं विस्तारविषये इत्यर्थः।

(D) सदृशपदादिति सदृशपदोपादानादित्यर्थः। इदम् आर्थीत्यस्य हेतुः।

(E) गङ्गाकामुकस्येति। अयं 'गङ्गाभुजङ्गवदि'त्यस्यार्थः शान्तनोरेव स्वामित्वात् समुद्रे भुजङ्गत्वोक्तिः, भुजङ्ग उपपतिरित्युद्द्योतः। एवञ्च 'शैलसुतासपत्नी'ति प्रयोगो युगभेदादुन्नेयः।

न्तरं च सर्वत्राव्यभिचारीत्यगणयित्वैव तदलङ्कारा उदाहृताः। (A)तद्रहितत्वेन तु उदाह्रियमाणा विरसतामावहन्तीति पूर्वापर-विरुद्धाभिधानमिति न चोदनीयम्।

(१२८) तद्वद्धर्मस्य लोपे स्यान्न श्रौती तद्धिते पुनः।

धर्मः साधारणः। तद्धिते कल्पबादौ त्वार्थ्येव। तेन पञ्च।

उदाहरणम्—

---

नन्वत्र शृङ्गारानुभवाच्चारुताप्रतीतिरित्यतो रसध्वनिरयं स्यादित्याह—**रसादीति**। तदपेक्षयाऽपि वाच्योपमावशादेव चारुताधिक्यप्रतीतिरिति भावः। **इत्यगणयित्वेति**, व्यङ्ग्यसत्त्वमगणयित्वेत्यर्थः। 'तदलङ्कारा' वाच्यालङ्काराः। **पूर्वापरेति**। (B)पूर्व-मव्यङ्ग्यमित्युक्तम्, इदानीन्तु सव्यङ्ग्यमुदाहृतमिति विरुद्धाभिधानं नाशङ्कनीयमित्यर्थः, स्फुटव्यङ्ग्यराहित्यस्यैव तत्र व्याख्याततत्वादिति भावः।

इत्थं षड्विधां पूर्णामुदाहृत्य ऊनविंशतिविधां लुप्तामुदाहरिष्यन् पञ्चविधां धर्ममात्र-लुप्तामाह—**तद्वदिति**। श्रौत्यार्थ्योः पूर्णयोर्वाक्यादित्रयगामित्ववदित्यर्थः। एवञ्च तद्वत् षड्विधत्वप्रसक्तावाह—**न श्रौतीति**। धर्मलुप्तायां धर्मसम्बन्धप्रतिपादिकायाः षष्ठ्याः सप्तम्या वा अभावेन ततो विहित इवार्थो (C)वतिर्नास्तीत्यतस्तद्धितान्तरे कल्पप्-प्रत्ययादौ न श्रौतीत्याह—**कल्पबादाविति**। कल्पपप्रत्ययः पानुबन्धः पाणिनिमते। (D)आदिपदात्तुल्यार्थकवतेरपि परिग्रहः।

---

(A) तद्रहितत्वेनेति, अलङ्कारान्तरेण रसादिना च रहितत्वेनेत्यर्थः 'चन्द्रधवलः पट' इत्यादौ रसाद्यसंभिन्ने विषये चित्रकाव्यस्योदाहरणसम्भवेऽपि तादृशवाक्यस्य नीरसत्वेनाकाव्यत्वात्तस्या-प्युपमात्वं न स्यादिति न तदुदाहृतमिति प्रदीपाशयः।

(B) पूर्वमव्यङ्गम् उक्तमिति, प्रथमोल्लासे (२८ पृ०) ५म-कारिकायामित्यर्थः।

(C) वतिर्नास्तीत्यादि। तथा च—धर्मसम्बन्धप्रतिपादिकायाः षष्ठ्याः सप्तम्या वा-ऽभावादिवार्थकवत्यभावेन न श्रौती, कल्पप्प्रत्ययादौ च प्राप्तेरभावादेव न श्रौतीत्यर्थः। अत्राहुः प्रदीपकाराः—न श्रौती तद्धिते इति। इवार्थं एव [ न त्वन्यार्थे ] हि तद्धिते सा श्रौती भवेत् इवार्थश्च वतिरेव ; [ न कल्पबादयः ] स च 'तत्र तस्येव' इत्यर्थकतया नित्यं धर्मसाकाङ्क्ष इति धर्मानुपादाने श्रौती तद्धिते न भवत्येव। आर्थी तु यद्यपि वतिरूपे तद्धिते न सम्भवति 'तेन तुल्यं—' इत्यर्थे उक्तन्यायेन नित्यं तुल्यक्रियाकाङ्क्षत्वेन धर्मलोपे तदसम्भवात् ; तथापि कल्पब्-देश्य-देशीयर्-बहुज्रूपे सम्भवत्येवेति पञ्चधा धर्मलोपोपमेत्यर्थः" इति।

(D) ननु धर्मलोपाद्धेतोरिवार्थकवतेरुत्पत्त्यभावेन तद्धिते न श्रौती धर्मलुप्तेत्युक्तम्, एवञ्च

धन्यस्यानन्यसामान्यसौजन्योत्कर्षशालिनः।
करणीयं वचश्चेतः सत्यं तस्यामृतं यथा॥ ३९० ॥
आकृष्टकरवालोऽसौ सम्पराये परिभ्रमन्।
प्रत्यर्थिसेनया दृष्टः कृतान्तेन समः प्रभुः॥ ३९१ ॥
करवाल इवाचारस्तस्य वागमृतोपमा।
विषकल्पं मनो वेत्सि यदि जीवसि तत्सखे॥ ३९२ ॥

धर्मलुप्तां वाक्यगां श्रौतीमाह—धन्यस्येति। हे चेतः, अमृतं यथा तस्य वचः करणीयम् इत्यर्थः। तस्य कीदृशस्य? धन्यस्य अनन्यसामान्यं यत् सौजन्यं तदुत्कर्षशालिनः। अत्र मधुरत्वं धर्मो लुप्तः। करणीयत्वन्तु अमृतेऽभावान्न साधारणम्। यथाशब्देन समासाभावाच्छ्रौती वाक्यगा।

धर्मलुप्तामार्थीं वाक्यगामाह—आकृष्टेति। सम्पराये युद्धे। अत्र मारकत्वं धर्मो लुप्तः। दृष्टत्वन्त्वतीन्द्रिये कृतान्ते बाधान्न साधारणम्। असमासे समशब्दाद् वाक्यगा आर्थी।

अत्र समासे श्रौतीमार्थीं तद्धिते त्वार्थीमेव चैकत्रैव धर्मलुप्तामुदाहरति—करवाल इवेति। हे सखे, यदि जीवसि तदा इदं वेत्सि। किमित्यत्राह—करवाल इवेति। अत्रेवेन नित्यसमासगा श्रौती। छेदकत्वं धर्मो लुप्तः। वागमृतेति, अत्र समासगा आर्थी मधुरत्वं धर्मो लुप्तः। विषकल्पमिति तद्धिते आर्थी, तापकत्वं धर्मो लुप्तः। (A)एवं विषवदिति करणे तुल्यार्थकवतावपि बोध्यम्। इति पञ्चविधा धर्मलुप्ताः।

---

तयैव युक्त्या तुल्यार्थकवतेरप्युक्तप्रत्ययभावेन कथमार्थ्यपि धर्मलुप्ता तद्धितगा स्यादिति। एतेन टीकाकृता यदुक्तं 'आदिपदात्तुल्यार्थकवतेरपि परिग्रह' इति तच्चिन्तनीयम्। तत्रेदं चिन्त्यते—वाक्यानि सोपस्काराणि भवन्तीति न्यायेन, यत्र क्रियान्तरं नास्ति तत्रास्तिभवतीत्यादिक्रियाऽध्याहार्येति च युक्त्या 'चन्द्रवन्मुखमि'त्यत्र भवतीति क्रियाध्याहारेण चन्द्रस्य भवनक्रियया तुल्या मुखस्य भवनक्रियेत्येवार्थः करणीयः, एवञ्च तुल्यार्थकवतावपि धर्मलुप्ताया आर्थ्याः सम्भव इति। अत एव टीकाकृतोपरिष्टाद् वक्ष्यते—'एवं विषवदिति करणे तुल्यार्थकवतावपि बोध्यमि'ति।

(A) एवं विषवदिति। न चानुशासनविरहादत्र वतिरेव न भवति 'तेन तुल्यं क्रिया चेद् वतिरि'ति तुल्यक्रियस्थल एव तस्याऽनुशासनिकत्वादत्र च क्रियाभावादिति वाच्यम्, भवतीति क्रियाध्याहारेण विषभवनतुल्यं मनोभवनमिति बोधेनानुशासनस्यैतादृशस्थलेऽपि प्राप्तेः। अत एव तद्धितगाया आर्थ्या उदाहरणे दुरालोक इत्यादौ (३८९ श्लो०) उक्तम् उद्योतकृद्भिः—'अत्र

(१२९) उपमानानुपादाने (A) वाक्यगाऽथ समासगा ॥८८॥

(B)सअलकरणपरिवोसामसिरिविअरणं ण सरसकव्वस्स।
दीसइ अह व णिसम्मइ सरिसं अंसंसमेत्तेण ॥ ३०३ ॥

उपमानलुप्तां द्विविधामाह—**उपमानेति**। उपमानस्य यादृशशब्देनोपादाने तदुत्तरवर्त्तिनेवादिना तत्रोपमानता प्रत्याययितुं शक्यते, तादृशशब्देन उपमानानुपादान इत्यर्थः। तेन सदृशसमादिशब्देन तदुपादानेऽप्युपमानानुपादानमेव बोध्यम्, तदुत्तरमिवाद्यसम्भवात्। **सकलेति**—

सकलकरणपरिविश्रामश्रीवितरणं न सरसकाव्यस्य।
दृश्यते अथवा निशम्यते सदृशमंशांशमात्रेण ॥ इति संस्कृतम्।

सकलकरणपरिविश्रामश्रीः सर्वेन्द्रियस्फीतता तद्वितरणं तद्दायकमंशांशमात्रेणापि सरसकाव्यस्य सदृशं न दृश्यते नाथवा निशम्यत इत्यर्थः। अत्र सदृशपदं न तुल्यार्थकं तुल्यादर्शनेऽप्यधिकदर्शनसम्भवात् सरसकाव्यप्रशंसानुपपत्तेः। अतः सरसकाव्यमत्र नोपमानं किन्तूपमेयमेव, तथा चोपमानस्योपमेयापेक्षया आधिक्येन तल्लाभायांशमात्रेणापि सरसकाव्यस्योपमानं न दृश्यते इत्येवार्थः। तथा च सदृशपदेनोपमानोपादानमपि तदनु-

---

निदाघाम्बररत्नतुल्याभिन्नो दुरालोक इति बोधः। तुल्यत्वप्रयोजकञ्च दुरालोकत्वमिति पश्चान्मनसा व्यञ्जनया वा बुध्यते। स चेत्थम्—उपमानदुरालोकनिदाघाम्बररत्नाभिन्नो दुरालोको राजेति बहवः। अत एवार्थीत्वम्। नामार्थयोरभेदान्वयस्य एतद्विग्रहवाक्ये क्लृप्तनिर्वाहायास्य वतेरपि धर्मिवाचकतैवोचिता। अनुशासनस्य [तेन तुल्यं क्रिया चेद् वतिरित्यस्य] तथैव शक्तिग्राहकत्वाच्च क्रिययोस्तुल्यत्व एव तेन तुल्यमिति वतिः साधुः। अत एव ब्राह्मणवदधीत इत्यत्र ब्राह्मणपदस्य तत्कर्तृकाध्ययने लक्षणेति भाष्यकृतः, एवञ्च 'चन्द्रवन्मुखम्' इत्यादौ भवतिक्रियामध्याहृत्य चन्द्रभवनसदृशं मुखभवनमित्येव वाच्योऽर्थः; चन्द्रमुखयोः सादृश्यन्तु व्यञ्जनयैवेति बोध्यम्।' इति। एवञ्च यदुक्तं प्रदीपकृद्भिः—'आर्थी तु यद्यपि वतिरूपे तद्धिते न सम्भवती'त्यादि, तस्यैव समाधा सुधीभिर्ध्येयेति दिक्।

(A) वाक्यगेति। अत्र तद्धितगा न सम्भवति उपमाप्रतिपादकस्य वतिकल्पबादेरुपमानपदादेव विधानेन तदनुपादानेऽसम्भवात्। न वा श्रौती, इवादीनामुपमानान्विततया तदनुपादाने तेषामप्यनुपादानात्। अतो वाक्यसमासयोरेव, तयोरप्यार्थ्येवेति द्विप्रकारा लुप्तोपमानोपमा इति प्रदीपः। टीकाकृताऽपि 'तदुत्तरमिवाद्यसम्भवादि'त्यनेन तदेव प्रतिपादितम्।

(B) सअलेति। क्वचित् 'परवीसाम' इति प्राकृतपाठाभिप्रायेण 'परविश्राम' इति संस्कृतम्, परविश्रामो विषयान्तरवैमुख्यम्, तज्जन्यशोभादात्रित्यर्थ इत्युद्योतकृदादीनां व्याख्या।

कव्वस्सेत्यत्र कव्वसममिति सरिसमित्यत्र च णूणमिति पाठे एषैव समासगा।

( १३० ) वादेर्लोपे समासे सा कर्माधारक्यचि क्यङि।

कर्मकर्त्रोर्णमुलि—

वाशब्द उपमाद्योतक इति वादेरुपमाप्रतिपादकस्य लोपे षट्।—समासेन कर्मणोऽधिकरणाच्चोत्पन्नेन क्यचा कर्त्तुः क्यङा कर्मकर्त्रोरुपपदयोर्णमुला च भवेत्। उदाहरणम्—

(A)ततः कुमुदनाथेन कामिनीगण्डपाण्डुना।

नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता॥ ३९४॥

तथा—

असितभुजगभीषणासिपत्रो (B)रुहरुहिकाहितचित्ततूर्णचारः।

पुलकिततनुरुत्कपोलकान्तिः प्रतिभटविक्रमदर्शनेऽयमासीत्॥३९५

---

पादानमेव तदुत्तरमिवाद्यसम्भवात्। (C)अर्थवशादुपमाप्रतिपादकस्यात्र सदृशपदस्य सत्त्वान्नेवादिलोपः। अत्र सकलेत्यादिकमुभयधर्मः, सदृशपदेन समासाभावाद् वाक्यगा आर्थी। न चोपमानत्वरूपाया उपमायाः सदृशपदार्थत्वे कथमार्थीति वाच्यम्, सदृशपदस्यात्रोपमानपरत्वे लाक्षणिकत्वात् शब्दशक्यत्वरूपश्रौतीत्वाभावेनार्थीत्वमेव। कव्वस्सेत्यत्र समपदप्रक्षेपे सदृशपदस्य पौनरुक्त्यं परिहरति सरिसमित्यत्रेति। इत्युपमानलुप्ता द्विविधा।

षड्विधामिवादिलुप्तामाह—वादेरिति। षट्त्वं व्याकुरुते—समासेनेति। पाणिनिमते क्यच्क्यङौ, कलापमते यिन्नायी। कर्मकर्त्रोरिति, कर्मणि कर्त्तरि चोपपदे इत्यर्थः। पाणिनिमते णमुल्, कलापमते णम्। ततः कुमुदेति। अत्र गण्डेनेव पाण्डुनेति समासे वादिलोपः। पाण्डुत्वमुभयधर्मः। इदं धर्मेण सह समासे दर्शयित्वा उपमानधर्मोपमेयैः सह समासेऽपि दर्शयति—असितेति। अयं

---

(A) महाभारते द्रोणपर्वणि रात्रियुद्धे चन्द्रोदयवर्णनमिदम् इति बालबोधिनी।

(B) रुहरुहिका रभसोत्कण्ठा इत्युदाहरणचन्द्रिका। तूर्णचार इति, तूर्णश्चारः सञ्चारः उत्साहस्येति शेषः। चित्रतूर्णचार इत्युद्द्योतः, चित्र आश्चर्यभूतस्तूर्णश्चारो यस्येति तदर्थः।

(C) अर्थवशादिति। न चैवं सदृशपदस्योपमानपरत्वे सादृश्यार्थकपदाभावाद्वद्विलुप्तत्वप्रसक्तिरित्याशयवानाह—अर्थवशादिति। न इवादिलोपः शङ्कनीय इति शेषः।

पौरं सुतीयति जनं समरान्तरेऽसा-
वन्तःपुरीयति विचित्रचरित्रचुञ्चुः।
नारीयते समरसीम्नि कृपाणपाणे-
रालोक्य तस्य [1]ललितानि सपत्नसेना॥ ३९६॥

मृधे निदाघघर्मांशुदर्शं पश्यन्ति तं परे।
स पुनः पार्थसञ्चारं सञ्चरत्यवनीपतिः॥ ३९७॥

(१३१)————एतद्द्विलोपे क्विप्समासगा॥ ८६॥

एतयोर्धर्मवाद्योः। उदाहरणम्—

---

प्रतिभटानां विक्रमदर्शने सत्यसितेत्यादिरासीत् इत्यन्वयः। रुहरुहिका उत्साहः, तया आहितश्चित्ते तूर्णचारो यस्येति विग्रहः। उद्गता कपोले कान्तिरर्थाच्छोणिमा यस्येति विग्रहः। अत्रासितभुजग उपमानम्, भीषणत्वं धर्मः, असिपत्रमुपमेयम्, त्रिभिः समासे वादिलोपः। क्यज्द्वये क्यङि चैकमुदाहरणमाह—पौरमिति। पौरं जनं सुतमिवाचरति, समरान्तरे अन्तःपुर इवाचरति, निर्भयत्वात्। अनयोः कर्माधाराभ्यां क्यच्। चुञ्चुः ख्यातः। तथा समरसीम्नि तस्य ललितान्यालोक्य सपत्नसेना नारीयते नारीवाचरति भीरुत्वात्। अत्र कर्तुः क्यङ्। अत्राचारः क्यच्क्यङर्थः साधर्म्यम्, इवादिस्तु (A) लुप्तः; न त्विवाद्यर्थविशिष्ट एवाचारः क्यच्क्यङर्थस्तादृशार्थेऽननुशासनात्। णमुल्द्वयमेकेनैवोदाहरति—मृध इति। परे शत्रवस्तं मृधे युद्धे [2]घर्मांशुदर्शं घर्मांशोरिव दर्शनेन[2]* पश्यन्तीत्यर्थः। अत्र कर्मण्युपपदे णमुल्। स पुनरवनीपतिर्मृधे पार्थसञ्चारं पार्थस्यार्जुनस्येव सञ्चारेण सञ्चरतीत्यर्थः। अत्र कर्तर्युपपदे णमुल्। इति वादिलुप्ताः षट्। (B)एवमेकलुप्तास्त्रयोदश।

द्विलुप्तामाह—एतद्द्विलोप इति। अत्र तात्पर्यवशान्मध्योक्तमुपमानं विहायैवैतत्पदेन परामर्शः, तदाह—धर्मवाद्योरिति। (C)लुप्तायेः क्विप्परिभाषा।

---

(A) लुप्त इति। उक्तार्थानामप्रयोग इति न्यायादप्रयुक्त इत्यर्थः। वैयाकरणाः 'सुतमिवाचरती'त्यादिस्थले सुतपदं सुतसदृशे लाक्षणिकम् इवपदं तात्पर्यग्राहकमात्रमित्यभ्युपगच्छन्ति।

(B) एवमिति। धर्मलुप्ताः पञ्च, उपमानलुप्तौ द्वौ, वादिलुप्ताः षट् इत्येकत्र त्रयोदश।

(C) लुप्तायेरित्यादि। कलापमते विधवतीत्यादिपदं लुप्ताप्यन्तम् आयेर्लुप्तत्वादेव

---

1. 'चरितानि' इति पाठो बहुषु। 2. 'निदाघघर्मांशुकर्मकदर्शनेनेव' क-ख।

सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः ।
यामिनयन्ति दिनानि च सुखदुःखवशीकृते मनसि ॥ ३९८ ॥

परिपन्थिमनोराज्यशतैरपि दुराक्रमः ।
सम्परायप्रवृत्तोऽसौ राजते राजकुञ्जरः ॥ ३९९ ॥

(१३२) धर्मोपमानयोर्लोपे वृत्तौ वाक्ये च दृश्यते ।

(A)ढुण्ढुण्णन्तो मरिहसि कण्टअकलिआइँ केअइवणाइं ।
मालइकुसुमसरिच्छं भमर भमन्तो ण पाविहिसि ॥ ४०० ॥

क्विब्गा समासगा चेत्यर्थः । **सवितेति** । अत्र सुखदुःखेति द्वन्द्वो न (B)साहित्ये, किन्तु तात्पर्यवशात् सुखेन दुःखेन वा वशीकृते मनसीति प्रत्येकवशीकरणं बोध्यम् । अत्र सुखवशीकृते मनसि सवितेति दिनन्तीत्यपि । विधवति विधुरिवाचरति अतापकत्वात् ; दिनन्ति दिनानीवाऽऽचरन्ति सन्तोषात् प्रकाशमयत्वेनोपलभ्यमानत्वात् । दुःखवशीकृते मनसि तु विधुरपीति यामिनयन्तीति च । सवितरति सवितेवाचरति तापकत्वात्, यामिनयन्ति यामिन्य इवाचरन्ति तमोमयत्वेनोपलभ्यमानत्वात् । अत्राऽऽचाररूपधर्मवाचकस्याऽऽयेरिवादेश्च लोपाद् द्विलुप्तता क्विब्गामिता च । समासगामाह—**परिपन्थीति** । मनोराज्यं मनोरथः, सम्परायो युद्धम् ।

अत्र राजा कुञ्जर इवेति समासे इवादेर्बलवत्त्वधर्मस्य च लोपः । न चात्र राजेव कुञ्जर इति रूपकम्, तथा कुञ्जरस्यैव विशेष्यत्वेन सिंहादिपरिपन्थिभिराक्रमणीये कुञ्जरे परिपन्थीत्यादेरनन्वयापत्तेः । अत एवोपमाया अप्युपमाने कुञ्जरेऽनन्वयात् परिपन्थीत्यादिकं नोभयधर्म इति धर्मस्यापि लोप एवेति द्विलुप्तता । न चात्र राजश्रेष्ठ इत्येवार्थो नोपमेति वाच्यम्, उपमाभिप्रायेणोदाहृतत्वात् । अत्र श्रेष्ठार्थकत्वे तु राजचन्द्रमा इति कृत्वोदाहर्त्तव्यम्, चन्द्रस्य राहुबाध्यत्वाच्च न तत्र परिपन्थीत्यादिधर्मान्वयः ।

**धर्मोपमानयोरिति** । 'वृत्तौ' समासे । उपमानलोपश्च पूर्वोक्तरीत्या सदृशादिपदेनोपमानोपादानेऽपि बोध्यः । **ढुण्ढुण्णन्त** इति ।

चैतन्मते नात्मनेपदम् । पाणिनितन्त्रानुसारिणस्तु क्यङः प्राप्तौ 'सर्वप्रातिपदिकेभ्यः क्विब् वा वक्तव्यः' (वा० ३।१।११) इति वार्त्तिकेन क्विपमाचक्षते । अत्र च कालापिकटीकाकृत् स्वमतेनैतदुपपादयितुं मतयोरनयोरैक्यविधित्सया चाह—लुप्तायेरित्यादि ।

(A) ढुण्ढुल्लन्त इति, ढुण्ढुलन्त इत्युद्द्योत-सुधासागरादिसम्मतः पाठः, ढुण्ढुलायमान इति तत्संस्कृतम् । ढुण्ढुलायमानोऽन्वेषमाण इत्युद्द्योतकृत् । ढुण्ढुनायमान इष्टाप्राप्त्या व्यर्थश्रमातुरो ढुण्ढुमिति शब्दं कुर्वाण इति सुधासागरकाराः ।

(B) साहित्य इति, समाहारसाहित्यमत्राभिप्रेतम्, न साहित्यसामान्यम्, असाहित्ये द्वन्द्वस्यासम्भवात्, इतरेतरसाहित्ये प्राधान्येन प्रत्येकान्वयस्यानिवारितत्वाच्च । परं सुखदुःखेत्यत्र समाहारसाहित्य एव द्वन्द्व आनुशासनिक इति टीकाकर्तुः भ्रमे तात्पर्यम् ।

कुसुमेण सममिति पाठे वाक्यगा।

(१३३) क्वचि वाद्युपमेयासे—

आसे निरासे।

> अरातिविक्रमालोकविकस्वरविलोचनः।
> कृपाणोदग्रदोर्दण्डः स सहस्रायुधीयति ॥ ४०१ ॥

अत्रात्मा उपमेयः।

(१३४) ———त्रिलोपे च समासगा ॥ ९० ॥

त्रयाणां वादिधर्मोपमानानाम्। उदाहरणम्—

> तरुणिमनि कृतावलोकना ललितविलासवितीर्णविग्रहा।
> स्मरशर(A)विसराचितान्तरा मृगनयना नयते मुनेर्मनः ॥४०२॥

---

> टुण्टुनायमानो मरिष्यसि कण्टककलितानि केतकीवनानि।
> मालतीकुसुमसदृशं भ्रमर भ्रमन्नपि न प्राप्स्यसि ॥ इति संस्कृतम्।

केतकीवनानि प्राप्येति शेषः। टुण्टुन्नित्यव्यक्तानुकरणम्। अत्रापि सदृशपदं मालतीकुसुमाधिक्यलाभायोपमानपरम्, तथात्वेऽप्युपमानानुपादानमेव पूर्वोक्तरीत्या बोध्यम्। उपमानत्वेनैव सादृश्यप्रतियोगित्वलाभान्नेवादिलोपः, लक्षणया तत्प्रतिपादनाच्च न श्रौती।

द्विलुप्तान्तरमाह—क्वचीति। अरातीति। स राजा अरातीत्यादिना कृपाणेत्यादिना च विशिष्टः सहस्रायुधीयति (B)सहस्रायुधमिवात्मानं मन्यत इत्यर्थः। तदाह—अत्रात्मा उपमेय इति, स च लुप्त इति बोध्यम्। अत्रारातीत्यादिकं सहस्रायुधस्यापि धर्म इति न धर्मलोपः। इति द्विलुप्ताः (C)पञ्च।

त्रिलुप्तामेकामाह—त्रिलोपे चेति। तरुणिमनीति। मृगनयना मुनेरपि

---

(A) 'विशरारितान्तरे'ति पाठ उद्द्योतसुधासागरादिसम्मतः। तरुणिमनि तारुण्ये कृतमवलोकनं यया सा किशोरीत्यर्थः। ललितविलासेभ्यो वितीर्णः समर्पितो विग्रहो देहो यया सा, स्मरशरेण कामबाणेन विशरारितं विशीर्णीकृतम् आन्तरं मनो यस्याः सा तादृशी मृगनयना मुनेरपि मनो नयते। अत्र 'हरते' इत्यपि पाठः। विसराचितान्तरेति पाठेस्मरशरविसरेण कामबाणसमूहेनेत्यर्थ इति केचिदिति तद्व्याख्या।

(B) 'आयुधसहस्रनिर्वाह्यस्य प्रतिपक्षोत्सारणस्यैकेन कृपाणेन निर्वाहाद्वीरप्रकर्षः। सहस्रारायुधीयतीति पाठे सहस्रारं चक्रमायुधमस्य विष्णोस्तमिवाचरतीत्यर्थः।' इत्युद्द्योतः।

(C) पञ्चेति धर्मवाद्योर्लोपे क्विपि समासे चेति द्वौ, धर्मोपमानयोर्लोपे वृत्तौ वाक्ये चेति द्वौ, वाद्युपमेयलोपे क्वचि चैक इति पञ्च द्विलुप्तोपमाभेदाः।

अत्र सप्तम्युपमानेत्यादिना यदा समास-लोपौ भवतः, तदेदमुदाहरणम्।

क्रूरस्याचारस्यायःशूलतयाऽध्यवसायात् अयःशूलेनान्विच्छति 'आयःशूलिकः' इत्यतिशयोक्तिः, न तु क्रूराचारोपमेय-तैक्ष्ण्यधर्मवादीनां लोपे त्रिलोपेयमुपमा।

एवमेकोनविंशतिर्लुप्ताः, पूर्णाभिः सह पञ्चविंशतिः।

---

मनो नयते हरति। कीदृशी? तरुणिमनि तारुण्ये सति कृतपुरुषविषयावलोकना, ललितविलासेन प्राप्तशरीरा, स्मरशराणां विसरेण पातेनाऽऽचितमनस्का च। मृगनयनमिव नयनं यस्या इति समासे (A)'सप्तम्युपमानलोपः पूर्वपदप्रकृतिस्वरत्वञ्चे'ति (वा० २।२।२४) पाणिनिसूत्रेण उपमानीभूतनयनपदलोपः। एवं दैर्घ्यचापल्यादिधर्मस्य इवादेश्च लोप इति त्रिलुप्तता। अत्र कलापमते मृगपदमेव मृगनयने लाक्षणिकम्, अतो न त्रिलोप इति मतभेदं सूचयन्नाह—यदेति।

मृगनयनेत्यत्र त्रिलोपाभावे 'आयःशूलिक' इत्यत्रैव त्रिलोपं केचिदाहुस्तत्र त्वतिशयोक्त्यलङ्कार एव नोपमेत्याह—(B)क्रूरस्येति। अयःशूलेनेति क्रूराचाररूपेणायःशूलेनेत्यर्थः। अतिशयोक्तिरिति। उपमानेनायःशूलेन उपमेयक्रूराचारनिगरणरूपा। त्रिलुप्तोपमामत्र निरस्यति—न त्विति। एवमेकोनेति। एकलुप्तास्त्रयोदश, द्विलुप्ताः पञ्च, त्रिलुप्तैकेति।

---

(A) नेदं पाणिनिसूत्रम्, वार्त्तिकमपि—'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्चे'तीदृशम्। 'अस्यार्थः—सप्तमी सप्तम्यन्तम् उपमानम् उपमानवाचकं वा पूर्वपदं यस्य तत् सप्तम्युपमानपूर्वपदं तस्य उत्तरपदेन सह बहुव्रीहिर्वक्तव्यः, पूर्वपदे यद् उत्तरपदं तस्य च लोपो वक्तव्यः। चक्रवर्त्तिसुधासागरकारादयस्तु—'वार्त्तिकस्यायमर्थः—सप्तम्यन्तमुपमानञ्च पूर्वपदं यस्य इवादिसमानधर्मबोधकपदस्य पदान्तरेणोपमेयबोधकेन बहुव्रीहिः उत्तराणाञ्च इवादिसमानधर्मोपमानबोधकानां लोप इति। एतेन यदैषां लोपस्तदेत्यर्थः। अत एव 'यदे'ति पदं मूले सङ्गच्छते इत्याहुरि'ति बालबोधिनीकाराः।

(B) केचित्तु—उपमानमात्रोपादानेऽपि त्रिलोपा सम्भवति, यथा अयमायःशूलिक इति। अत्रायःशूलपदेन स्वार्थसदृशः क्रूर आचार उपमेयो लक्ष्यते, तीक्ष्णत्वादिकञ्च साधारणो धर्मः, न च तयोरेकमप्युपात्तम्, नापीवादिरिति मन्यन्ते, तन्न युक्तम्, यतः क्रूरस्याचारस्यायःशूलतयाऽध्यवसानादतिशयोक्तिरियं न तूपमा। अन्यथाऽध्यवसानमूलातिशयोक्तेर्निर्विषयतापत्तेरिति प्रदीपे स्पष्टम्। टीकाकृता तु कलापमते त्रिलोपोदाहरणमिदं केषाञ्चनाभिप्रेतमित्युक्तम्।

अनयेनेव राज्यश्रीर्दैन्येनेव मनस्विता ।
मम्लौ साऽथ विषादेन पद्मिनीव हिमाम्भसा ॥ ४०३ ॥

इत्यभिन्ने साधारणे धर्मे,

ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम् ।
प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी ॥ ४०४ ॥

इति भिन्ने च तस्मिन् एकस्यैव बहूपमानोपादाने मालोपमा ; यथोत्तरमुपमेयस्योपमानत्वे पूर्ववदभिन्नभिन्नधर्मत्वे—

अनवरतकनकवितरणजललवभृतकरतरङ्गितार्थिततेः ।
भणितिरिव मतिर्मतिरिव चेष्टा चेष्टेव कीर्तिरतिविमला ॥४०५
मतिरिव मूर्त्तिर्मधुरा मूर्त्तिरिव सभा प्रभावचिता ।
तस्य सभेव जयश्रीः शक्या जेतुं नृपस्य न परेषाम् ॥ ४०६ ॥

इत्यादिका रसनोपमा च न लक्षिता ; एवंविधवैचित्र्यसहस्रसम्भवात् उक्तभेदानतिक्रमाच्च ।

---

सूत्रे विशिष्य मालोपमारसनोपमयोरनुक्तेर्बीजं दर्शयितुं द्विविधां मालोपमां द्विविधां रसनोपमाञ्च दर्शयति—अनयेनेवेति । इत्यभिन्ने इति, म्लानेरेवोपमात्रयधर्मत्वात् । ज्योत्स्नेवेति । नयनानन्दो नयनानन्दजनिका । शुद्धसारोपाऽत्र लक्षणा । अत्र प्रत्युपमानं नयनानन्दत्वादयो भिन्ना धर्माः । माला न लक्षितेत्यग्रेऽन्वयः । रसनोपमाद्वयमपि दर्शयति—यथोत्तरमिति । पूर्वोपमायां यदुपमेयमुत्तरोपमायां तस्योपमानत्व इत्यर्थः । अनवरतेति । तस्य भणितिरिव मतिरतिविमलेत्येवमुत्तरोत्तरमन्वयः । तस्य कीदृशस्य ? अनवरतं कनकवितरणार्थं भृते जललवे (A)तरङ्गिता चञ्चला अर्थिततिर्यस्य तादृशस्य । अत्रातिविमलत्वं प्रत्युपमानं धर्मः । मतिरिवेति । प्रभावेण चिता प्रभयाऽवचिता च बोध्या । तस्य नृपस्य जयश्रीर्जेतुं परेषां न शक्या तस्य सभेव, सभाया अपि दुर्जयत्वात् । 'न लक्षिता'

---

(A) एतेन छन्दोभङ्गदोषमविगणयता टीकाकृता मूलपद्ये 'कर'पदापहारः कृत इति प्रतीयते । 'भृते' इति पदञ्च 'वितरण'पदादनन्तरं पठितम् । अत्रोद्द्योतकाराः—निरन्तरस्वर्णदानाय जललवभृते तत्सम्बद्धे करे तरङ्गिता पूर्वपश्चाद्भावेन श्रेणीभूय मिलिता अर्थिततिर्यस्य इति व्याचक्रुः ।

(१३५) उपमानोपमेयत्वे एकस्यैवैकवाक्यगे ।

(A)अनन्वयः—

उपमानान्तरसम्बन्धाभावोऽनन्वयः । उदाहरणम्—

न केवलं भाति नितान्तकान्तिर्नितम्बिनी सैव नितम्बिनीव ।
यावद्विलासायुधलास्यवासास्ते तद्विलासा इव तद्विलासाः ॥४०७

(१३६)—विपर्यास उपमेयोपमा तयोः ॥ ९१ ॥

तयोरुपमानोपमेययोः परिवृत्तिः अर्थाद्वाक्यद्वये इतरोपमान-व्यवच्छेदपरा उपमेयेनोपमा इति उपमेयोपमा । उदाहरणम्—

---

विशिष्य न लक्षितेत्यर्थः । 'त्रिलोपे च समासगा' (४९२ पृ०) इत्यत्रानुक्तसमुच्चयपरेण चकारेण तु लक्षितैवेति भावः । अत एव 'माला तु पूर्ववत्' (५०३ पृ०) इत्यग्रे मालारूपकं मालोपमातुल्यतया सूत्रकृता प्रदर्शयिष्यते । (B) सूत्रेऽनुक्तत्वे तदनुपपत्तेः । उक्तभेदेति, पूर्णोपमायामेवान्तर्भावात् ।

अनन्वयालङ्कारमाह—उपमानेति । एकवाक्यगे इति । तेन वाक्यद्वयेन तथात्वे या रसनोपमोक्ता या चोपमेयोपमा वक्ष्यते तद्व्यवच्छेदः । उप-मानान्तरसम्बन्धाभाव इति, अनन्वयालङ्कारज्ञानोत्तरज्ञानकथनमिदम्, न त्वन-न्वयलक्षणमिदमपदार्थकत्वात् । एवमुत्तरत्रापि बोध्यम् । (C)न केवलमिति । नितान्तकान्तिर्नितम्बिनी न केवलं सैव नितम्बिनीव भाति, अपि तु विलासायुधस्य कामस्य लास्यानां वासा विलासानां वासा आश्रयास्ते प्रसिद्धास्तद्विलासा इवेत्यर्थः । अपि त्वित्यर्थे यावदिति । अत्राभेदे सादृश्यमिवार्थः ।

उपमेयोपमामाह—विपर्यास इति । परिवृत्तिरिति । उपमानस्योपमेयता

---

(A) अनन्वय इति, न विद्यतेऽन्वयः सम्बन्धोऽर्थादुपमानान्तरेण यत्र सोऽनन्वय इत्यन्वर्थ-मलङ्कारनामेदमित्युद्योतकृतः । एतच्चोपमेयस्यैवोत्कर्षप्रतिपादकमिति द्रष्टव्यम् ।

(B) सूत्रेऽनुक्तत्व इति । टीकाकृता खलु सूत्रकृद्वृत्तिकृतोर्भेदोऽभिप्रेयत इति व्यक्त-मधस्तात्, ततश्च वृत्तिकृता यदुक्तं सूत्रकृतस्तदज्ञानादुत्तरत्र 'माला तु पूर्ववद्' इत्युक्तेरनुप-पत्तेरिदमुक्तम् । तयोरेकत्वे त्वनुयोग एव निर्योगक्षेमः ।

(C) न केवलमिति, नितान्तकान्तिरत्यन्तमनोहरच्छविः साऽनुभूतप्रकर्षा नितम्बिन्येव नितम्बिनीव न भाति, किन्तु तद्विलासास्तस्या नायिकाया विलासा हावभावा अपि तद्विलासा इव भान्तीत्यर्थ इति सुधासागरकाराः ।

कमलेव मतिर्मतिरिव, कमला तनुरिव विभा विभेव तनुः।
धरणीव धृतिर्धृतिरिव, धरणी सततं विभाति बत यस्य ॥४०८॥

(१३७) सम्भावनमथोत्प्रेक्षा(A) प्रकृतस्य समेन यत्।

समेन उपमानेन। उदाहरणम्—

उन्मेषं यो मम न सहते जातिवैरी निशाया-
मिन्दोरिन्दीवरदलदृशा तस्य सौन्दर्यदर्पः।
नीतः शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षा-
ल्लग्ना मन्ये ललिततनु! ते पादयोः पद्मलक्ष्मीः॥ ४०९ ॥

---

उपमेयस्य तु वाक्यान्तरे उपमानतेत्यर्थः। वाक्यान्तरं विना तदसम्भवादाह—अर्थादिति। कमलेवेति। विभातीति सर्वत्रान्वयः। स एव च सर्वत्र साधारणो धर्मः, दीप्यमानत्वं विना धर्मान्तराभावात्।

उत्प्रेक्षालङ्कारमाह—सम्भावनमिति। सम्भावनमुत्कटैककोटिकसंशयः, प्रकृतस्य उपमेयस्य। प्रकृतञ्च त्रिविधम्—प्रकृतस्य कारणं, प्रकृतस्य कार्यं, प्रकृतमेव चेति। एवञ्च—प्रकृतकारणसमेन प्रकृतकारणस्य, प्रकृतकार्यसमेन प्रकृतकार्यस्य, प्रकृतसमेन प्रकृतस्य सम्भावनमित्यर्थः।

तत्र प्रकृतकारणसमेन प्रकृतकारणसम्भावनमाह—उन्मेषमिति। हे ललित-तनु! इति हर्षात् पद्मलक्ष्मीस्ते तव पादयोर्लग्ना मन्ये। कस्माद्धर्षादित्यत्राह—उन्मेषमिति। य इन्दुर्मम पद्मलक्ष्म्या जातिवैरी स्वभाववैरी निशायां ममोन्मेषं न सहते, तस्येन्दोः सौन्दर्यदर्पो वक्त्रकान्त्या करणभूतया अनया इन्दीवरदलदृशा प्रसभं बलाच्छान्तिं नीत इति हर्षादित्यर्थः। अत्र पद्मलक्ष्म्याः पादयोः पतनं प्रकृतम्, तत्-कारणञ्च पादयोः पद्मतुल्यशोभाजनकः पुण्यविशेषस्तदुपमानेन हर्षेण सम्भावितः। पद्मलक्ष्म्याः पादपतनकारित्वमुभयसाधारणो धर्मः।

---

(A) सम्भावनमित्यादि। अथ इति वाच्यसाधर्म्यालङ्कारनिरूपणोत्तरम्, उत्प्रेक्षा निरूप्यत इति शेषः। समेनेति प्रकृतम् [उपमेयम्] आत्मनः समं करोतीति सममुपमानम्। उत्कटा प्रकृष्टस्योपमानस्येक्षा ज्ञानमुत्प्रेक्षा। एवञ्च उत्कटोपमानकोटिक-प्रकृतविषयक-सम्भावनमुत्-प्रेक्षेत्यर्थ इत्युद्योतः। सा चेयं हेत्वादिसम्भावनाभेदाद् बहुप्रकारा इति प्रदीपकृतः।

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥ ४१० ॥

इत्यादौ व्यापनादि लेपनादिरूपतया सम्भावितम् ।

(१३८) (A) ससन्देहस्तु भेदोक्तौ तदनुक्तौ च संशयः ॥९२॥

भेदोक्तौ यथा—

अयं किं मार्तण्डः ? स खलु तुरगैः सप्तभिरितः
कृशानुः किं ? सर्वाः प्रसरति दिशो नैष नियतम् ।

---

प्रकृतेन प्रकृतसम्भावनमाह—**लिम्पतीवेति**। अत्र तमसोऽङ्गव्यापनं प्रकृतं तत्समेन लेपेन सम्भावितम्, आच्छादकत्वं लेपव्यापनयोः साम्यम् । द्वितीये तु तमसोऽधःसम्बन्धः प्रकृतः, तत्समेनाञ्जनवर्षेण सम्भावितः, भतलस्य नीलत्वदर्शकत्वं द्वयोः साम्यम् । कार्योत्प्रेक्षा तु—

'निर्वृष्टलघुभिर्मेघैः सवितुस्तस्य चोभयोः ।
वर्द्धिष्णवो दिगाभोगाः प्रतापायेव रेचिताः ॥'

इत्यत्र बोध्या । अत्र हि मेघैर्दिगाभोगरेचनस्य कार्यं कालधर्मपालनं प्रकृतं तत्समेन प्रतापेन सम्भावितम्, रेचनजन्यत्वमुभयधर्मः ।

ससन्देहसंशयालङ्कारावाह—**ससन्देहस्त्विति**। **भेदोक्ताविति**, संशयानन्तरं तद्व्यावर्त्तकधर्मोक्तावित्यर्थः । **अयं किमिति**। त्वामाजौ समालोक्य प्रतिभटाः

---

(A) ससन्देहस्त्विति। अत्र प्रकृतस्य समेन यदिति अनुवर्त्तते, प्रकृतस्य समेन सादृश्यज्ञानप्रयोज्यो यः संशयः संशयज्ञानं स ससन्देहनामाऽलङ्कार इत्यर्थः । सन्देहेन सह विषयतया तद्विशिष्ट इति ससन्देहः । अत एव—

'इतो गता सा क्व गता न जाने गेहं गता मे हृदयं गता वा'

इत्यत्र न ससन्देहालङ्कारः साद्दश्यमूलकत्वाभावादित्युद्द्योतः । परमत्र ससन्देहो वाऽलङ्कारनाम सन्देहो वेति संशयः । बहवस्तु टीकाकृतः ससन्देह एव नामेति निश्चिक्युः । वयन्तु—स प्रसिद्धः, प्रसिद्धिश्च 'स्थाणुर्वा पुरुषो वे'त्यादिविलक्षणत्वेन, कविप्रतिभासंरम्भगोचरत्वेन च प्रत्येतव्या ; संशयः सन्देहालङ्कार इति स इत्यस्य भिन्नपदत्वमङ्गीकृत्य व्याचिख्यासामः । उल्लेखापह्नुतिनिश्चयादिवदलङ्कारेण सहाभेदप्रतीतेश्च न सहशब्दयोगलभ्यस्य संशयविशिष्टत्वस्य विवक्षणापेक्षेति न काचिदनुपपत्तिः । प्रकाशकृतामप्ययमेवाशय इति 'निश्चयान्तोऽपि सन्देहः स्वीकृतः' इति ग्रन्थेनावगम्यते । टीकाकृन्मते त्वलङ्कारद्वयमिदम्, ससन्देहः, संशयश्चेति । यद्यपि तन्मते 'ससन्देहसंशयालङ्कारावाहे'ति टीकापङ्क्तौ व्यवस्थापितं द्विवचनमेवालङ्कारभेदावगमने पर्याप्तम्, तथापि स्थूणानिखननन्यायेनोत्तरत्रापि साधकप्रमाणानि दर्शयिष्यन्ते ।

कृतान्तः किं ? साक्षान्महिषवहनोऽसाविति चिरं
समालोक्याऽऽजौ त्वां विदधति विकल्पान् प्रतिभटाः ॥४११॥

भेदोक्तावित्यनेन न केवलमयं निश्चयगर्भो यावन्निश्चयान्तोऽपि सन्देहः स्वीकृतः । यथा—

इन्दुः किं क कलङ्कः सरसिजमेतत् किम् अम्बु कुत्र गतम् ।
ललितसविलासवचनैर्मुखमिति हरिणाक्षि ! निश्चितं परतः ॥४१२

किन्तु निश्चयगर्भ इव नात्र निश्चयः प्रतीयमान इति उपेक्षितो भट्टोद्भटेन । तदनुक्तौ यथा—

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।

---

प्रतिकूलवीराः चिरमिति विकल्पान् विदधति । विकल्पानेवाह—अयं किमिति । स खल्विति तद्व्यावर्त्तको धर्मः । 'इतः' गतः । कृशानुरिति, सर्वा इत्यादिर्व्यावर्त्तकः । एष कृशानुः सर्वा दिशो न प्रसरति, सर्वदिक्प्रसारी न कृशानुरित्यर्थः । कृतान्त इति, महिषवहनत्वं तद्व्यावर्त्तकम् ।

अत्र व्यावर्त्तकधर्मोक्तौ (A)संशयितुर्निश्चयो व्यङ्ग्यः ; स चावाच्यत्वाद् गर्भीभूतस्तद्गर्भ इव वाच्यनिश्चयान्तोऽप्ययमलङ्कारोऽत्र विवक्षित इत्याह—भेदोक्ताविती्ति । 'निश्चयान्तः' वाच्यनिश्चयशेषः । इन्दुः किमिति । अत्र 'निश्चितमि'ति वाच्यो निश्चयः शेषः । तर्हि प्रामाणिकेन भट्टोद्भटेन निश्चयान्तः कथं नोक्त इत्यत्राह—किन्त्विति । 'न प्रतीयमानः' न व्यङ्ग्यः, तथात्व एव वैचित्र्यानुभव इति भावः ।

(B)भेदकधर्मानुक्तौ तु संशयालङ्कारमाह—तदनुक्ताविति । अस्या इति ।

---

(A) संशयितुरिति । निश्चयश्चात्र नायं मार्त्तण्ड इत्युपमानविषयकः, न त्वयं राजेति उपमेयविषयकस्तथा सति 'कृशानुः किं साक्षादि'ति द्वितीयसंशयोत्पत्तिर्न स्यात् ।

(B) एतेन ग्रन्थेन स्पष्टमेवेदमलङ्कारान्तरमिति प्रतीयते । किञ्चैतन्मते 'तदनुक्तौ तु' इति पाठः प्रतिभाति । स-चकारपाठेऽपि चकारस्त्वर्थक इति कल्पनीयम् । परं नैतत् प्रकाशकारसम्मतमिति मन्ये । स खलु 'भेदोक्तौ यथे'त्युपक्रम्य 'अयं मार्त्तण्डः किम्' इत्याद्युदाजहार । यदीमौ द्वावेवालङ्कारौ स्यातां तदाऽभेदोक्तिव्यावर्त्तकं भेदोक्ताविति पदं नैवोपादास्यत, केवलं यथेत्येव निरदेक्ष्यत् । एवं परत्रापि 'तदनुक्तौ यथे'त्यपि नोपाक्रमिष्यत्, अलङ्कारद्वयपक्षे भेदोक्तिर्भेदानुक्तिश्चेति लक्षणशरीरघटकं न तु प्रकारबोधकम् इति प्रकारभेदबोधकं तत्तत् पदं किमिव व्यावर्त्तयेत् ।

वेदाभ्यासजडः कथन्नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥ ४१३ ॥
( १३९ ) तद्रूपकमभेदो य उपमानोपमेययोः ।
अतिसाम्यादनपह्नुतभेदयोरभेदः ।

---

अस्याः सृजनविधौ प्रजापतिः स्रष्टा किं चन्द्रः यतः कान्तिप्रद इत्यर्थः । कान्तिमत्त्वादेव कान्तिप्रदत्वं सम्भाव्योक्तम् । शृङ्गारैकरस इति मदनवसन्तयोर्द्वयोरपि विशेषणम् । ननु विधिरेव कथं नास्या निर्मातेत्यत आह—वेदेति । मुनिर्मननादेव निर्माणशक्त इत्यर्थः । पुराणो जीर्णः । (A)अत्र विधेर्निर्मातृत्वव्यावृत्तिरपि संशयितेति व्यावर्त्तक-धर्मस्यानिश्चयात् संशयानुवृत्तिरेवेति न ससन्देहत्वम् ।

रूपकालङ्कारमाह—(B)तद्रूपकमिति । उपमानतादात्म्येनोपमेयनिश्चय इत्यर्थः ।

---

(A) अत्र ससन्देहस्यातिप्रसक्तिं वारयन् संशयलक्षणं सङ्गमयति—अत्रेत्यादिना । अयमन्यो दृढतरः प्रमाणोपन्यासः संशयस्य ससन्देहाद् भेदे । निर्मातृत्वव्यावृत्तिरपि संशयितेति प्रजापतेर्निर्मातृत्वस्य प्रचुरप्रसिद्धत्वेनेति भावः । अयमंशो व्यावर्त्तकधर्मस्यानिश्चये हेतुः । तथा च वेदाभ्यासजडत्वं धर्मत्वेनाभिमतमपि कस्य व्यावर्त्तकं स्यात्, किं निर्मातृत्वव्यावृत्तेरथवा निर्मातृत्वस्येति संशयान्न तद् व्यावर्त्तकम् । एवं विषयव्यावृत्तकौतूहलत्वमपीति टीकाकर्त्तुराशयः । वस्तुतस्तु जाड्यादयो हि ब्रह्मणश्चतुर्मुखस्य सृष्टिकर्तृत्वं निराकुर्वन्तश्चन्द्रादीनां सृष्टिकर्तृत्व-संशयमेव दृढयन्तीति न ते भेदकाः । संशयानुवृत्तिरेवेति । तथा चायमेव शुद्धसन्देह इत्युच्यते । इदमत्रावधेयम्—इदं पद्यं विश्वनाथेनातिशयोक्त्युदाहरणत्वेनोपात्तम् । तच्चोत्तरार्द्धे पुराणप्रजापति-निर्माणसम्बन्धेऽप्यसम्बन्धाध्यवसायमूलकत्वमभिप्रेत्येति उभयोः ससन्देहातिशयोक्त्योः परस्पर-नैरपेक्ष्येण स्थितेः संसृष्टिरिति ।

(B) तद्रूपकमित्यादि । अभेदोऽभेदारोपः आरोपविषयाभेद इत्यर्थः । यथाश्रुते ह्युपमात्वमपि सादृश्यप्रतीतेः स्यात् । उपमानोपमेययोरित्यस्योपमानतावच्छेदकोपमेयतावच्छे-दकपुरस्कारेण शब्दान्निश्चीयमानयोरित्यर्थः, तेनाभेदप्रतीतेराहार्यत्वलाभः, तेन भ्रान्तिमति नातिव्याप्तिः । अपह्नुतावतिशयोक्तौ च नातिव्याप्तिः, अपह्नुतौ स्वेच्छया निषिध्यमानत्वेन, भ्रान्तिमति तज्जनकदोषेणैव प्रतिबन्धात् । अतिशयोक्तेः साध्यवसानलक्षणामूलकत्वात्तस्य पुर-स्काराभावात् । अतिशयोक्तिवन्निदर्शनायामपि नातिव्याप्तिः । शब्दादिति विशेषणात् 'मुखमिदं चन्द्र' इति प्रात्यक्षिकाहार्यनिश्चयगोचरतादात्म्यव्यवच्छेदः । निश्चीयमानयोरित्युक्तया 'नूनं मुखं चन्द्रः' इत्युत्प्रेक्षायां नातिव्याप्तिः, तत्र ज्ञानमलङ्कारः, अत्राभेद इति भेदात् । अभेदा-रोपे बीजमतिसाम्यम्, तेन 'सुखं मनोरमा रामा' इत्यादिषु शुद्धारोपविषयाभेदनिरासः । यत्त

(१४०) समस्तवस्तुविषयं श्रौता आरोपिता यदा ॥ ९३ ॥

आरोपविषया इव आरोप्यमाणा यदा शब्दोपात्तास्तदा समस्तानि वस्तूनि विषयोऽस्येति समस्तवस्तुविषयम्। आरोपिता इति बहुवचनमविवक्षितम्। यथा—

ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थी-
न्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम्।
द्वीपाद् द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले
न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन ॥ ४१४ ॥

अत्र पादत्रये अन्तर्धानव्यसनरसिकत्वमारोपितधर्म एवेति रूपकपरिग्रहे साधकमस्तीति तत्सङ्कराशङ्का न कार्या।

---

रूप्यरूपकोभयनिर्देशे सति समस्तवस्तुविषयं नाम रूपकं भवतीत्याह—**समस्तेति**। श्रौताः शब्दोपात्ताः। आरोपिता इत्यत्राऽऽरोपशब्दादस्त्यर्थे इतच्, तेनारोप्यमाणारोपविषयौ द्वावप्यारोपितपदार्थौ। बहुवचनन्तु अत्राविवक्षितार्थकमित्याह—**आरोपविषया इवेति**। **ज्योत्स्नेति**। इयं रात्रिरेव कापालिकी कपालव्रतिनी योगिनी अन्तर्धानव्यापाररसिका सती द्वीपाद्द्वीपं भ्रमति। अन्तर्धानसामग्रीमाह—दधतीति। चन्द्रात्मनि (A)मुद्राकपाले भिक्षापात्रविशेषे न्यस्तं सिद्धाञ्जनस्य परिमलं दोरं दधती अन्तर्धानव्यसने रसिका सती द्वीपाद्द्वीपं भ्रमतीत्यन्वयः। सिद्धाञ्जनमदृश्यत्वकारकमौषधम्, अन्तर्धानम् अदृश्यत्वम्, व्यसनं व्यापारः। तस्याः कापालिकत्वोपयोगिविशेषणद्वयमाह—ज्योत्स्नेति बिभ्रतीति च। ज्योत्स्नात्मकभस्मप्रक्षणेन धवलतारकात्मकास्थीनि बिभ्रती च।

ननु रात्रिः (B)कापालिकीव ज्योत्स्ना भस्मेव तारका अस्थीनीव चन्द्रो मुद्राकपालमिवेति च उपमासन्देहसङ्करालङ्कार एवायं न रूपकमित्यत आह—**अत्रेति**।

---

साहश्यप्रयुक्ताभेदस्येव सम्बन्धान्तरप्रयुक्ताभेदस्यापि रूपकत्वमिति, तन्न; साहश्यामूलकस्मरणस्याप्यलङ्कारतापत्तेरित्यादि प्रदीपोद्द्योतयोरुन्नेयम्।

(A) मुद्राकपाल इति। दीक्षाकालगृहीतोपकरणेषु मुद्रोपपदनाम्ना पाखण्डानां व्यवहार इति चण्डीदासः, मुद्रापरिमलशब्दौ प्रशंसार्थावित्यन्ये इत्युदाहरणचन्द्रिका।

(B) कापालिकीवेति। इदम् उपमानिर्वाहकं समासवाक्यम्, न सङ्करनिर्वाहकमपि।

(१४१) श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्ति तत् ।

केचिदारोप्यमाणाः शब्दोपात्ताः केचिदर्थसामर्थ्यादवसेया इत्येकदेशविवर्त्तनाद् एकदेशविवर्ति । यथा—

जस्स रणन्तेउरए करे कुणन्तस्स मण्डलग्गलअम् ।
रससंमुही वि सहसा परंमुही होइ रिउसेणा ॥ ४१८ ॥

अत्र रणस्यान्तःपुरत्वमारोप्यमाणं शब्दोपात्तम्, मण्डलाग्र-

---

आरोपिताया कापालिक्या एवान्तर्धानव्यसनरसिकत्वं धर्मो न कापालिक्युपमाया रात्रेरिति द्वितीयपादे रूपकसिद्धौ तद्वशात् प्रथमतृतीयपादयोरपि रूपकं सिध्यतीत्यर्थः । न हि भस्मतुल्या ज्योत्स्ना अस्थितुल्यास्तारका मुद्राकपालतुल्यश्चन्द्रश्च कापालिक्या धर्म इति, किन्तु ज्योत्स्नादिरूप-भस्मादिकमेव तद्धर्म इत्यर्थः ।

एकदेशविवर्त्ति रूपकमाह—**श्रौता** इति । अङ्गाङ्गिभावापन्नेष्वनेकरूपकेषु केचिद् रूप्यमाणाः शब्दोपात्ताः केचित्त्वर्थलभ्या इत्यर्थः । अत्र चाङ्गाङ्गिभावापन्नरूपकानेकत्वा-भिप्रायेणैव बहुवचनम् । यदि त्वेकमेव रूपकं तत्रापि तुल्यन्यायाद् रूप्यमाणस्यार्थत्वे इदं बोध्यम् । यथा गुणसिन्धुरित्यादौ गुणस्य जलत्वमार्थम् । **जस्सेति** ।

(A)यस्य रणान्तःपुरे करे कुर्वतो मण्डलाग्रलताम् ।
रससम्मुख्यपि सहसा पराङ्मुखी भवति रिपुसेना ॥ इति संस्कृतम् ।

निर्भयसञ्चारदेशत्वेन रण एवान्तःपुरम् । मण्डलाग्रलतां खड्गलताम् । अत्र स्त्री-लिङ्गशब्दार्थत्वेन मण्डलाग्रलता रिपुसेना च स्त्रीत्वेनावसीयेते । तत्र च मण्डलाग्रलता-रूपाया नायिकाया अन्तःपुरे करे करणाद् रिपुसेनायाः प्रतिनायिकाया लज्जया पराङ्-मुखत्वम् । रससम्मुखीत्यत्र युद्धरस एव श्लेषात् शृङ्गाररसः(B) । **एकदेश** इति ।

---

'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इत्यनेन समासः । रूपकनिर्वाहकन्तु 'रात्रिरेव कापालिकी'त्यादि पूर्वं दर्शितम्, 'मयूरव्यंसकादयश्चे'त्यनेन च तत्र समासः ।

(A) यस्येति । यस्य राज्ञो रण एवान्तःपुरं तत्र मण्डलाग्रलतां खड्गलतां कृपाणीमिति यावत् नायिकाञ्च करे कुर्वतो गृहीतवतः युद्धार्थं रतार्थं चेति भावः, रिपुसेना शत्रुसेना प्रति-नायिका च रससम्मुखी युयुत्सया वीररसाविष्टापि पक्षे रिरंसया शृङ्गाररसाविष्टापि सहसा शीघ्रं पराङ्मुखी भवति, युद्धात् प्रियसङ्गमाच्च निवर्त्तते इत्यर्थ इति सुधासागरकाराः ।

(B) अत्राहुरुद्द्योतकाराः—यद्यपि लिङ्गविशेषात् करग्रहणरससम्मुखत्वादेर्नायिकाधर्मत्वेन प्रसिद्धत्वात् श्लिष्टत्वाच्च समासोक्तिविधयैव नायिकात्वावगतिर्वक्तुं शक्या, तथाप्यन्तःपुरत्वारोपोऽपि

लताया नायिकात्वं रिपुसेनायाश्च प्रतिनायिकात्वम् अर्थसामर्थ्या-दवसीयते इत्येकदेशो विशेषेण वर्त्तनादेकदेशविवर्ति।

(१४२) साङ्गमेतत्——————(A)

उक्तं द्विभेदं सावयवम्।

(१४३)——————निरङ्गं तु शुद्धम्

यथा—

कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्
सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत्।

---

अङ्गाङ्गिभावापन्नरूपकरूपयोरतथाभूतरूप्यरूपकयोश्चैकदेशो बोध्यः, तेन गुणसिन्धु-रित्येकमात्ररूपकैकदेशस्यापि परिग्रहः। 'विवर्त्तनं' शाब्दत्वम्। उक्तं द्विभेदमिति। समस्तवस्तुविषयरूपकमेकदेशविवर्त्तिरूपकञ्चेत्युक्तं द्विभेदं सूत्रोक्तम्। उदाहरणद्वये साङ्गं सावयवम्, रूपितायाः कापालिक्या भस्मादिधर्मवत्त्वाद् रूपितस्यान्तःपुरस्य नायिकादिधर्मवत्त्वाच्च।

उदाहरणान्तरे त्वनयोर्निरङ्गत्वमपि सम्भवतीत्याह—निरङ्गन्त्विति। निरङ्गन्त्विदं द्वयं शुद्धमित्यर्थः, न त्वेतद्द्वयभिन्नं तृतीयरूपं शुद्धमित्यर्थः।

तत्र शुद्धं समस्तवस्तुविषयमुदाहरति—कुरङ्गीवेति। अहो तत्तस्माद् वेद्मि जानामि अस्या हृदि नायकविषयां प्रेमलतिकां सेक्तुं मनसिजः प्रवृत्तः। यद् यस्माद् गीतध्वनिषु नायकविषयगीतध्वनिषु अङ्गानि कुरङ्गीव स्तिमितयति निश्चलयति।

---

तत्र तन्त्रमित्याशयः। न च रूपकसङ्घातात्मकस्यास्य रूपकभेदगणनायां गणनमनुचितमिति वाच्यम्, चमत्कारविशेषजनकतया तत्समुदायात्मकस्याप्यस्य मालारूपकादिवद् भेदेषु गणनात्।

ननु वक्ष्यमाणे 'विद्वन्मानसहंस' इत्यादौ राज्ञि हंसत्वारोपो यथा मनसः सरस्त्वारोपमपेक्षते, तथाऽत्रापि नायिकाप्रतिनायिकात्वारोपाभ्यां रणेऽन्तःपुरत्वारोपोऽपेक्ष्यते इति परम्परितत्वमस्य स्यादिति चेन्न; रणेऽन्तःपुरत्वस्य सुखसञ्चारास्पदत्वादिनेव मण्डलाग्रलतादेर्नायिकात्वाद्यारोपस्य लिङ्गविशेषकरग्रहादिनापि सम्भवेनास्य परम्परितत्वाभावात्। राज्ञि हंसत्वारोपस्तु मनसि सरस्त्वारोपं विना न भवत्येव सरोवराधेयत्वं विना राज्ञि हंससाधर्म्यान्तराभावादिति।

(A) साङ्गमेतदिति। साङ्गं सावयवम् उक्तप्रकारद्वयवदित्यर्थः। साङ्गत्वमनेक-रूपकसमुदायः एकस्मिन् रूपके द्वितीयस्याङ्गत्वेनावस्थानात्, अङ्गशब्दस्य हेत्वर्थत्वात्

अनिद्रं यच्चान्तः स्वपिति तदहो वेद्म्यथभिनवां
प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम् ॥ ४१६ ॥

(१४४) ——————माला तु पूर्ववत् ॥ ६४ ॥

मालोपमायामिवैकस्मिन् बहव आरोपिताः । यथा—

सौन्दर्यस्य तरङ्गिणी तरुणिमोत्कर्षस्य हर्षोद्गमः
कान्तेः कार्मणकर्म (A)नर्मरहसामुल्लासनावासभूः ।
विद्या वक्रगिरां विधेरनवधि(B)प्रावीण्यसाक्षात्क्रिया
बाणाः पञ्चशिलीमुखस्य ललनाचूडामणिः सा प्रिया ॥४१७॥

---

कान्तस्योदन्तं वार्त्ताम् । अनिद्रमिति निद्रां विनापि भावनया अन्तर्निद्रातीत्यर्थः । यद्वा अन्तर्गृहाभ्यन्तरे उत्कण्ठया निद्रारहितं यत् स्वपितीत्यर्थः । अत्र रूप्यरूपके द्वे श्रौते इति समस्तवस्तुविषयम्, तदङ्गपल्लवादिरूपणाभावाच्छुद्धम् । एकदेशविवर्त्तिनः शुद्धस्य 'गुणसिन्धु'रित्यादिकमेवोदाहरणम् ।

मालारूपकमाह—माला त्विति । पूर्ववदिति, त्रिलोपे च समासगेत्यत्र चकारसमुच्चितमालावदित्यर्थः । सौन्दर्यस्येति । हर्षोद्गगम उद्गतो हर्षः । कार्मणकर्म (C)मूलकर्म, कान्तिजनकत्वात् । नर्मरहसां रहस्यनर्मणाम्, राजदन्तादि-

---

इति प्रदीपकाराः । एतेनोक्तप्रकारद्वयवद् रूपकमेव साङ्गमित्यर्थः न तूदाहरणद्वय एव तत् साङ्गम् । टीकाकारस्तूक्तोदाहरणद्वये समस्तवस्तुविषयम् एकदेशविवर्त्ति चेति भेदद्वयवतो रूपकस्य साङ्गत्वम्, तस्यैव वक्ष्यमाणोदाहरणे निरङ्गत्वमित्याह । एतेनैतन्मते समस्तवस्तुविषयम् एकदेशविवर्त्ति चेति रूपकद्वयमेव साङ्गं निरङ्गमिति भेदद्वयवदित्यायाति । टीकान्तरे तन्त्रान्तरे च रूपकस्य साङ्गं निरङ्गं परम्परितमिति मूलभेदत्रयम् । साङ्गस्य पुनः समस्तवस्तुविषयम् एकदेशविवर्त्ति चेति भेदद्वयं निरूपितम् । निरङ्गस्यापि भेदद्वयं केवलं मालारूपञ्चेति । परम्परितन्तु श्लिष्टाश्लिष्टभेदेन द्विविधं सदपि प्रत्येकं मालारूपत्वेन केवलरूपत्वेन च द्विभेदमिति सङ्कलनेन चतुर्भेदम् । इत्युदाहृतोदाहरणचन्द्रिकादौ द्रष्टव्यम् ।

(A) नर्मरहसां रहस्यपरिहासानां क्रीडारहस्यानां वा उल्लासनाया जृम्भनस्य आवासभूः वसतिस्थानम् इत्युद्द्योतकाराः ।

(B) अनवधि निःसीमं यत् प्रावीण्यं निर्माणकौशलं तस्य साक्षात्क्रिया करणव्युत्पत्त्या प्रत्यक्षहेतुरित्युद्द्योतकाराः । एतेनैतन्मतेऽपि नात्र रूपकमिति प्रतीयते ।

(C) मूलकर्म वशीकरणक्रिया ओषध्यादिमूलेन कर्मेति योगात् ।

(१४५) नियतारोपणोपायः स्यादारोपः परस्य यः।
तत् परम्परितं श्लिष्टे वाचके भेदभाजि वा ॥ ९५ ॥

---

समासात् पूर्वनिपातः। वक्रगिरां जनिका विद्या। प्रावीण्यान्तस्य साक्षात्कारो यस्यां तादृशी। अत्रांशे रूपकं नास्ति। (A)साक्षात्कारकारणे तस्यां कार्यरूपणं वा। तदा च (B)साक्षात्परम्पराभ्यां साक्षात्कारानुव्यवसायजनकत्वमुभयसाधारणो धर्म उपमानोपमेयभावप्रयोजकः। अत्र च सौन्दर्यस्येत्यत्र जलस्याऽऽर्थत्वाद् (C)एकदेशविवर्त्ति। सर्वमन्यत् समस्तवस्तुविषयं शुद्धम्।

परम्परितरूपकमाह—नियतेति। (D)'नियतं' प्रकृतं प्रकृतरूपकनिर्वाहकं

---

(A) एतद् रूपकसाधकम्। एवञ्चैतत्कल्पे समासोऽपि न बहुव्रीहिरपि तु तत्पुरुष एव।

(B) साक्षात्परम्पराभ्यामिति। साक्षात्कारे अनुव्यवसायजनकत्वस्य साक्षात्त्वम्, नायिकायाञ्च तादृशसाक्षात्कारजनिकायां परम्परात्वम्। तथा चात्र कारण-तत्कारणसाधारणं प्रयोजकत्वं साधर्म्यमिति भावः। एवंविधसाधर्म्यस्यास्फुटतयैवैतस्मिन् पक्षेऽनास्थां सूचयितुं 'कार्यरूपणं वे'ति वाकारोपादानमिति ज्ञेयम्।

(C) एकदेशेति। एतदपि शुद्धमेव, एकस्यापि शुद्धपदस्योभयत्रान्वयात्। अत्रोद्योतकारा मालारूपकोत्थितौ प्रदीपकाराणाम् 'अथ साङ्गस्यैव वैचित्र्यान्तरमाह' इत्युपोद्घातमभिप्रेत्याहुः—वैचित्र्यान्तरम् एकविषयत्वम्, परस्परमङ्गाङ्गिभावानापन्नत्वरूपम्। एवञ्च 'साङ्गस्ये'त्यस्यानेकरूपकसमुदायस्येत्येवार्थः। क्वचित्तु—निरङ्गस्यैवेति पाठः। एकविषयनानापदार्थारोपरूपत्वान्मालात्वं परस्परसापेक्षत्वविरहाच्च निरङ्गत्वमिति तदर्थ इति।

एतेन टीकाकृन्मते रूपकस्य द्वादश भेदा भवन्ति। तथा हि समस्तवस्तुविषयम् एकदेशविवर्त्ति चेति मूलभेदद्वयं प्रत्येकशः साङ्गनिरङ्गभेदेन विभक्तं सच्चतुर्विधम्। ततश्च मालारूपत्वात् केवलरूपत्वाच्चैतच्चतुर्विधमपि प्रत्येकं द्विभेदम् इत्यष्टौ। परम्परितञ्च श्लिष्टाश्लिष्टभेदेन मालाकैवल्याभ्याञ्च चतुर्विधमिति सङ्कलनेन द्वादश रूपकभेदाः। प्राचीनमते तु रूपकं प्रथमतो द्विभेदं साङ्गं निरङ्गमिति। साङ्गस्यापि भेदद्वयम्—समस्तवस्तुविषयम् एकदेशविवर्त्ति चेति। निरङ्गमपि मालाकेवलरूपत्वाद् द्विविधमिति चत्वारि, परम्परितन्तु पूर्ववदेव चतुर्भेदमिति साकल्येनाष्टौ भेदाः। तथा च विश्वनाथः—'तेनाष्टौ रूपके भिदाः, चिरन्तनैरुक्ता इति शेषः' इति।

(D) नियतस्य मुख्यस्याऽऽरोपो वस्त्वन्तरतादात्म्यप्रतीतिस्तस्योपायः कारणं यः परस्यामुख्यस्याऽऽरोपस्तत् परम्परितम्। रूपणानां कार्यकारणभावरूपा परम्परा सञ्जाताऽत्रेति योगादिति केचित्, तन्न; 'आलानं जयकुञ्जरस्ये'त्यादावव्याप्तेः। अत्र हि प्रकृत एव जये कुञ्जरत्वारोपस्य प्रकृत एव राज्ञि आलानत्वारोपहेतुत्वम्। वस्तुतस्तु नियतमारोपणमुपायो यत्र, आरोपणं विना

यथा—

विद्वन्मानसहंस वैरिकमलासङ्कोचदीप्तद्युते
दुर्गामार्गणनीललोहित समित्स्वीकारवैश्वानर ।
सत्यप्रीतिविधानदक्ष विजयप्राग्भावभीम प्रभो
साम्राज्यं वरवीर वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥ ४१८ ॥

अत्र मानसमेव मानसम्, कमलायाः सङ्कोच एव कमलानामसङ्कोचः, दुर्गाणाममार्गणमेव दुर्गाया मार्गणम्, समितां स्वीकार एव समिधां स्वीकारः, सत्ये प्रीतिरेव सत्यामप्रीतिः, विजयः परपराभव एव विजयोऽर्जुनः, एवमाद्यारोपणनिमित्तो हंसादेरारोपः ।

---

यद् (A)अप्रकृतरूपकं श्लिष्टे रूप्यरूपकोभयवाचके पृथग् उभयवाचके वा शब्दे दृश्यते तद् द्विविधं परम्परितरूपकमित्यर्थः ।

तत्र श्लिष्टशब्दे उदाहरति—**विद्वन्मानसे**ति । 'प्रभो' इत्यन्तं सर्वं सम्बोधनम् । हे तादृश हे वरवीर, उच्चैः साम्राज्यं वैरिञ्चं ब्राह्मं वत्सरशतं क्रियाः कुर्या इत्यर्थः । दीप्तद्युतिः सूर्यः । सम्बोधनगणार्थस्तु वृत्तावेवोक्तः । अत्र तात्पर्यवशात् समासनिबद्धयोरपि विद्वद्वैरिपदार्थयोस्त्यागेनैव मानससरसः, कमलानामसङ्कोचस्य च (B)श्लिष्टपदादुपस्थितौ तयो रूपणम् । **दुर्गाणाममार्गण**मिति दुर्गं विनैव योद्धृत्वात् ।

---

एवञ्चैकरूपणहेतुकं यदारोपणं न सम्भवत्येवेति यावत्, एवम्भूतः परस्यान्यस्य य आरोपः स तथा ।
रूपणान्तरं परम्परितम्, कार्यकारणभावरूपा परम्परा सञ्जाताऽत्रेति व्युत्पत्तेरित्युद्द्योतः ।

A. अप्रकृतरूपकमिति । रूपकमत्रारोपमात्रम्, नालङ्कारः । तथा चाहुरुद्द्योतकाराः—यद्यपि दुर्गाणाममार्गणादौ दुर्गामार्गणादीनामारोपो न रूपकं किन्तु श्लेषमहिम्नारोपमात्रम्, तथापि रूपण[क]-पदमारोपमात्रपरमेवेति न दोषः । इदमेव चास्योपायत्वमारोपे यत्तन्मूलीभूतसाधारणधर्मसम्पत्तिः, साधारणधर्मसम्पत्ती रूपकेणैवेत्यत्र न किञ्चिन्मानम् । यद्वा श्लेषस्थलेऽपि शब्दरूपसाधर्म्यकृत एवाभेदाध्यवसाय इति तस्यापि रूपकत्वमेवेति न दोष इति ।

B. श्लिष्टपदादुपस्थितावित्यादि । अत्र श्लिष्टशब्देनार्थद्वयोपस्थितौ श्लेषमहिम्ना प्रकृतसम्बन्धिनि अप्रकृताभेदप्रत्ययः, प्रकरणेन प्रकृतसम्बन्धिनो विशेष्यत्वात् । स चाभिधामूलव्यञ्जनयेति बोध्यम् । वाचके इति च बोधक इत्यर्थकम्, ततस्तमेव साधारणधर्ममाश्रित्य प्रकृते राज्ञि हंसत्वाद्यारोपरूपरूपकसिद्धिरित्युद्द्योतकाराः प्राहुः ।

(A)यद्यपि शब्दार्थालङ्कारोऽयमित्युक्तम्, वक्ष्यते च; तथापि प्रसिद्ध्यनुरोधादत्रोक्तम्। (B)एकदेशविवर्त्ति हीदमन्यैरभिधीयते।

---

सत्यामप्रीतिरिति दक्षेण तत्पित्रा तत्पतेर्महेशस्य निन्दनात्। विजयोऽर्जुन इति विजयापरनामकत्वात्तस्य। तथा च परपराभवस्य प्राग्भावः कारणतैवार्जुनात् प्रागभावः पूर्वजन्म तत्र भीमसेन इत्यर्थः। एवमादीति। एवमाद्यारोपणं निमित्तमुपायो यस्य। प्रकृते हंसादेरारोपस्तादृश इत्यर्थः; मनसि हंसस्य, कमलायाः सङ्कोचे सूर्यस्य, दुर्गाणाममार्गणे नीललोहितस्य, समितां स्वीकारे वैश्वानरस्य, सत्ये प्रीतौ दक्षप्रजापतेः, परपराभवजनने भीमसेनस्य च बाधेनाप्रकृतमानस-सरोवराद्यारोपणस्य तदुपायत्वात्। यद्यपि दुर्गस्यामार्गणे नीललोहितस्य, सत्ये प्रीतौ दक्षप्रजापतेः, परपराभवे भीमसेनस्य च न बाधस्तथापि तत्र तत्र तेषां प्रसिद्धि-बाधादेव तात्पर्यविषयप्रसिद्धतद्बाधो बोध्यः।

अत्रोक्तम् इति, अर्थालङ्कारमध्ये उक्तम् इत्यर्थः। प्रसिद्धिं दर्शयति—एकदेशेति। एकदेशे प्रकृतहंसादिरूपकार्थांशे विवर्त्ति पर्यासततात्पर्यकमित्यर्थः, अत्र प्रकृतरूपणस्य तन्निर्वाह एव तात्पर्यात्।

---

"विस्तारिकायान्तु, अत्र केचित्—'नृपतिवर्णनप्रकरणनियन्त्रितैर्मानसादिपदैरभिधया मनः-प्रभृतीनां प्रत्यायनम्, सरःप्रभृतीनां पुनर्व्यञ्जनयैव। ततश्च लक्षणस्य'वाचक'पदस्य बोधकत्वमर्थ' इत्याहुः, तदसत्; प्रकरणवच्छब्दान्तरसान्निध्यस्यापि तात्पर्यग्राहकत्वाद् हंसादिपदान्तर-साविध्येन सर-आदेरपि वाच्यतायामविरोधात्। ततश्च वाच्ययोरर्थयोरभेदात् संसर्गोऽपि वाच्य इत्यभिसन्धाय ग्रन्थकृता लक्षणे वाचकपदमुपात्तम् इत्युक्तम्" इति बालबोधिनी।

(A) यद्यपीत्यादि। ननु श्लिष्टपरम्परितस्योभयालङ्कारतया पुनरुक्तवदाभासस्येव शब्दालङ्कारप्रस्तावेऽभिधानमुचितं न त्वर्थालङ्कारप्रस्तावे इति शङ्कते यद्यपीति। 'उक्तम्' 'दोषगुणा-लङ्काराणाम्' इत्यादिना नवमोल्लासे, 'वक्ष्यते' चात्रैव सङ्करप्रस्तावे इत्यर्थः। 'उक्तं प्राचीनै-र्वक्ष्यतेऽस्माभिरि'त्युद्द्योतः। अत्रोक्तं प्रदीपकारैः—'श्लेषस्य शब्दपरिवृत्त्यसहतया शब्दालङ्कार-त्वमित्युक्तम्, वक्ष्यते च; तथा च श्लेषपरम्परितमुभयालङ्कारो युज्यत इति तदवसर एव वक्तुमौचित्यात् किमित्यर्थालङ्कारमध्ये पठित इति चेत्, सत्यमेतत्; तथापि श्लेषापवादकं रूपकमित्यलङ्कारसर्वस्वकारादिप्रसिद्ध्यनुरोधेनोक्तम्' इति।

(B) एकदेशेति। इदमस्य रूपकस्यार्थालङ्कारत्वेन प्रसिद्धौ बीजम्। तथा चैकदेश-विवर्त्ति रूपकम् अर्थालङ्कार इत्यत्र सर्वेषामविसंवादादर्थालङ्कारमध्ये निरूपणमुचितमिति भावः। 'यथा रणेऽन्तःपुरत्वारोपे तद्विशिष्टसम्बन्धस्य मण्डलाग्रलतादौ अयोग्यतया तद्बलादेव नायिकात्वा-

भेदभाजि यथा—

आलानं जयकुञ्जरस्य दृशदां सेतुर्विपद्वारिधेः
पूर्वाद्रिः करवालचण्डमहसो लीलोपधानं श्रियः ।
संग्रामामृतसागरप्रमथनक्रीडाविधौ मन्दरो
राजन् राजति वीरवैरिवनितावैधव्यदस्ते भुजः ॥ ४१९ ॥

अत्र जयादेर्भिन्नशब्दवाच्यस्य कुञ्जरत्वाद्यारोपे भुजस्याऽऽलानत्वाद्यारोपो (A)युज्यते ।

---

आलानमिति। हे राजन्, हे वीर, वैरिवनितावैधव्यदस्ते भुजो राजति। भुजे रूपणान्याह—आलानमिति। आलानं बन्धनस्तम्भः, विपद्वारिधेस्तारको दृशदां सेतुः, चण्डमहाः सूर्यः, उपधानं शिरःस्थापनतूलराशिः। अत्रांशे शुद्धरूपकमेव न परम्परितम्। भिन्नशब्दवाच्यस्येति, रूप्यरूपकवाचकशब्दभेदादित्यर्थः। युज्यत इति, जयादौ कुञ्जराद्यारोपणं विना जयादेरालानादिसम्बन्धानुपपत्तेरित्यर्थः।

---

रोपस्तथा राजनि हंसत्वारोपे तद्विशिष्टस्यान्तःकरणसम्बन्धायोग्यत्वेन तद्वलान्मानसे सरस्तारोपेणैकदेशविवर्त्ति तैरुक्तमित्यर्थः' इत्युद्द्योतः। अत्रोक्तं प्रभायाम्—'एकपदोपस्थितयोरन्तःकरणसरोविशेषयोरभेदाध्यवसायेऽपि नैकत्रापरारोपः, तस्य भेदेन [ स्वतन्त्र ] विषयनिर्देशापेक्षत्वात्। अन्यथा [ यदि शुद्धाभेदप्रत्यय एवारोप इत्युच्यते तदा ] विषयनिगरणात्मिकायामतिशयोक्तावपि तत्प्रसङ्गात्। तस्मादार्थ एवायमारोप इत्येकदेशविवर्त्तित्वमत्रापि युक्तमिति। स्वमते त्वभिधामूलव्यञ्जनोपस्थितस्य सरःप्रभृतेर्मनःप्रभृतौ व्यञ्जनयैवारोपोऽन्यत्र तु खड्गलतादावार्थिक इति विशेषात् श्लेषाङ्कमेवैतदिष्टम्' इति।

(A) युज्यत इति, कुञ्जराभिन्नजयाधारत्वसाधर्म्येणेति भावः। एवमग्रेऽपि बोध्यम्। एवं जये कुञ्जरत्वारोपे भुजरूपालानसम्बन्धित्वं साधारणधर्मः। न चैवमन्योन्याश्रयः, कल्पनामयतया सकलसिद्धेः, कल्पनायाश्च स्वप्रतिभाधीनत्वात्। शिल्पिभिः परस्परावष्टम्भाधीनस्थितिकाभिर्गृहविशेषनिर्माणाच्चेति केचित्। वस्तुतो जयकुञ्जरयोरभेदप्रत्यय इच्छाधीन आहार्य एव, समर्थकारोपः सादृश्यमूलक एवेत्यत्र नाग्रह इत्यन्योन्याश्रयसम्भावनैव नेत्युद्द्योतः। अत्र—

'आहवे जगदुद्दण्डराजमण्डलराहवे ।
श्रीनृसिंहमहीपाल स्वस्त्यस्तु तव बाहवे ॥

अत्र राजमण्डलं नृपसमूह एव चन्द्रबिम्बमित्यारोपो राजबाहो राहुत्वारोपे निमित्तम्। राजभुजादीनां राहुत्वाद्यारोपो राजमण्डलादीनां चन्द्रमण्डलत्वाद्यारोपे निमित्तम् इति केचिदि'ति

अलौकिकमहालोकप्रकाशितजगत्त्रय ।
स्तूयते देव सद्वंशमुक्तारत्नं न कैर्भवान् ॥ ४२० ॥
निरवधि च निराश्रयं च यस्य स्थितमनिवर्त्तितकौतुकप्रपञ्चम् ।
प्रथम इह भवान् स कूर्ममूर्त्तिर्जयति चतुर्दशलोकवल्लिकन्दः ॥४२१॥

---

श्लिष्टाश्लिष्टवाचकद्वये मालापरम्परितद्वयमाह—**अलौकिकेति**, **निरवधीति** च । प्रकृतरूपकोपायरूपकाणामनेकत्वे माला । 'विद्वन्मानसे'त्यादौ 'आलानमि'त्यादौ च प्रकृतरूपकाणामेवानेकत्वं तत्तदुपायरूपकाणि त्वेकैकान्येव । उपायता चात्र साक्षात्-परम्पराभ्यां विवक्षिता, परम्परया चाग्रे 'निरवधी'त्यादौ दर्शयिष्यते । अलौकिकेति । हे देव, सद्वंशः सत्कुलमेव सद्वेणुस्तत्र मुक्तारत्नं भवान् कैर्न स्तूयते । अलौकिकेति सम्बोधनान्तमिदम्, सविसर्गपाठस्तु प्रामादिकः, मुक्तारत्ने लिङ्गभेदात्तदनन्वयेन परम्परितमालानुपपत्तेः । (A)अलौकिकोऽन्यलोकासाधारणो यो महालोको महादृष्टिपातः स एव चालौकिकमहाज्योतिस्तेन प्रकाशितजगत्त्रय । अत्र जगत्पदं (B)मुक्तामण्डित-जगत्परम्, मुक्ताज्योतिषा तत्प्रकाशनात् । अत्र सत्कुले मुक्ताबाधाद् राज्ञि तद्रूपणं बाधितम्, कुले वेण्वारोप एकस्तदुपायः ; दृष्टिपाते ज्योतिरारोपोऽन्यस्तदुपायः ; ज्योतिर्विना मुक्तारोपणाचमत्कारित्वात् । वंशालोकपदे च श्लिष्टे वाचके ।

भिन्नवाचके तु कस्यचिद् रूपकस्य साक्षात् कस्यचित्तु परम्परया उपायत्वं दर्शयति—**निरवधीति** । भवान् इह जगति स प्रसिद्धः कूर्ममूर्त्तिर्जयति । कीदृशः ? चतुर्दशलोका एव उपर्युपरिभावेन दीर्घत्वाद् वल्लिर्लता तस्याः कन्दो मूलं पालनेन यज्ञेन च सकल-तद्रक्षणात्, यस्य कूर्ममूर्त्तिरूपस्य भवतः स्थितं स्थितिः पितृपितामहादिक्रमेण निरवधि अवधिशून्यम्, कूर्ममूर्त्तेश्च विस्तारावधिशून्यम्, तथा अनिवर्त्तितः कौतुकस्य नृत्यगीतादेः प्रपञ्चो यत्र तादृशम्, कूर्ममूर्त्तेश्चानिवर्त्तितविस्मयः प्रपञ्चो विस्तारो यत्र तादृशम् । निराश्रयं परालम्बनरहितं स्वतःसिद्धत्वादाधाररहितत्वाच्च ।

---

दर्पणकाराः प्राहुः । 'राजमण्डलादीनां सरूपशब्दवाच्यत्वं साम्यं प्रसिद्धमारोपकारणम्, बाहुराजा-दीनान्तु तादृशधर्मान्तरमप्रसिद्धमित्यस्वरसः केचिदित्यनेन सूचित' इति तर्कवागीशाः ।

(A) अलौकिकस्य लोकेऽन्यत्रादृष्टस्य महस्योत्सवस्याऽऽलोकः प्रदर्शनमेव द्योतस्तेन प्रकाशितं जगत्त्रयं येन, अलौकिकमहालोको यश इति वेत्युद्द्योतः ।

(B) एतच्च दृश्यमानजगतो मुक्तारत्नज्योतिषा प्रकाशासम्भवेन राजनि मुक्तात्वारोपे अलौकिकमहालोकेत्यादेर्निमित्तता न स्यादित्यत उक्तमिति ज्ञेयम् ।

इति च [1]मालारूपमपि परम्परितं द्रष्टव्यम् ।

किसलयकरैर्लतानां करकमलैः कामिनां मनो जयति ।
नलिनीनां कमलमुखैर्मुखेन्दुभिर्योषितां मदनः ॥ ४२२ ॥

इत्यादिरसनारूपकं न वैचित्र्यवदिति न लक्षितम् ।

---

(A)अत्र राज्ञि प्रकृते कूर्ममूर्त्तिरूपणे मूलत्वपर्यवसितं कन्दरूपणं साक्षादुपायः, लोकमूलकत्वाभावे कूर्ममूर्त्तित्वानुपपत्तेः । लोकानाञ्च कन्दाभावाद् वल्ल्यारोपणं परम्परयाऽन्यस्तदुपाय इति साक्षात्परम्पराभ्यामनेकोपायमाला । कूर्ममूर्त्यारोपोपायः कन्दारोपस्तदुपायो वल्ल्यारोप इति परम्परा । (B)मालारूपमपीति ज्यायान् पाठः । मालारूपकमपीति क्वचित् पाठे परम्परितमपीत्यपिकारयोजना ।

रसनारूपकं दर्शयंस्तदनुक्तिबीजमाह—किसलयेति । मदन एतैरेतैः कामिनां मनो जयति । तानाह—किसलयेति । करकमलैरित्यत्रापि योषितामित्यस्यान्वयः । एषामुद्दीपकत्वाज्जयः । अत्र किसलयेषु कराः, करेषु कमलानि, तेषु मुखानि, तेष्विन्दवो रसनारीत्या रूपिताः ।

---

(A) अत्राहुरुद्द्योतकाराः—लोके वल्लित्वारोपो राज्ञि कन्दत्वारोपे निमित्तम्, स च राज्ञि कूर्मत्वारोपे हेतुः । ननु पूर्वश्लोके मुक्तात्वारोपे प्रकाशितजगत्त्रयत्वारोपोऽपि निमित्तम्, अत्र कूर्मत्वारोपे निरवधिस्थितत्वारोपोऽपि निमित्तम् इतीदं द्वयमनेकारोपनिमित्तत्वान्माला-परम्परितमेव युक्तमिति चेन्न ; ज्योत्स्नाभस्मच्छुरणधवलेत्यादेरपि तथात्वापत्तेः । नानापरम्परा-सत्त्व एव मालापरम्परितत्वस्य युक्तत्वाच्च इति । अस्मद्व्याख्याकृत्सम्मतिस्त्वेतद्विरोधि-नीति टीकायामेव स्पष्टम् । एतन्मते 'ज्योत्स्नाभस्मे'त्यादौ मालात्वमिष्टमेवेत्युक्तं प्राक् ।

(B) मालारूपमपीतीति । न च नेदं मालारूपम्, राजनि मुक्तात्वारोप-रूपस्य प्रकृत-रूपकस्य एकत्वेन तथात्वासम्भवादिति वाच्यम्, प्रकृतरूपकस्य बहुत्व एव मालाव्यवहार इत्यत्र विनिगमकाभावात्, प्रत्युत निमित्तीभूतरूपकाणामेव बहुत्वे मालात्वमित्येवात्र स्वारसिकम् । तथा हि—प्रकृतरूपकाणां बहुत्वे भवन्ती माला तु पूर्वोक्ताया निरङ्गमालाया अविशिष्टेति तयैवास्या गतार्थतया पुनरुपादानं व्यर्थं स्यादिति निमित्तीभूतरूपकाणामेव बहुत्वेऽत्र माला स्वीकार्या । एवञ्च विद्वन्मानसेत्याद्युदाहरणद्वये परम्परितत्वसत्त्वेऽपि प्रकृतरूपकाणामेव बहुत्वं न निमित्ती-भूतरूपकाणामित्यतो न तत्र मालापरम्परितम् । अलौकिकेत्यादौ तु प्रकृतरूपकाणामेकत्वेऽपि कारणीभूतरूपकाणामनेकत्वादत्रैव युज्यते मालापरम्परितस्योदाहरणतेति । निरङ्गरूपकादेतावा-

---

1. 'अमालारूपकमि'ति पाठो बहुषु दृश्यते ।

( १४६ ) प्रकृतं यन्निषिध्यान्यत् साध्यते सा त्वपह्नुतिः ।

(A) उपमेयमसत्यं कृत्वा उपमानं सत्यतया यत् स्थाप्यते सा त्वपह्नुतिः । उदाहरणम्—

अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये

कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि ।

---

अपह्नुत्यलङ्कारमाह—प्रकृतमिति । स्थाप्यत इत्यत्र तत्स्थाने इति शेषः । एवञ्च निषेधपूर्वकत्वमेव रूपकाद्भेदः । अवाप्त इति । पूर्णचन्द्रे कलङ्कं दृष्ट्वा पार्वतीं प्रति महेशस्योक्तिरियम् । हे शैलतनये ! परिणतरुचः शशाङ्कस्य वपुषि प्रागल्भ्यम् अवाप्तः अयं दृश्यमानो नैव कलङ्को विलसति । तत् कोऽयमित्यत्राह—अमुष्येति । नेवास्या भेदो यत्तत्र रूपकं स्वयं सिद्धमत्र तु कारणाधीनसिद्धिकमिति । तस्याश्च मालात्वं कारणानामेव बहुत्वे स्वारसिकमिति न काचिदनुपपत्तिः ।

न च नात्र कारणीभूतरूपकाणामप्यनेकत्वमिति वाच्यम्, यथा ह्यत्र सत्कुले सद्वेणुत्वारोपः कारणं तथा अलौकिकमहादृष्टिपाते अलौकिकमहाज्योतिरारोपोऽपि कारणमिति न मालात्वक्षतिः । अत एव च सविसर्गपाठकल्पे लिङ्गभेदान्मुक्तारत्नं तदन्वयानुपपत्त्या मालापरम्परितभङ्गभीरुणा टीकाकृता प्रथमार्द्धं सम्बोधनान्तत्वेन व्याख्यातम् । कारणता च साक्षात्परम्पराभ्यामित्युक्तम् । अमालारूपकमिति पाठे कारणपरम्पराया एवं वैचित्र्यमविगणय्य प्रकृतरूपकाणामेव बहुत्वे मालात्वमिति स्वीकारेण विद्वन्मानसेत्याद्युदाहरणद्वये मालात्वमिह तूदाहरणद्वयेऽतथात्वमिति विवक्षणाद् वृत्तिग्रन्थो योजनीयः ।

(A) उपमेयमिति । इदमुपलक्षणम्, किञ्चिदपह्नुत्य कस्यचित् प्रदर्शनमपह्नुतिरित्येव लक्षणम् । अत एव 'केसेसु बलामोडिय' इत्यादौ 'स्वयं न प्रपलाय्य गतास्तद्वैरिणोऽपि तु ततः पराभवं सम्भाव्य तान् कन्दरा न त्यजन्तीत्यपह्नुतिर्व्यज्यत' इति प्रकाशकारैश्चतुर्थे (१६९ पृ०) उक्तम् [ यदि केवलमुपमानोपमेयभावस्थल एवापह्नुतिरिति स्वीक्रियेत तदा अत्रोपमानोपमेयभावाभावात् प्रकाशकारोक्तिरसङ्गतैव स्यादिति उद्द्योताभिप्रायः ] । एवञ्च—

'नायं सुधांशुः किन्तर्हि सुधांशुः प्रेयसीमुखम्'

इत्यादावपह्नुतिरेव । अत एव दण्डिनोक्तम्—

अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थसूचनम् ।

न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणां यतः ॥

इत्यादौ च नापह्नुतिः, किन्तु दृढारोपरूपकमित्यपास्तम् । 'नेदं मुखं चन्द्रः' इति प्रसिद्धापह्नुत्युदाहरणेऽपि मुखत्वनिषेधे चन्द्रारोपदार्ढ्यसम्पादकतया वक्तुं शक्यत्वेनानुभवसिद्धत्वेन चापह्नुति-

अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे
रतिश्रान्ता शेते रजनिरमणी गाढमुरसि ॥ ४२३ ॥

इत्थं वा—

बत सखि कियदेतत् पश्य वैरं स्मरस्य
प्रियविरहकृशेऽस्मिन् रागिलोके तथा हि ।
उपवनसहकारोद्भासिभृङ्गच्छलेन
प्रतिविशिखमनेनोट्टङ्कितं कालकूटम् ॥ ४२४ ॥

अत्र हि न सभृङ्गाणि सहकाराणि, अपि तु सकालकूटाः शरा इति प्रतीतिः। एवं वा—

(A)अमुष्मिँल्लावण्यामृतसरसि नूनं मृगदृशः
स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः ।

---

मन्ये जानामि रतिश्रान्ता रजनिरूपा रमणीयममुष्योरसि गाढं शेते। तत्र हेतुमाह—विगलदिति। निषेधस्यान्यथाप्रत्यायने प्राह—इत्थं वेति। बत सखीति। बत खेदे, हे सखि! पश्य प्रियविरहकृशे रागिलोके स्मरस्य कियदेतद् वैरं विलक्षणं वैरमित्यर्थः। यत उपवनीयसहकारपुष्पेषु उद्भासिनां दीप्यमानानां भृङ्गाणां छलेन तत्पुष्परूपं विशिखं विशिखं प्रति अनेन स्मरेण कालकूटमुट्टङ्कितं दत्तम्। अत्र छलपदाद् भृङ्गनिषेधप्रतीतिरित्यत्राह—अत्रेति।

अन्यथाऽपि निषेधप्रतीतावाह—एवं वेति। अमुष्मिन्निति। मृगदृशोऽमुष्मिन् पृथुजघनभागे लावण्यामृतस्य सरसि शर्वेण महेशेन प्लुष्टो दग्धः स्मरो

---

मात्रस्योच्छेदापत्तेः। यदि तु निषेधपूर्वकारोपे चमत्कारविशेषस्यानुभवसिद्धत्वादलङ्कारान्तरत्वम्, तर्हि प्रकृतेऽपि तुल्यम्। ननु निषिध्येत्यस्य निषेधार्थकत्वे—'शिखा धूमस्येयं परिणमति रोमावलिवपुः' इत्यादावपह्नुतिर्न स्यादत आह [ प्रदीपे ] असत्यतयेति। साध्यते आहार्यनिश्चयविषयीक्रियते। तेन 'न पद्मं मुखमेवेदम्' इत्यादौ नातिव्याप्तिः। [ नात्र मुखमारोपितमपि तु प्रकृतमित्यलक्ष्यत्वादस्येति भावः] तथा विरहिजनवाक्ये 'नायं चन्द्रोऽपि तु मार्त्तण्डः' इत्यादौ नैषा, तज्ज्ञानस्य दोषविशेषजन्यत्वेनानाहार्यत्वात्। 'नायं चन्द्रोऽरविन्दं वा मुखं वेदं मृगीदृशः' इत्यत्र च नैषा, निश्चयविषयत्वाभावादित्युद्द्योते द्रष्टव्यम्।

(A) वेश्यामुद्दिश्य समृद्धं कामिनं प्रति दास्या उक्तिरियमित्युद्द्योतकाराः।

यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे
शिखा धूमस्येयं परिणमति रोमावलिवपुः ॥ ४२५ ॥

अत्र न रोमावलिः धूमशिखेयमिति प्रतिपत्तिः। एवमियं भङ्ग्यन्तरैरप्यूह्या।

(१४७) (A)श्लेषः स वाक्य एकस्मिन् यत्रानेकार्थता भवेत् ॥९६॥

एकार्थप्रतिपादकानामेव शब्दानां यत्रानेकोऽर्थः स श्लेषः।

उदाहरणम्—

उदयमयते दिङ्मालिन्यं निराकुरुतेतरां
नयति निधनं निद्रामुद्रां प्रवर्त्तयति क्रियाः।
रचयतितरां स्वैराचारप्रवर्त्तनकर्त्तनं
बत बत लसत्तेजःपुञ्जो विभाति विभाकरः ॥ ४२६ ॥

---

ज्वलदवस्थ एव निपतितः। यस्य स्मरस्य अङ्गाङ्गाराणां प्रशमस्य निर्वाणस्य पिशुना सूचिका इयं धूमस्य शिखा नाभिकुहरे रोमावलिवपुः रोमावलिरूपा परिणमति, जलेन ज्वलदङ्गारनिर्वाणे धूमोद्गमाद् ज्वलने निर्वाणेऽपि नाभिच्छिद्रेण तद्गमोत्थानात्। एवमिति।

यदस्य यात्रासु बलोद्धतं रजः स्फुरत्प्रतापानलधूममञ्जिम।
तदेव गत्वा पतितं सुधाम्बुधौ दधाति पङ्कीभवदङ्कतां विधौ ॥ (नैषधीये)

इत्यत्र तदेवेत्येवकारादङ्कनिषेधप्रतीतिः।

अर्थश्लेषालङ्कारमाह—श्लेष इति। एकस्मिन्नर्थे वाच्ये सति लक्षणावशाद् यत्रानेकार्थतेत्यर्थः। वाच्यार्थ एकस्मिन् विशेष्ये लक्ष्यार्थोऽन्यस्मिन् विशेष्येऽन्वेतीत्यर्थः। यद्यपि 'स्तोकेनोन्नतिमायाति' इत्येवास्योदाहरणं तथापि सौलभ्यादन्यदप्याह—उदयमिति। विभाकरनामा राजा सूर्यश्च विभाति। उभयविशेषणमाह—लसत्तेजःपुञ्जः। तेजः शौर्यं ज्योतिश्च, उदयमुन्नतिमुदयगिरिञ्च, दिग्भ्यानां दिशाञ्च

---

(A) श्लेष इति। परिवृत्तिसहानामेव शब्दानामेकवृन्तगतफलद्वयन्यायेन यत्रानेकार्थप्रतिपादकता सोऽर्थश्लेष इति प्रदीपः। तत्र परिवृत्तिसहानामिति शब्दश्लेषाद् भेदं दर्शयतीत्युद्द्योतः। श्लिष्यतोऽर्थावस्मिन्निति श्लेषपदव्युत्पत्तिरिति बालबोधिनी।

(A)अत्राभिधाया अनियन्त्रणाद् द्वावप्यर्कभूपौ वाच्यौ ।

**( १४८ ) परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः—**

मालिन्यं (B)दीनतां तमोमालिन्यश्च। निद्रेति, मुद्रा परिपाटी। निष्पन्दतारूपां
परिपाटीं निद्रया चक्षुर्मुद्रणञ्च। क्रियाः स्वजातिव्यवहारान् आलोकसाध्यसकल-
क्रियाश्च, स्वैराचारः सकलशास्त्रलङ्घनेनाचारः चौराभिसारिकाचारश्च। अत्र विशेष्य-
द्वये वाच्यलक्ष्या अर्थाः स्वयमध्यवसेयाः।

ननु प्रकरणाद् रविरूपार्थान्वयिष्वर्थेष्ववगतेष्वर्थान्तरे व्यञ्जनैव, तथा च उपमा-
ध्वनि(C)रर्थान्तरबाधाभावो वेत्यत आह—अत्रेति।

समासोक्त्यलङ्कारमाह—**परोक्तिरिति**। परोक्तिरप्रकृतव्यञ्जनम् ; 'भेदकै'-
र्विशेषणैः (D)'श्लिष्टै'र्वाच्यव्यङ्ग्योभयान्वितैर्न त्वनेकार्थैः। एवञ्च (E)उपमाध्वनावति-

(A) अत्रेत्यादि। विभाकर इत्यत्र निरूढलक्षणया राजरूपार्थोपस्थितिस्तस्याश्च अभिधा-
तुल्यत्वाद् द्वावप्यर्कभूपौ वाच्याविति नासङ्गतिः। एतच्च टीकाकृन्मतमनुरुध्योक्तम्। परम्,
लक्षणायाः सर्वत्र सुलभत्वेन वैचित्र्यविशेषानाधायकत्वात् मुख्यार्थबाधस्य दुरुपपादनीयत्वेन
तत्प्रवृत्तेरपि संशयित्वाच्च लक्षणापक्षश्चिन्तनीय एव। प्रकाशकाराणां पुनरभिधयैवार्थद्वयप्रतीति-
रित्याशयोऽनुमीयते। अत्राहुः प्रदीपकाराः—न चायं द्वितीयार्थस्य ध्वनिरेवेति शङ्कनीयम्,
संयोगादीनामभावेनाभिधाया अनियन्त्रणाद् द्वयोरपि वाच्यत्वादिति। 'वाच्यत्वा'दिति प्रकृतत्वे-
नेत्यादिः, उभयोः प्रकृतत्वेऽप्रकृतत्वे वा ध्वनित्वाभावादिति भावः। एतेनार्थश्लेषे विशेषणानामेव
श्लिष्टत्वं न तु विशेष्याणामपीत्यपास्तम् इत्युद्द्योतकाराः।

(B) दीनतामिति हरितामिति पदस्य दिश्यानामित्यर्थपरतापक्षे ; तत्परत्वञ्च लक्षणया।

(C) अर्थान्तरेति। न च सूर्यरूपार्थ एवात्र विवक्षितो न तु भूपरूपार्थोऽपीति कुतोऽत्र
ध्वनिरिति वाच्यम्, एवं सति श्लेषोऽपि न स्यादिति मूलोच्छेदी पाण्डित्यप्रकर्षो भवेदिति भावः।

(D) श्लिष्टैरित्युपलक्षणम् औपम्यगर्भादीनामपि सम्भवात्। यथा—

'दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी। केशपाशालिवृन्देन सुवेशा हरिणेक्षणा॥'

इत्यत्र। अत्र हि प्रथमं दन्तप्रभाः पुष्पाणीत्युपमागर्भत्वेन समासः। ततश्च दन्तप्रभा-
सदृशैः पुष्पैश्चितेत्यादिसमासान्तरश्रवणेन समानविशेषणमाहात्म्याद्धरिणेक्षणायां लताव्यवहार-
प्रतीतिः। अत्र नव्याः—परोक्तिरिति परशब्देन प्रकृतमप्रकृतं वा विवक्षितम्। तेन यत्रा-
प्राकरणिकविशेषणसामर्थ्यात् प्राकरणिकमुच्यते तदपि संगृह्यते तत्रापि वैचित्र्याविशेषादन्यत्रानन्त-
र्भावाच्चेत्याहुः, तन्न युक्तम् ; अप्रस्तुतप्रशंसयैव तत्संग्रहात्, 'येनास्यभ्युदितेन' इतिवत्। वृत्तौ
चाप्रस्तुतप्रशंसाप्रकरणे तत्र समासोक्तिपदं श्लिष्टविशेषणमात्रपरमिति प्रदीपः। अयञ्च गुणीभूतव्यङ्ग्य इति स्वयमेव टीका-

(E) उपमाध्वनाविति, श्लेषस्याप्युपलक्षकम्।

प्रकृतार्थप्रतिपादकवाक्येन श्लिष्टविशेषणमाहात्म्यात्, न तु विशेष्यस्य सामर्थ्यादपि, यत् अप्रकृतस्यार्थस्याभिधानं सा समासेन संक्षेपेणार्थद्वयकथनात् समासोक्तिः। उदाहरणम्—

लहिऊण तुज्झ बाहुप्फंसं जीए स कोवि उल्लासो।
जअलच्छी तुह विरहे ण हूज्ज्वला दुब्बला णं सा ॥ ४२७ ॥

अत्र जयलक्ष्मीशब्दस्य (A)केवलं कान्तावाचकत्वं नास्ति।

( १४६ ) ————————निदर्शना(B)।

अभवन् वस्तुसम्बन्ध उपमापरिकल्पकः ॥ ९७ ॥

निदर्शनं दृष्टान्तकरणम्। उदाहरणम्—

---

व्याप्तिप्रसक्तावाह—**न तु विशेष्यस्येति**। उल्लासयेत्यादौ ( १५५ पृ०, ) विशेष्यं देवपदमपि श्लिष्टम्। अभिधानमत्र व्यञ्जनम्। संज्ञाव्युत्पत्तिमाह—**समासेनेति**। **लहिऊणेति**।

लब्ध्वा तव बाहुस्पर्शं यस्याः स कोऽप्युल्लासः।
जयलक्ष्मीस्तव विरहे न खलज्ज्वला दुर्बला ननु सा॥ इति संस्कृतम्।

दैवाद्दुर्बलजितं नृपं प्रति कस्यचिदुक्तिरियम्। अत्र निकृष्टहस्तगामिन्या उत्तमनायकविरहिण्या नायिकायाः प्रतीतिर्बाहुस्पर्शाद्युभयान्वितविशेषणसामर्थ्यात्। अत्रोपमाध्वनित्वं निरस्यति—**अत्रेति**।

निदर्शनालङ्कारमाह—**अभवन्निति**। बाधितोऽन्वय इत्यर्थः। **निदर्शन-**

---

कृता 'आगत्य सम्प्रति' इत्याद्युदाहरणे अपराङ्गव्यङ्ग्यप्रस्तावे—'समासोक्तिरूपस्याप्यस्य वस्तुत्वानपायाद् ( वस्तुरूप ) इत्युक्तम्, अवस्तुरूप इत्येवमकारप्रश्लेषो वा' ( २२७ पृ० ) इत्यनेन प्रतिपादितम्। उद्द्योतकृतापि—'समासोक्तिर्गुणीभूतव्यङ्ग्येति व्यवहारस्तु प्रकृतव्यवहारे अप्रकृतव्यवहाराभेदस्य व्यञ्जनया प्रतीतेर्निर्बाध एवे'त्युक्तम्।

(A) केवलमिति। अत्र 'केवल'शब्द 'एव'शब्दसमपर्यायोऽवधारणवाची—जयलक्ष्मीशब्दस्यैव न तु विशेषणानामपीत्यर्थः। विशेषणानान्तूभयबोधकत्वमस्त्येव।

(B) निदर्शनेति। अभवन् प्रतीतिविषयतामलभमानो वस्तुनोर्वाक्यार्थयोः पदार्थयोर्वा सम्बन्धोऽन्वयः। अत एव प्रतीतिपर्यवसानाभावादस्य दृष्टान्ततो भेदः। परस्परनिरपेक्षयोर्वाक्यार्थयोर्दृष्टान्तालङ्कारः, इयं पुनः सापेक्षयोरिति भेद इत्यन्ये इत्युद्द्योतः।

क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥ ४२८ ॥

अत्रोडुपेन सागरतरणमिव मन्मत्या सूर्यवंशवर्णनमित्युपमायां पर्यवस्यति । यथा वा—

उदयति विततोर्द्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम् ॥४२९॥

अत्र कथमन्यस्य लीलामन्यो वहतीति तत्सदृशीमित्युपमायां पर्यवसानम् ।

दोर्भ्यां तितीर्षति तरङ्गवतीभुजङ्ग-
मादातुमिच्छति करे हरिणाङ्कबिम्बम् ।
मेरुं लिलङ्घयिषति ध्रुवमेष देव
यस्ते गुणान् गदितुमुद्यममा[1]तनोति ॥ ४३० ॥

इत्यादौ मालारूपाऽप्येषा द्रष्टव्या ।

मिति, तथा चास्त्यर्थेऽच्प्रत्ययान्तमेव निदर्शनापदमिति बोध्यम् । **क्व सूर्येति** । अत्र पूर्वार्द्धे वक्ष्यमाणो विषमालङ्कारः, परार्द्धन्तु प्रकृतोदाहरणम् । अत्र कालिदासे वक्तरि उडुपेन सागरतितीर्षुताबाधात् कल्पनीयामुपमामाह—**अत्रेति** । न च वक्तरि कालिदासे उडुपेन सागरतितीर्षुजनरूपकमेवेदं तत्र च बाधोऽनुगुण एवेति कथमत्र यथोक्तरूपतेति वाच्यम्, तितीर्षुरूपकसत्त्वेऽपि तरणरघुवंशवर्णनयोरुपमाकल्पनस्याऽऽनुभाविकत्वात् ।

रूपकसङ्कीर्णमप्युदाहरति—**यथा वा, उदयती**ति । प्रातःकाले रैवतकगिरि-वर्णनमिदम् । अहिमरुचौ सूर्ये उदयति हिमधाम्नि चन्द्रे च अस्तं याति सतीत्यर्थः । विततेत्युभयोर्विशेषणम् । गिरी रैवतकः, परिवारितो वेष्टितः । **अत्रेति**, लाला-व्यक्तिभेदात् । मालानिदर्शनामपि रूपकासङ्कीर्णामाह—**दोर्भ्यामि**ति । तरङ्गवत्या नद्या भुजङ्गं कामुकं समुद्रम्, हे देव यस्ते गुणान् गदितुमुद्यममातनोति स एवं कुरुत इत्यर्थः । तत्करणञ्च बाधितमतो दोर्भ्यां समुद्रतितीर्षेव तव गुणगदनोद्यम इत्युपमा-कल्पनम्, 'तिङन्ते च न रूपकम्' इति तदसङ्करः ।

1. '-दधाती'ति पाठः क्वचित् ।

( १५० ) स्वस्वहेत्वन्वयस्योक्तिः क्रिययैव च साऽपरा ।

क्रिययैव स्वस्वरूप-स्वकारणयोः सम्बन्धो यदवगम्यते साऽपरा निदर्शना । यथा—

(A)उन्नतं पदमवाप्य यो लघुर्हेलयैव स पतेदिति ब्रुवन् ।
शैलशेखरगतो दृशत्कणश्चारु मारुतधुतः पतत्यधः ॥ ४३१ ॥

अत्र पातक्रियया पतनस्य, लाघवे सति उन्नतपदप्राप्तिरूपस्य च सम्बन्धः ख्याप्यते ।

( १५१ ) अप्रस्तुतप्रशंसा या सा सैव (B)प्रस्तुताश्रया ॥ ९८ ॥

अप्राकरणिकस्याभिधानेन प्राकरणिकस्याक्षेपोऽप्रस्तुतप्रशंसा ।

---

(C)अपरविधां निदर्शनामाह—स्वस्वेति । स्वं कार्यं स्वहेतुस्तत्कारणं तयोः कार्यकारणभावरूपस्यान्वयस्योक्तिः प्रत्यायनं कार्यरूपक्रिययैवेत्यर्थः । उन्नतमिति । यो जनो लघुः स उन्नतं पदमवाप्य हेलयैवाप्रयत्नेनैव पतेदित्यर्थं ब्रुवन् प्रतिपादयन् शैलशेखरगतो दृशत्कणो मारुतधुतः सन् चारु पततीत्यन्वयः । अत्रेति । पतनस्य कार्यस्य लाघवे सति उन्नतपदप्राप्तिरूपस्य तत्कारणस्य च कार्यकारणभावरूपः सम्बन्धः पातक्रियया ख्याप्यत इत्यर्थः ।

अप्रस्तुतप्रशंसालङ्कारमाह—अप्रस्तुतेति । 'प्रशंसा' कथनम् । 'सैव' तन्नाम्निकैव । 'प्रस्तुताश्रया' प्रस्तुतव्यञ्जिका । 'आक्षेपः' प्रत्यायनम् ।

---

(A) उन्नतमिति । यो लघुरल्पबुद्धिरणुपरिमाणश्च स उन्नतं पदमुत्कृष्टां सम्पदम् ऊर्द्ध्वस्थानञ्च प्राप्य हेलयैव तादृशकारणाभावेऽपि लघुस्वभावेनैव पतेत् सम्पत्तिध्वंसमधःसंयोगञ्च गच्छेद् इति ध्रुवम् [ ध्रुवमित्येतत्सम्मतः पाठः ] निश्चितम् । तथा हि—दृशत्कणः पाषाणरेणववयवः शैलशेखरगतः सन् चारुमारुतधुतो मृदुवायुचालितः पततीत्यर्थं इति सुधासागरकाराः ।

(B) प्रस्तुताश्रयेति । एतच्च समासोक्तावतिप्रसक्तिवारणाय । तत्र हि प्रकृते अप्रकृतव्यञ्जनम्, इह त्वप्रकृते प्रकृतव्यञ्जनमिति भेदः ।

(C) अपरविधामिति । पूर्वमसम्भवद्वस्तुसम्बन्धनिबन्धना इयं तु सम्भवद्वस्तुसम्बन्धनिबन्धनेति भेद इति केचित् । क्रिययैव न तु पूर्ववदुपमापरिकल्पनेनेति चक्रवर्त्यादयः ।

(१५२) कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति।
तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा ॥ ९९ ॥

तदन्यस्य कारणादेः। क्रमेणोदाहरणम्—

याताः किं न मिलन्ति सुन्दरि पुनश्चिन्ता त्वया मत्कृते
नो कार्या नितरां कृशाऽसि कथयत्येवं सबाष्पे मयि।
लज्जामन्थरतारकेण निपतत्पीताश्रुणा चक्षुषा
दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः ॥ ४३२ ॥

अत्र प्रस्थानात् किमिति निवृत्तोऽसीति कार्ये पृष्टे कारणमभिहितम्।

राजन् राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे भोजय मां कुमारसचिवैर्नाद्यापि किं भुज्यते।

अस्याः पञ्चविधत्वमाह—**कार्य** इति। **कारणादेरिति**। कार्ये प्रस्तुते कारणस्य,
कारणे प्रस्तुते कार्यस्य, सामान्ये प्रस्तुते विशेषस्य, विशेषे प्रस्तुते सामान्यस्याभिधान-
मित्यर्थः। तथा तुल्ये प्रस्तुते तुल्यान्तरस्याभिधानम्। अपि प्रस्थानान्निवृत्तोऽसीति
तत्र कार्ये प्रस्तुते कारणाभिधानमाह—**याता** इति। एवं सबाष्पे मयि कथयति सति निपतदेव पीतम्
पृच्छन्तं प्रति तत्सखस्योक्तिरियम्। एवं सबाष्पे मयि कथयति सति निपतदेव पीतम्  मरणहेतुं
अश्रु येन तादृशेन चक्षुषा मां दृष्ट्वा हसितेन भाविमरणे उत्साहस्तया सूचितः, किं कथयति सतीत्यत्राह—
शृण्वत्याश्चिन्ताकारणे आश्वासे हासस्य मृत्युसूचकत्वात्। चिन्ताकरणादेवातिकृशाऽसीत्यर्थः।
याता इति। पुनः किं न मिलन्तीत्यन्वयः। तत्कार्यस्य तत्कारणस्य वा प्रश्न
अत्रेति, किमिति, (A)निवृत्तिप्रश्न एव, न तु
इत्यवधेयम्। **तत्कारण**मिति मरणोत्साहसूचनमित्यर्थः। शत्रुपराजयोद्यतं राजानं प्रति
कारणे प्रस्तुते कार्यकथनमाह—**राजन्निति**। तवारिभवनेऽध्वगैः
शत्रुपलायनं प्रतिपादयतो मन्त्रिणस्तत्पलायनकार्यकथनमिदम्। शून्यपुर-
पञ्जरान्मुक्तो राजशुकः शून्यवलभौ चित्रस्थानवलोक्य एकैकमेवमाभाषते।

(A) नन्वत्र वृत्तौ 'प्रस्थानात् किमिति निवृत्तोऽसी'त्युक्तत्वात् कारणमेव पृष्टमित्यायाति, तदेवा-
किंशब्दस्य कथमादिशब्दवत् कारणवाचित्वात्, ततश्च कारणस्य प्रस्तुतत्वादुत्तरदात्राऽपि इत्यत
भिहितमिति कथमप्रस्तुतस्याभिधानं कथं वा 'कार्ये पृष्टे' इति वृत्तिकृद्वचनं सङ्गच्छत
आह—निवृत्तिप्रश्न एवेत्यादि। तथा च किं-शब्दोऽत्र प्रश्नार्थक इति भावः।

इत्थं नाथ शुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरा-
च्चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते ॥ ४३३ ॥

अत्र प्रस्थानोद्यतं भवन्तं ज्ञात्वा सहसैव त्वदरयः पलाय्य गता इति कारणे प्रस्तुते कार्यमुक्तम् ।

एतत् तस्य मुखात् कियत् कमलिनीपत्रे कणं वारिणो
यन्मुक्तामणिरित्यमंस्त स जडः श्रृण्वन्यदस्मादपि ।
अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनैः
कुत्रोड्डीय गतो ममेत्यनुदिनं निद्राति नान्तः शुचा ॥ ४३४ ॥

अत्रास्थाने जडानां ममत्वसंभावना भवतीति सामान्ये प्रस्तुते विशेषः कथितः ।

---

मध्येनैव वर्त्मप्रवृत्त्याऽध्वगैः शुकमोचनम् । चित्रस्थं कं कम् अवलोक्य किं किम् आभाषते इत्यत्राह—राजन्निति । कुब्जा तद्भोजननियुक्ता काचित् । कुमारेति तत्काले (A)तस्यापि भोजनात् । अत्रेति, कार्यं पलायनस्य शुकाभाषणरूपम् ।

सामान्ये प्रस्तुते विशेषकथनमाह—एतत्तस्येति । जडविशेषस्य कृत्यं कस्यचिन्मुखाच्छ्रुत्वा कथयन्तं प्रति तदधिकमपि तत्कृत्यं जानतः कस्यचिदुक्तिरियम् । स जडः कमलिनीपत्रे वारिणः कणं यन्मुक्तामणिरित्यमंस्त, कथयतस्तस्य मुखात् एतत् (B)किं श्रुतमिति शेषः । अस्मादन्यदपि श्रृणु । स जडस्तस्मिन् वारिणः कणे धारणार्थं प्रयुक्तया अङ्गुल्यग्रस्य लघुक्रिययाऽल्पक्रियया प्रविलयिनि सति स मुक्तामणिर्मम स्थानादुड्डीय कुत्र गत इति अन्तः शुचा निशि निद्रां नाप्नोतीत्यर्थः ।

अत्रेति, जडसामान्यस्यैव स्थाने ममत्वसम्भावना भवतीति सामान्ये प्रस्तुते इत्यर्थः । 'विशेषः' ईदृशो जडविशेषः ।

---

(A) तस्यापीति । तेषामपीति युक्तः पाठः । यथाश्रुते तु कुमार इति सम्बोधनपदं सचिवैरिति सहार्थे तृतीया, ततश्च हे कुमार त्वया सचिवैः सह किं न भुज्यते इत्यर्थ इति विभावनीयम् । कुमाराश्च तत्सचिवाश्च तैः । एवं भोजनकाले शुकस्यापि भोजनलाभादित्युद्द्योतः ।

(B) किं श्रुतमित्यत्यल्पं श्रुतमित्यर्थः । 'श्रृणु अन्यदि'त्यत्र 'श्रृण्वन् यदि'ति पदपाठ उद्द्योताभिमतः । मुखात् प्रतारकस्य कस्यचित् मुखादपगतं श्रृण्वन् स जडो यन्मुक्तामणिरित्यमंस्त एतत्तस्य कियत् । यतोऽप्यस्मादप्यधिकं किञ्चिज्जडत्वबोधकमस्तीति तदर्थः ।

सुहृद्वधूबाष्पजलप्रमार्जनं
करोति वैरप्रतियातनेन यः ।
स एव पूज्यः स पुमान् स नीतिमान्
सुजीवितं तस्य स भाजनं श्रियः ॥ ४३८ ॥

अत्र कृष्णं निहत्य नरकासुरवधूनां यदि दुःखं प्रशमयसि तत् त्वमेव श्लाघ्य इति विशेषे प्रकृते सामान्यमभिहितम् ।

तुल्ये प्रस्तुते तुल्याभिधाने त्रयः प्रकाराः—श्लेषः समासोक्तिः सादृश्यमात्रं वा, तुल्यात्तुल्यस्य हि आक्षेपे हेतुः ।

---

विशेषे प्रस्तुते सामान्याभिधानमाह—**सुहृद्वधि**वति। (A)श्रीकृष्णं निहन्तुं कालयवनमुत्तेजयतस्तन्मन्त्रिण उक्तिरियम् । श्लोकार्थः स्पष्ट एव । प्रतियातनं निर्यातनम् । अत्र श्रीकृष्णनिष्ठस्य वैरस्य प्रतियातनेन धन्यतया प्रस्तुते कालयवनरूपे विशेषे तादृशधन्यसामान्य उक्त इत्याह—**अत्रे**ति ।

**श्लेष** इति(B) । अप्रकृतवाचिशब्दश्लेष इत्यर्थः । **समासोक्ति**रिति (C) समासोक्तिच्छायेत्यर्थः, प्रकृतकथनेनाप्रकृतप्रत्यायनस्यैव समासोक्तित्वादत्र त्वप्रकृतकथनेनैव

---

(A) श्रीकृष्णेन नरकासुरे हते तत्सुहृदं शाल्वं प्रति तन्मन्त्रिण उक्तिरियम् इति चन्द्रिका ।

(B) अप्रकृतवाचीति । एतच्चिन्तनीयम् । अप्रस्तुतप्रशंसायां हि एकं प्रस्तुतम् अन्यदप्रस्तुतम् । अतोऽत्राप्रकृतवाचीत्युपलक्षणं प्रकृताप्रकृतवाचीत्यर्थः । एवञ्च शब्दश्लेष इत्यस्यापि श्लिष्टशब्द इत्यर्थः करणीयः, यतः श्लेषे उभयं प्रकृतमुभयमेव वाऽप्रकृतं भवति, इह त्वेकमेव प्रस्तुतमप्रस्तुतं वेति । अत्रोक्तं प्रदीपे—तुल्ये प्रस्तुते तुल्याभिधाने त्रयः प्रकाराः—विशेषणविशेष्यवाचिनां सर्वेषामपि श्लिष्टत्वस्य विशेषणमात्रवाचिनो वा श्लिष्टत्वस्य श्लेषाभावेऽपि सादृश्यमात्रस्यैव वा प्रकृताक्षेपहेतुत्वादिति । अत एवोद्द्योतकारा अपि 'प्रकाशे श्लेषसमासोक्तिपदे श्लिष्टशब्दश्लिष्टविशेषणपरे, अप्रकृतात् प्रकृताक्षेपे तयोर्भावात्; द्वयोः प्रकृतत्वेऽप्रकृतत्वे वा श्लेषस्य प्रकृतेऽप्रकृतव्यवहारारोपे च समासोक्तेः स्वीकारादित्याहुः ।

(C) समासोक्तिच्छायेति । यद्यपि नवीनाः केचन समासोक्तिघटकः परशब्दः प्रकृताप्रकृतसाधारण इत्युक्त्वा अप्रकृतकथनेन प्रकृतप्रत्यायनेऽपि समासोक्तिं सङ्गिरन्ते वैचित्र्यस्य तत्राप्यक्षीणसत्ताकत्वादलङ्कारान्तरासम्भवाच्च, तथापि न तत् प्रदीपकारादीनामनुमतमिति कृत्वाऽनुपादेयमेवेति टीकाकृतामाशयः । तथा चोक्तं समासोक्तिप्रकरणे प्रदीपकारैः—

क्रमेणोदाहरणम्—

पुंस्त्वादपि प्रविचलेद् यदि यद्यधोऽपि
यायाद् यदि प्रणयने नमहानपि स्यात्।
अभ्युद्धरेत्तदपि विश्वमितीदृशीयं
केनापि दिक् प्रकटिता पुरुषोत्तमेन ॥ ४३६ ॥

---

प्रकृतप्रत्यायनात्, छाया च प्रकृताप्रकृतान्वितविशेषणवत्तया। सादृश्यमात्रमिति, मात्रपदाद् (A)उभयान्वितविशेषणवत्त्वव्यवच्छेदः।

श्लेषे उदाहरति—पुंस्त्वादपीति। सपत्नापहृतं राज्यमुद्धर्त्तुं कश्चित् नृपं युद्धे जयतो मन्त्रिण उक्तिरियम्। पुंस्त्वात् पुरुषभावाद् यदि प्रविचलेत् स्त्री यदि भवेत्, तथाधोऽपि पातालमपि यदि यायात्, तथा प्रणयने याचननिमित्तं यदि महान् न स्यात् खर्वः स्यात् तदपि विश्वं संसारमुद्धरेदितीदृशीयं दिक् प्रकारः केनाप्यनिर्वचनीयेन पुरुषाणामुत्तमेन नारायणेन प्रकटिता दर्शिता; अमृताहरणेऽसुरेभ्यो विश्वमुद्धर्त्तुं नारायणेन मोहिनीरूपस्त्रीत्वप्राप्तेः, जलप्लुतं विश्वमुद्धर्त्तुं नारायणेन वराहमूर्त्या पाताले गमनात्, बलिदैत्याहृतं विश्वमुद्धर्त्तुं नारायणेन पदत्रययाचननिमित्तं खर्वत्वप्राप्तेश्च। अत्राप्राकृतनारायणकथनेन श्लिष्टतद्विशेषणैः प्रकृतराजप्रत्यायनम्। तथा हि—पुंस्त्वाद् यदि प्रविचलेत् यद्यधो नीचत्वं यायात्, यदि याचने च महिमरहितः स्यात्तदपि विश्वं सपत्नहृतं स्वीयराज्यम् अभ्युद्धरेत् इत्ययं प्रकारः केनापि पुरुषश्रेष्ठेन दर्शित इत्यर्थः। तथा च तादृशभावेनापि त्वया स्वराज्यमुद्ध्रियतामिति भावः। न चात्र समासोक्तिच्छायाऽपीति वाच्यम्, विशेष्यवाचकपुरुषोत्तमपदस्याप्यत्र श्लिष्टत्वेन तच्छायाभावात्; नाप्युपमाध्वनित्वम्, प्रकृतस्योपमेयस्यैवात्र व्यङ्ग्यत्वात्, अप्रकृतोपमानव्यञ्जन एव तत्त्वात्।

---

अत्र नवीनाः—परोक्तिरिति परशब्देन सामान्यतः प्रकृतमप्रकृतं वा विवक्षितम्, तेन यत्राप्राकरणिकविशेषणसामर्थ्यात् प्राकरणिकमुच्यते तदपि संगृह्यते, तत्रापि वैचित्र्याविशेषादन्यत्रानन्तर्भावाच्च। यथा 'संप्राप्ते सकलाङ्ग' इत्यादि। अत्र ह्यप्रकृतस्य भृङ्गस्य विशेषणसामर्थ्यात् प्रकृतस्यासत्पुरुषस्य प्रतीतिरित्याहुस्तन्न युक्तम्, अप्रस्तुतप्रशंसयैव तत्संग्रहात्। वृत्तौ चाप्रस्तुतप्रशंसाप्रकरणे तत्र समासोक्तिपदं श्लिष्टविशेषणत्वमात्रपरम् इति।

(A) उभयान्वितविशेषणवत्त्वं श्लेषः, तस्य व्यवच्छेदो व्यावृत्तिः।

येनास्यभ्युदितेन चन्द्र गमितः क्लान्तिं रवौ तत्र ते
युज्येत प्रतिकर्त्तुमेव न पुनस्तस्यैव (A)पादग्रहः।
क्षीणेनैतदनुष्ठितं यदि ततः किं लज्जसे नो मनाग्
अस्त्वेवं जडधामता तु भवतो यद् व्योम्नि विस्फूर्जसे ॥४३७॥

आदाय वारि परितः सरितां मुखेभ्यः
किन्तावदर्जितमनेन दुरर्णवेन।
क्षारीकृतं च वडवादहने हुतं च
पातालकुक्षिकुहरे विनिवेशितं च ॥ ४३८॥

इयं च क्वचिद् वाच्ये प्रतीयमानार्थानध्यारोपेणैव भवति। यथा—

---

समासोक्तिच्छायामाह—(B)येनासीति। हे चन्द्र! येन रविणाऽभ्युदितेन त्वं क्लान्तिं गमितोऽसि तत्र रवौ प्रतिकर्त्तुमेव प्रत्यपकर्त्तुमेव युज्येत न पुनस्तस्यैव पादानां रश्मीनां ग्रहः, कृष्णपक्षे चन्द्रस्य सूर्यरश्मिषु प्रवेशात्। यदि क्षीणेन भवता एतदनुष्ठितं तत् किं मनागपि नो लज्जसे। इदमप्यस्तु, यद् व्योम्नि विस्फूर्जसे निर्लज्जतया देदीप्यसे इदन्तु तव जडधामता शीततेजस्कतैव श्लेषाज्जडपदाश्रयता जडपदवाच्यतेत्यर्थः।

अत्र शत्रुपादसेविनो निर्लज्जतया देदीप्यमानस्य पुरुषस्य प्रकृतस्य अप्रकृतचन्द्रवर्णनात् प्रतीतिः। तत्र चाभ्युदयाद्युभयान्वितविशेषणवशाद् विशेष्यचन्द्रपदस्याश्लिष्टत्वाच्च समासोक्तिच्छायाहेतुः। पादग्रहांशे तु श्लेष एव।

सादृश्यमात्रे त्वाह—आदायेति। दुर्णवेन दुर्वृत्तेनार्णवेन। अत्र वारिग्रहणादीनामर्णव एवान्वयेन न समासोक्तिच्छाया। सादृश्यमात्रात्तु सर्वत आकृष्टधनस्य सद्व्ययिनः पुंसः प्रतीतिः। सादृश्यमात्रेण प्रकृतव्यञ्जनं क्वचिद् वाच्यार्थे व्यङ्ग्यार्थाभेदानारोपात् क्वचिच्च तदभेदारोपात् क्वचिच्च विशेषणविशेष्यांश एव तदारोपादित्याह—इयञ्चेति। तत्र तदभेदानारोपस्य यद्यप्यादायेत्यादिकमेवोदाहरणं तथापि सौलभ्या-

---

(A) पादग्रह इति। सौरकरसम्पर्कादेव चन्द्रे किरणयोगमाह भास्कराचार्यः—'तरणिकिरणसङ्गादेष पीयूषपिण्डो दिनकरदिशि चन्द्रश्चन्द्रिकाभिश्चकास्ति' इति।

(B) येनासीति। उदितेनैव न त्वपकृतेनापि। भावार्थस्तु—क्षीणधनः कश्चिदुपजीवनार्थमपकारिणं सधनमनुसरन् केनचिदुपालभ्यते इत्युद्द्योते स्पष्टम्।

अब्धेरम्भःस्थगितभुवनाभोगपातालकुक्षेः
[1]पोतोपायादिह हि बहवो लङ्घनेऽपि क्षमन्ते।
आहो रिक्तः कथमपि भवेदेष दैवात् तदानीं
को नाम स्यादवटकुहरालोकनेऽप्यस्य कल्पः ॥ ४३९ ॥

क्वचि[2]त्त्वध्यारोपेणैव। यथा—

कस्त्वं भोः ? कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते।
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
न च्छायाऽपि परोपकारकरणे मार्गस्थितस्यापि मे ॥ ४४० ॥

---

दुदाहरणान्तरमाह—अब्धेरिति। अम्भसा जलेन स्थगितावाच्छादितौ भुवनाभोग-पातालकुक्षी येन तादृशस्याब्धेर्लङ्घनेऽपि (A)पोतोपायाद् बृहन्नौकारूपादुपायाद् बहवो जनाः क्षमन्ते शक्ता भवन्ति। (B)आहो पक्षान्तरे, एष समुद्रो यदि दैवात् कथमपि रिक्तो जलशून्यो भवेत्, नाम सम्भावनायाम्, (C)अस्यावटकुहरस्य गर्त्तगुहाया आलोकनेऽपि कः कल्पः शक्तः स्यात्। (D)अत्र सम्पत्कालेऽधिगम्यो विपत्काले त्वाधृष्यः प्रकृतः पुरुषः सादृश्यमात्राद् व्यङ्ग्यः (E)तस्य च न वाच्येऽध्यारोपः।

वाच्यार्थे व्यङ्ग्यार्थाभेदारोपे त्वाह—क्वचित्त्विति। पथिकशाखोटकयो-रुक्तिप्रत्युक्तिरियम्। तत्र कस्त्वं भोः इति पथिकस्य, कथयामीत्यादि प्रथमचरणं शाखोटकस्य; वक्षीत्यन्तं पथिकस्य, साधु विदितमिति शाखोटकस्य; कस्मादिति पथिकस्य, इदं कथ्यत इत्यादि सर्वं शाखोटकस्योक्तिः। न च्छायापीति भूता-

---

(A) पोतोपाया इति पाठोऽन्यत्र, तत्र बहुव्रीहिणार्थः करणीयः। पोतोपायाः समुद्रबणिजः।

(B) आहो इत्यव्ययं यद्यर्थ इत्युद्द्योते। टीकायान्तु सामर्थ्यात्तदर्थलाभः।

(C) अवटकुहरस्येति। अवटः खातः कुहरं तस्यैव गम्भीरभाग इत्युद्द्योतः।

(D) अत्राहुरुद्द्योतकाराः—अत्रोपमर्दनशीलस्य दुष्प्रभोः पूर्णतैव वरम्, न रिक्तता अत्यन्तोपमर्दनापत्तेरिति व्यङ्ग्यं गुणीभूतमेव। ध्वनित्वन्तु नात्रेति।

(E) तस्य चेति। तथा चापुरुषेऽध्यावप्येतेऽर्था अबाधिता एवेति न प्रतीयमानार्थाध्यारोप इत्यर्थ इति सुधासागरे द्रष्टव्यम्। प्रदीपकारा अप्येवमेव व्याचक्षते।

---

1. 'पोतोपाया' इति पाठो बहुषु पुस्तकेषु। 2. '-दध्यारोपेण' इति क्वचित् पाठः।

क्वचिदंशेष्वध्यारोपेण। यथा—

सोऽपूर्वो रसनाविपर्ययविधिस्तत् कर्णयोश्चापलं
दृष्टिः सा मदविस्मृतस्वपरदिक् किं भूयसोक्तेन वा।
सर्वं विस्मृतवानसि भ्रमर हे यद् वारणोऽद्याप्यसा-
वन्तःशून्यकरो निषेव्यत इति भ्रातः क एष ग्रहः ॥४४१॥

अत्र रसनाविपर्यासः शून्यकरत्वं च भ्रमरस्यासेवने न हेतुः, कर्णचापलं तु हेतुः, मदः प्रत्युत सेवने निमित्तम्।

(१५३) निगीर्याध्यवसानं तु प्रकृतस्य परेण यत्।
प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम् ॥१००॥
कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः।
विज्ञेयाऽतिशयोक्तिः सा—(A)

---

वासत्वात्। अत्र दित्सुरलभ्यमानार्थिकः पुरुषः प्रकृतः सादृश्यवशाद् व्यङ्ग्यः, शाखोटके वाच्ये आरोप्यते तदारोपं विना शाखोटकस्योक्त्यसम्भवात्। न च व्यङ्ग्यप्रत्यायको वाच्यार्थः प्रतीतव्यङ्ग्यारोपेणैव सिध्यतीत्यन्योन्याश्रय इति वाच्यम्, उक्तिप्रत्युक्तिमहिम्ना मनुष्यत्वेन प्रतीतस्य व्यङ्ग्यार्थस्य वाच्यशाखोटके आरोपे दित्सुत्वादिना रूपेण पश्चाद् व्यञ्जने अन्योन्याश्रयाभावात्। **सोऽपूर्व** इति। हे भ्रातर्भ्रमर! यदद्यापि वारणो निषेव्यते इत्येष को ग्रहः। वारणस्य को दोष इत्याह—सोऽपूर्व इति। रसनाविपर्यास इति अग्निशापाद् वारणस्य रसनाग्रपरिवृत्तेः, मदविस्मृतस्वपरविभागा दृष्टिः सा प्रसिद्धा। अत्र कर्णचापलमात्रांशे दुर्मुखः कर्णकथाग्राही निर्धनः पुरुषः प्रकृतो व्यङ्ग्यो नारोप्यते, भ्रमरे एतदुक्त्यौचित्यात्। अन्यत्रितयांशे त्वारोप्यते, भ्रमरस्य वारणसेवननिषेधे तेषामहेतुत्वादिति ग्राहयति—अत्रेति।

चतुर्विधमतिशयोक्त्यलङ्कारमाह—निगीर्येति। अत्र निगीर्येत्याद्युक्तामेका-

---

(A) निगीर्येति। परेणोपमानेन प्रकृतस्योपमेयस्य निगीर्याधःकृत्य तिरस्कृत्येति यावत् यद् अध्यवसानम् आहार्याभेदप्रत्ययः सैकातिशयोक्तिः। यच्च प्रस्तुतस्य प्रकृतस्यान्यत्वम् अन्यत्वप्रकारेण वर्णनं सा द्वितीया, यच्च यद्यर्थस्य स्वशब्देन शब्दान्तरेण वा यदिशब्दार्थस्योक्तौ कल्पनम् अर्थादसम्भविनोऽर्थस्येति सा तृतीयातिशयोक्तिः। चतुर्थी स्पष्टार्था।

उपमानेनान्तर्निगीर्णस्योपमेयस्य यदध्यवसानं सैका। यथा—

कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम्।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम्॥ ४४२॥

अत्र मुखादि कमलादिरूपतयाऽध्यवसितम्।

यच्च तदेवान्यत्वेनाध्यवसीयते साऽपरा। यथा—

अण्णं लडहत्तणअं अण्णा विअ कावि वत्तणच्छाआ।
सामा सामण्णपआवइणो रेह च्चिअ ण होई॥ ४४३॥

यद्यर्थस्य यदिशब्देन चेच्छब्देन वा उक्तौ यत् कल्पनम् अर्थादसम्भविनोऽर्थस्य सा तृतीया। यथा—

---

मतिशयोक्तिं व्याचष्टे—उपमानेनेति। उपमानं परपदस्यार्थः। उपमेयस्यान्तर्निगरणम् उपमानोक्तिमहिम्नैव तदभेदेनोपमेयप्राप्तौ तदनुक्तिः।

कमलमिति। कुवलये नीलोत्पलद्वयम्। तानि कमल-नीलोत्पलद्वयानि(A)। अत्रोपमानस्य कमलादेरुक्त्याऽनुक्तमुखादेरभेदेन प्रतीतिः। सा चेत्यादौ तु विरोधालङ्कार एव। प्रस्तुतस्येत्यादिद्वितीयामतिशयोक्तिमाह—यच्चेति। अण्णमिति।

अन्यल्लावण्यमन्यैव कापि वर्त्तनच्छाया।
श्यामा सामान्यप्रजापते रेखैव न भवति॥ इति संस्कृतम्।

लडहत्तणअं लावण्ये देशि। वर्त्तते अनेनेति वर्त्तनं शरीरं श्यामा (B)परिभाषिता नायिकाविशेषः। रेखा शिल्पम्। अत्र लावण्यादौ तदन्यत्वेनाध्यासः।

तृतीयामतिशयोक्तिमाह—यद्यर्थस्येति।

---

(A) द्वयानीति, अत्र राश्यपेक्षया प्रयुक्तयोः समस्यमानकमलनीलोत्पलद्वयपदयोर्बहुत्वबोधकत्वाभावेऽपि समासैकदेशस्य 'नीलोत्पलद्वय'पदस्य व्यक्त्यपेक्षं द्वित्वं कमलपदगतमेकत्वञ्चेति त्रित्वमादाय बहुवचनान्तत्वेन प्रयोगोपन्यासो नानुपपन्नः।

(B) परिभाषित इति। परिभाषा च—

शीतकाले भवेदुष्णा ग्रीष्मकाले च शीतला।
तप्तकाञ्चनवर्णाभा सा श्यामा परिकीर्त्तिता॥ इति।

राकायामकलङ्कं चेदमृतांशोर्भवेद् वपुः ।
तस्या मुखं तदा साम्यपराभवमवाप्नुयात् ॥ ४४४ ॥

कारणस्य शीघ्रकारितां वक्तुं कार्यस्य पूर्वमुक्तौ चतुर्थी । यथा—

हृदयमधिष्ठितमादौ [1]मालत्याः कुसुमचापबाणेन ।
चरमं रमणीवल्लभ लोचनविषयं त्वया भजता ॥ ४४५ ॥

(१५४) ———प्रतिवस्तूपमा तु सा ॥ १०१ ॥
(A)सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः ।

---

**राकायामिति** । साम्यं स्वसमानान्तरसत्त्वमेव पराभवः ।

कार्यकारणयोरित्यादिकां चतुर्थीमतिशयोक्तिमाह—**कारणस्येति** । पूर्वमुक्तौ पूर्वोत्पन्नत्वेनोक्तौ । **हृदयमित्यादि** । (B)अग्निमित्रं राजानं दृष्ट्वा मालवीनामराजपुत्र्या हृदयं सकामं जातम्, ततश्च तया भाव्यमानाय तस्मै दूत्या उक्तिरियम् । लोचनविषयं भजता त्वया तस्या हृदयं चरममधिष्ठितम् इत्यन्वयः । अत्र दृष्टान्तस्य राज्ञो मालवीहृदयावस्थानं कारणं तत्कार्यस्य तस्या हृदये कामाधिष्ठानस्य प्रागुत्पन्नत्वमुक्तम्, तच्च बाधितमप्याहार्यप्रतीतिविषयम्, कारणस्य दीर्घकारिताव्यञ्जकम् । अत्र चक्रवर्त्ती—समकालोत्पन्नत्वेऽपि पौर्वापर्यविपर्ययादयमलङ्कारः । यथा—

सममेव समाक्रान्तं द्वयं द्विरदगामिना ।
तेन सिंहासनं पैत्रं मण्डलञ्च महीक्षिताम् ॥

इत्यत्रेत्याह । तन्न, समकालोत्पन्नत्वे 'धुनोति चासिं तनुते च कीर्त्तिमि'त्यादाविव (C)समुच्चयालङ्कारस्यैव वक्ष्यमाणत्वात् ।

प्रतिवस्तूपमालङ्कारमाह—**प्रतिवस्त्विति** । वाक्यद्वये इत्यस्यार्थमाह—

---

(A) एकस्य सामान्यस्येति निदर्शनादृष्टान्तयोर्व्युदासार्थम्, तत्र हि बिम्बप्रतिबिम्बभावेन निर्देशान्नास्त्येकत्वमित्युद्द्योताभिप्रायः ।

(B) अग्निमित्रमिति । सत्स्वपि मुद्रितपुस्तकेषु 'मालती'तिपाठे 'मालवी'ति पाठाहरणादग्निमित्रनामग्रहणाच्च मालविकाग्निमित्रनाटकस्यायं श्लोक इति टीकाकृतोऽभिप्रायः प्रतिभाति, परं तत्र नायमुपलभ्यते । यच्च 'मालती'ति पाठमादृतवता सुधासागरकारेणोक्तं मालतीमाधवनाटके माधवं प्रत्युक्तिरियमिति तदप्युक्तिमात्रमेव तत्राप्यस्यानुपलम्भात् ।

(C) समुच्चयालङ्कारस्यैवेति, 'स त्वन्यो युगपद् या गुणक्रियाः' इत्युक्तलक्षणस्य द्वितीय-

---

1. 'मालत्या' इति पाठो बहुषु मुद्रितपुस्तकेषु ।

साधारणो धर्म उपमेयवाक्ये उपमानवाक्ये च कथितपदस्य दुष्टतयाऽभिहितत्वात् शब्दभेदेन यदुपादीयते सा वस्तुनो वाक्यार्थस्योपमानत्वात् प्रतिवस्तूपमा। यथा—

देवीभावं गमिता परिवारपदं कथं भजत्वेषा।
न खलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नम्॥ ४४६॥

यदि दहत्यनलोऽत्र किमद्भुतं यदि च गौरवमद्रिषु किं ततः।
लवणमम्बु सदैव महोदधेः प्रकृतिरेव सतामविषादिता॥ ४४७॥

इत्यादिका मालाप्रतिवस्तूपमा द्रष्टव्या। एवमन्यत्राप्यनुसर्त्तव्यम्।

---

उपमानेति। द्विविधां स्थितिं व्याचष्टे—शब्दभेदेनेति। शब्दभेदेनोपादानस्यैव बीजमाह—कथितपदस्येति। संज्ञाव्युत्पत्तिमाह—सा वस्तुन इति।

देवीभावमिति। सैरन्ध्रीभावं प्राप्स्यन्तीं द्रौपदीं शोचतां पाण्डवानामुक्तिरियम्। (A)परिवारपदं दासीपदम्। दैवतरूपं देवताप्रतिमा तत्राङ्कितं तत्र जडितम्(?) अत्र देवीरत्नयोरुपमेयोपमानयोः परोपभोगायोग्यत्वपर्यवसन्नं परिवारपदभजनायोग्यत्वमुपभोगयोग्यत्वानौचित्यञ्च (B)कथं-नखलु-पदाभ्यामुक्तम्। अनवीकृतत्वपरिहारेण नवीकृतत्वस्योदाहरणं यद्दोषोल्लासे उक्तम्, तदेव मालाप्रतिवस्तूपमोदाहरणं घटते इत्याह—यदि दहतीति। अत्र स्वाभाविकत्वं सामान्यं किमद्भुतमित्यादिपदचतुष्टयस्य पर्यवसितार्थः।

---

समुच्चयालङ्कारस्येत्यर्थः। परमत्रेदं चिन्तनीयम्—उदाहरणस्वरसेन पदद्वयवाच्यक्रिययोर्यौगपद्य एव समुच्चय इति निश्चीयते, इह तु समाक्रान्तमित्येकैव क्रियेति कथं तदलङ्कारप्राप्तिः। केचित्तु यौगपद्यवाचकशब्दाभाव एव समुच्चयः, तत्सद्भावे त्वतिशयोक्तिरित्याहुः तन्मतेऽप्यत्रातिशयोक्तिरेवेति। उद्द्योतकारा अपि कार्यकारणयोः पौर्वापर्यविपर्ययरूपामतिशयोक्तिं—विपर्ययः कार्यस्य प्राथम्येन सहभावेन चेत्येवं विवृत्य इममेव श्लोकं सहभावेनेत्यस्योदाहरणमाहुः।

(A) परिवारपदमिति सामान्यकलत्रपदमित्युद्द्योतसुधासागरकारादयः।

(B) इदमलङ्कारलक्षणसङ्गमनाभिप्रायकम्। तथा च कथं-नखलु-पदप्रतिपादितमनौचित्यम् एक एव साधारणो धर्मः कथितपदत्वदोषपरिजिहीर्षया द्विधा निरूपित इति टीकाकृतोऽभिप्रायः। केचित्तु—परिवारपदत्व-परिभोगयोग्यत्वयोरनर्थान्तरत्वादुदाहरणसङ्गतिरित्याहुः।

**( १५५ ) दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम् ॥ १०२ ॥**

**एतेषां साधारणधर्मादीनां दृष्टोऽन्तो निश्चयो यत्र स दृष्टान्तः ।**

**त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम् ।**
**आलोके हि हिमांशोर्विकसति कुसुमं कुमुद्वत्याः(A) ॥ ४४८ ॥**

**एष साधर्म्येण । वैधर्म्येण तु—**

**तवाऽऽहवे साहसकर्मशर्मणः करं कृपाणान्तिकमानिनीषतः ।**
**भटाः परेषां विसरारुतामगुर्दधत्यवाते स्थिरतां हि पांशवः ॥४४९॥**

---

दृष्टान्तालङ्कारमाह—**दृष्टान्तः पुनरिति।** (B) 'प्रतिबिम्बनं' प्रणिधानेनैव गम्यत्वम् । **साधारणधर्मादीनामिति।** आदिपदादुपमेयोपमानतापरिग्रहः। 'निश्चयः' उपमेयोपमानयोर्द्वयोः, स च प्रणिधानेनैवेति बोध्यम् ।

**त्वयीति।** नायके दूत्या उक्तिरियम् । मनोभवज्वलितं तस्या मनस्त्वयि दृष्ट एव निर्वाति ज्वालाशून्यं भवति। तत्र दृष्टान्तमाह—आलोके हीति। हिमांशोरालोके दर्शने कुमुद्वत्याः कुमुदं हि विकसति। अत्र निर्वाणविकासाभ्याम् अभावभावरूपाभ्यां स्फीतत्वं सामान्यं प्रणिधानगम्यम् । तादृशतदृशाच्च मनःकुमुदयोर्नायिकाकुमुद्वत्यो राजहिमांश्वोश्च उपमानोपमेयभावः प्रणिधानगम्यः। 'देवीभावमि'त्यादौ त्वनौचित्यं सामान्यं कथं-नखलु-पदाभ्यां झटित्येव प्रतीयते न तु (C)भावाभावपदाभ्याम् इतीषद्भेदेनालङ्कारद्वयमिदम् । **एष साधर्म्येणेति।** एष दर्शित'स्त्वयि दृष्ट एवे'त्यादौ दृष्टान्तालंङ्कारः साधर्म्येण दृष्टान्तविकासलब्धस्फीतत्वेन ।

**तवाहव इति।** साहसकर्मणा शर्म सुखं यस्य तादृशस्य कृपाणान्तिकं करम् आनिनीषत एव तवाहवे परेषां भटा वीरा (D)विसरारुतां दिक्षु विदिक्षु

---

(A) त्वयीति। 'त्वयीत्यत्र सप्तमीनिर्देशात् हिमांशोरित्यत्र षष्ठीनिर्देशाच्च, मनोभवज्वलितप्रतिनिर्देश्यस्य रविकिरणज्वलितत्वस्यानुक्त्या न्यूनत्वाच्चासंष्ठुलमिदं पद्यम्' इत्युद्द्योतः।

(B) प्रतिबिम्बनं बिम्बप्रतिबिम्बभावः न त्वेकत्वमित्यर्थः ; अत एव प्रतिवस्तूपमातो भेदः। न चात्रोपमा यथेवादिशब्दाभावात् । नाप्यर्थान्तरन्यासः सामान्यविशेषभावाभावादित्युद्द्योताभिप्रायः। प्रणिधानेनैव गम्यत्वमिति निरुक्तव्याख्यानेऽप्ययमेव भावः।

(C) एतत्तु प्रकृतस्थलाभिप्रायेण, वैधर्म्येण प्रतिवस्तूपमास्थले 'चकोर्य एव चतुराश्चन्द्रिकाचामकर्मणि' इत्यादौ भावाभावबोधकपदसद्भावेऽपि प्रतिवस्तूपमाया स्वीकार्यत्वात् । अत एव 'इतीषद्भेदेनालङ्कारद्वयमिदमि'त्युक्तम् ।

(D) विशरारुतामिति तालव्यवान् पाठो मुद्रितपुस्तकेषु । झटिति नश्वरतामिति तदर्थः ।

(१५६) सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम्।
सैव क्रियासु बह्वीषु कारकस्येति दीपकम्॥ १०३॥

प्राकरणिकाप्राकरणिकानामर्थादुपमानोपमेयानां धर्मः क्रियादिः एकवारमेव यदुपादीयते [1]तत् एकदेशस्थस्यैव समस्तवाक्यदीपनाद्दीपकम्। यथा—

किवणाणं धणं णाआणं फणमणी केशराइं सीहाणम्।
कुलवालिआणं त्थणआ कुत्तो छिप्पन्ति अमुआणम्॥४५०॥

कारकस्य च बह्वीषु क्रियासु सकृद् वृत्तिर्दीपकम्। यथा—

खिद्यति कूणति वेल्लति विचलति निमिषति विलोकयति तिर्यक्।
अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने॥ ४५१॥

---

विक्षिप्तताम् अगुः प्रापुरित्यर्थः। अत्र दृष्टान्तमाह—दधतीति। अत्र भटपांशूनामुपमेयोपमानानां विसरारुतास्थिरते वैधर्म्यं।

द्विविधं दीपकालङ्कारमाह—**सकृद्वृत्तिरिति**। बह्वीषु क्रियासु एकस्य कारकस्यैव सकृद्वृत्तिरेव द्वितीयं दीपकमित्यर्थः। संज्ञाव्युत्पत्तिमाह—**तदेकदेशेति**। **किवणाणमिति**।

कृपणानां धनं नागानां फणामणिः केशराः सिंहानाम्।
(A)कुलपालिकानां स्तनाः कुतः स्पृश्यन्तेऽमृतानाम्॥ इति संस्कृतम्।

अमृतानां जीवद्दशानाम्। अत्र कृपणानां धनं प्रकृतम्, नागफणामण्यादयोऽप्रकृतास्तदुपमानानि; तेषामस्पर्शरूपो धर्मः सकृदुपात्तः। एवं कृपणनागादीनामप्यमृतत्वम्।

द्वितीयं दीपकमाह—**कारकस्येति**। (B)**खिद्यतीति**। नवपरिणया वधूः शयने खिद्यतीत्याद्यन्वयः। कूणति सङ्कुचति, वेल्लति कम्पते, विचलति परावर्त्तते।

---

(A) कुलपालिकानामिति, उद्द्योतेऽप्येवमेव संस्कारः, कुलबालिकानामिति क्वचित संस्कृतम्। अत्र कुलपालिकानां स्तना उपमेया इति प्रदीपः। उपमेया इति प्रकृतत्वादित्युद्द्योतः।

(B) स्विद्यतीति पाठो मुद्रितपुस्तकमात्रे। स्वेदः सात्त्विको भावः। दयिते परिरम्भोद्यते कूणति मृदु शब्दं करोति। ततोऽप्यपरिवर्त्तिनि वेल्लति सङ्कोचमालम्बते। इत्युद्द्योतः।

---

1. 'तत् एकस्यैवे'ति पाठः क्वचित्।

(१५७) मालादीपकमाद्यं चेद् यथोत्तरगुणावहम् ।

पूर्वेण पूर्वेण वस्तुना उत्तरमुत्तरं चेदुपक्रियते तन्मालादीपकम् । यथा—

संग्रामाङ्गणसङ्गतेन भवता चापे समारोपिते
सम्प्राप्ते परिपन्थियोधनिवहे साम्मुख्यमासादितम् ।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं नृपते त्वया सितयशस्तेनापि लोकत्रयम्[A] ॥ ४५२ ॥

(१५८) नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता ॥ १०४ ॥

नियतानां प्राकरणिकानामेव अप्राकरणिकानामेव वा ।

---

विबलतीति क्वचित् पाठः । निमिषति चक्षुर्मुद्रयति । अन्तरित्यादिद्वयन्तु किञ्चिदुद्भिन्नयौवनत्वात् । अत्र सकलक्रियास्वेव कर्तृकारकं बधूः सकृदुपात्तम् ।

मालादीपकालङ्कारमाह—**मालेति** । आद्यमित्यत्राऽऽद्यमाद्यमित्येवं वीप्सार्थो बोध्यः । **यथोत्तरगुणावह**मिति, उत्तरोत्तरोपकारकमित्यर्थः । उपकारश्चोत्तरोत्तरस्य स्वसदृशक्रियाजननमेव । **संग्रामाङ्गणसङ्गतेने**ति । संप्राप्ते आगते । अत्र कोदण्डादिना शरादीनां साम्मुख्यप्रापणमुपकारः । अत्र च पूर्वोक्ताभवन्मतयोगदोषपरिहाराय द्वितीयचरणपरावृत्तिः । ततश्च देवेति सम्बोधनाभावाच्चतुर्थचरणे नृपते इति सम्बोधनं प्रक्षिप्तम्, ततश्च छन्दोभङ्गपरीहाराय सितयश इति कृतम् । न च द्वितीयचरणपरावृत्तावपि कथं तद्दोषपरिहारः 'कोदण्डेन शरा' इत्यादीनामासादितमित्यत्रानन्वयादिति वाच्यम्, एकवाक्यत्वेन 'नपुंसकानपुंसकयोर्नपुंसकमेकवद् वा' इति सूत्रेणाऽऽसादितमित्यत्र नपुंसकैकत्वविधानादनन्वयाभावात् ; प्रागुक्तपाठे तु वाक्यभेदादाकर्णनक्रियाकर्मत्वेनैव परार्द्धोत्थानाच्चोक्तसूत्राविषयत्वात् ।

तुल्ययोगितालङ्कारमाह—**नियताना**मिति । प्राकरणिकत्वेनैवाप्राकरणिकत्वेनैव वा नियतानामित्यर्थः । तेन प्राकरणिकाप्राकरणिकमिश्रणघटिताद्दीपकाद् भेदः ।

---

(A) संग्रामाङ्गणेति । श्लोकोऽयं दोषोल्लासेऽपि (३४२ पृ०) दृश्यते । अत्रापि दोषोल्लासतुल्यानुपूर्वीक एव पाठः सर्वेषु मुद्रितग्रन्थेषु । द्वितीयचरणस्यैवं परावृत्तिस्तूद्द्योतकृताऽपि कृता । टीकाकारस्वरसानुमितोऽयमस्मद्गृहीतः पाठः क-संज्ञकटीकाग्रन्थस्यैकस्मिन्नेव पार्श्वे लिखितान्मूलमात्रादुपलब्धः । न जाने कथं महेश्वरेणानवसर एवायं दोषोद्धारे परिकरः कृत इति ।

क्रमेणोदाहरणम्—

पाण्डुक्षामं वदनं हृदयं सरसं तवालसं च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदन्तः ॥ ४५३ ॥

कुमुदकमलनीलनीरजालिर्ललितविलासजुषोर्दृशोः पुरः का ।
अमृतममृतरश्मिरम्बुजन्म प्रतिहतमेकपदे [1]तदाननस्य ॥४५४॥

(१५६) उपमानाद् यदन्यस्य व्यतिरेकः स एव सः ।

अन्यस्योपमेयस्य व्यतिरेक आधिक्यम् ।

क्षीणः क्षीणोऽपि शशी भूयो भूयोऽभिवर्धते सत्यम् ।
विरम प्रसीद सुन्दरि यौवनमनिवर्त्ति यातं तु ॥ ४५५ ॥

इत्यादावुपमानस्योपमेयादाधिक्यमिति केनचिदुक्तम्, तद-युक्तम्; अत्र यौवनगतास्थैर्याधिक्यं हि विवक्षितम् ।

---

तत्र प्राकरणिकानामेवाह—पाण्डिति । व्याख्यातमिदं दोषोल्लासे ( पृ०—४०६ ) । अत्र विरहिण्या मालत्या अङ्गानां प्राकरणिकानामेवा'वेदयति'क्रियारूपसकृद्धर्मान्वयः ।

अप्राकरणिकानामेवाह—कुमुदेति । कुमुदादीनामालिः श्रेणी ललितविलासादीनां जुषोस्तस्या दृशोः पुरः का, निकृष्टेत्यर्थः । तथा तदाननस्यैकपदे उपमानीकरण-रूपैकव्यवसायेऽमृतादिकं प्रतिहतमित्यर्थः । 'पदं व्यवसितत्राणस्थानश्रेष्ठेषु कीर्त्तितम्' इति कोषः । अत्र निकृष्टत्वरूपे सकृद्धर्मे दृगुपमानत्वेनोपात्तानां कुमुदादीनां, प्रति-हतत्वस्वरूपे सकृद्धर्मे च तदाननोपमानत्वेनोपात्तानाम् अमृतादीनामप्रकृतानामन्वयः ।

चतुर्विंशतिविधं व्यतिरेकालङ्कारमाह—उपमानादिति । 'अन्यस्य' उपमेयस्य । अत्रोपमानस्योपमेयादाधिक्यमपीममलङ्कारं ये वदन्ति तान्निरस्यति—क्षीणः क्षीण इति । मानिनीं प्रत्युक्तिरियम् । मानाद् विरमेत्यर्थः । यातं गतं तु यौवनं क्षीणक्षीणपुन-र्वृद्धियुक्तशशिवत् न पुनर्वृद्धिमदित्यर्थः । उपमेयादाधिक्यमिति । अनिवर्त्तियौवन-रूपोपमेयापेक्षया पुनः पुनर्वृद्धिमतश्चन्द्रस्याऽऽधिक्यमित्यर्थः । अत्र यौवनगतस्येति प्रत्यायनीयरूपस्यैवाऽऽधिक्यस्य विवक्षितत्वात् प्रकृते चन्द्रापेक्षया यौवनास्थैर्य-प्रत्यायनीयस्याऽऽधिक्येनोपमेयस्याऽऽधिक्यं विवक्षितम् अतश्चन्द्रास्थैर्यापेक्षया यौवना-स्थैर्यस्याऽऽधिक्येनोपमेययौवनाधिक्यमित्यर्थः । यस्तु—'हनूमदाद्यैर्यशसा मया पुनर्द्विषां

---

1. 'तवाननस्ये'ति क्वचित् पाठः ।

( १६० ) हेत्वोरुक्तावनुक्तीनां त्रये साम्ये निवेदिते ॥ १०५ ॥
शब्दार्थाभ्यामथाऽऽक्षिप्ते श्लेषे तद्वत् त्रिरष्ट तत् ।

व्यतिरेकस्य हेतुरुपमेयगतमुत्कर्षनिमित्तम्, उपमानगतमपकर्षकारणम्, तयोर्द्वयोरुक्तिः, एकतरस्य द्वयोर्वा अनुक्तिरित्यनुक्तित्रयम् । एतद्भेदचतुष्टयम् उपमानोपमेयभावे शब्देन प्रतिपादिते, आर्थेन च क्रमेणो[1]क्तौ चत्वार एव भेदाः, आक्षिप्ते चौपम्ये तावन्त एव, एवं द्वादश । [2]एते च श्लेषेऽपि भवन्तीति चतुर्विंशतिर्भेदाः ।

---

हसैर्दूत्यपथः सितीकृतः' इति नैषधे (न[illegible]सर्गे १२३ श्लो०) नलस्य विषादस्तत्राप्युपमेयस्य नलस्यैव विषादपोषिकया [illegible]णसामग्र्या दूत्यपथसितीकरणाद्धनूमदाद्युपमानापेक्षयाधिक्यम् । एवं—'मयाप्तं रामत्वं कुशलवसुता न त्वधिगता' इत्यत्रापि प्रत्यायनीयस्य दुःखित्वस्य उपमेये दरिद्र एवाऽऽधिक्यमित्यादि बोध्यम् ।

अस्यालङ्कारस्य चतुर्विंशतिविधत्वमाह—**हेत्वोरुक्ता**विति । 'साम्ये' समानधर्मसम्बन्धरूपे उपमात्मके उपमेयोपमानभावे, शब्देनार्थेन वा 'निवेदिते' बोधिते आक्षिप्ते वा सति (A)हेत्वोरुक्त्यनुक्तित्रयाभ्यां चतुश्चतुर्विध इत्यर्थः इत्यतो द्वादशविध इत्यर्थः । शब्देन निवेदितत्वं श्रौतीत्वम्, अर्थेन निवेदितत्वमार्थीत्वम्, आक्षिप्तत्वन्तु सादृश्यवाचकपदाभावेऽपि निर्जितत्वाद्युक्त्या कल्प्यत्वम् । एतादृशत्रिकस्योत्कर्षनिकर्षहेतुद्वयोक्त्यनुक्तित्रयरूपचातुर्विध्येन द्वादशविधत्वमित्यर्थः । एते द्वादश श्लेषं विना, तथैते द्वादश श्लेषसत्त्वेऽपीत्याह—**श्लेषे तद्व**दिति । तथा च चतुर्विंशतिविधत्वमित्याह—**त्रिरष्ट त**दिति । 'तत्' तस्मात् 'त्रिरष्ट' त्रिगुणीभूता अष्ट चतुर्विंशतिरित्यर्थः । हेत्वोरुक्त्यनुक्तित्रयाणि व्याचष्टे—**व्यतिरेकस्ये**ति । **एकतरस्ये**ति । तेनेदमनुक्तिद्वयं युगपदनुक्तिश्चैकेत्यनुक्तित्रयम् । **क्रमेणोक्तौ चत्वार** इति । उक्तौ सत्यां क्रमेण चत्वारश्चत्वार इत्यर्थः, वीप्सार्थस्यात्र विवक्षितत्वात् ।

---

(A) हेत्वोरिति उपमेयगतोत्कर्षनिमित्तस्य, उपमानगतनिकर्षनिमित्तस्य चेत्यर्थः । उक्त्यनुक्तित्रयाभ्यामिति । उक्त्या अनुक्तित्रयेण चेत्यर्थः । व्यक्त्यपेक्षया बहुत्वप्रतिपादकस्याप्यनुक्तित्रयपदस्य समष्टिगतमेकत्वमेव द्वन्द्वप्रयोजकमिति समस्तपदयोर्द्विवचनान्तत्वोपपत्तिः । त्रित्वञ्च—उत्कर्षस्य निकर्षस्य युगपदुभयस्य चानुक्त्या भवतीत्यनुपदमेव व्यक्तीभविष्यति ।

---

1. '-णोक्ताश्चत्वार' इति क्वचित् पाठः । 2. 'एते श्लेषे' इति क्वचिद् दृश्यते ।

क्रमेणोदाहरणम्—

असिमात्रसहायस्य प्रभूतारिपराभवे ।
अन्यतुच्छजनस्येव न स्मयोऽस्य महाधृतेः ॥ ४५६ ॥

अत्रैव तुच्छेति महाधृतेरित्यनयोः पर्यायेण युगपद् वाऽनुपादाने अन्यद् भेदत्रयम् । एवमन्येष्वपि द्रष्टव्यम् । अत्रेवशब्दस्य सद्भावात् शाब्दमौपम्यम् ।

असिमात्रसहायोऽपि प्रभूतारिपराभवे ।
नैवान्यतुच्छजनवत् सगर्वोऽयं महाधृतिः ॥ ४५७ ॥

अत्र तुल्यार्थे वतिरित्यार्थमौपम्यम् ।

---

औपम्यमुपमा तस्याः श्रौतीत्वार्थीत्वाक्षिप्तत्वेन त्रैविध्यम्, हेतुद्वयोक्त्यादिचातुर्विध्येन तत्त्रयचातुर्गुण्यमेव । श्लेषसत्त्वेऽपीति व्याचष्टे—एते चेति । श्लेषश्च क्वचित् साधर्म्यांशे क्वचिच्च (A)व्यतिरेकप्रतियोग्यंशे, तच्चोदाहरणे दर्शयिष्यामः । क्रमेणेति—हेतुद्वयोक्त्यनुक्तिक्रमेणेत्यर्थः ।

असिमात्रेति । अस्य भूपतेरसिमात्रसहायस्यापि प्रभूतानां बहूनामरीणां पराभवे कृते सत्यन्यस्य तुच्छजनस्येव न स्मयो न गर्वः, यतो महाधृतिः । अत्र तुच्छत्वमुपमानस्य निकर्षहेतुः, महाधृतित्वमुपमेयस्य उत्कर्षहेतुरिति हेतुद्वयोक्तिः । अत्रैवानुक्तित्रयमपि दर्शयति—अत्रैवेति । एवमन्येष्वपीति । अत्र शाब्दौपम्ये यथा हेतुद्वयोक्त्युदाहरणमेव दर्शितम्, तथार्थौपम्याक्षिप्तौपम्ययोरपि तन्मात्रं मया दर्शयिष्यते । तत्रैवानुक्तित्रयमपि बोध्यम् । एवं श्लेषेऽपीत्यर्थः । अत्रौपम्यस्य शाब्दत्वं ग्राहयति—अत्रेवशब्द इति ।

आर्थौपम्ये उदाहरति—असिमात्रसहायोऽपीति । अत्र तुल्यार्थ इति । (B)षष्ठीसप्तम्यन्तत्वाभावेन इवार्थे तदप्राप्तेः । (C)अत्र तुच्छत्वधृतिनिधित्वयोर्हेत्वोरनुक्तित्रयं बोध्यम् ।

---

(A) व्यतिरेकप्रतियोगीति । येन धर्मेणोपमानादुपमेयस्याधिक्यरूपो व्यतिरेकः प्रत्याय्यते स व्यतिरेकप्रतियोगी । प्रकृते तु—'हरवन्न विषमदृष्टि'रित्यादिषु विषमदृष्टित्वरूपधर्मेण हरान्नरपतेराधिक्यप्रत्यायनाद् विषमदृष्टित्वं व्यतिरेकप्रतियोगी, तदंशे च श्लेष इति लक्षणसङ्गतिः ।

(B) षष्ठीसप्तम्यन्तत्वाभावश्च साधारणधर्मविशेष्यकत्वाभावादिति भावः ।

(C) अत्रेति । क्वचित्तुच्छत्वस्य क्वचिद् धृतिनिधित्वस्य क्वचिदुभयोरित्यनुक्तित्रयम् ।

इयं सुनयना दासीकृततामरसश्रिया ।
आननेनाकलङ्केन जयतीन्दुं कलङ्किनम् ॥ ४५८ ॥

अत्रेवादितुल्यादिपदविरहेण आक्षिप्तैवोपमा ।

जितेन्द्रियतया सम्यग् विद्यावृद्धनिषेविणः ।
अतिगाढगुणस्यास्य नाब्जवद् भङ्गुरा गुणाः ॥ ४५९ ॥

अत्रेवार्थे वतिः, गुणशब्दः श्लिष्टः, शाब्दमौपम्यम् ।

अखण्डमण्डलः श्रीमान् पश्यैष पृथिवीपतिः ।
न निशाकरवज्जातु कलावैकल्यमागतः ॥ ४६० ॥

अत्र तुल्यार्थे वतिः, कलाशब्दः श्लिष्टः ।

---

आक्षिप्तौपम्ये आह—**इयं सुनयने**ति । इयं सुनयना अकलङ्केन दासीकृततामरसश्रिया आननेन कलङ्किनमिन्दुं जयतीत्यर्थः । बहुव्रीहौ भाषितपुंस्कत्वात् पुंवद्भावेन 'श्रिणे'ति नोक्तम् । तत्राऽऽक्षिप्तौपम्यत्वं ग्राहयति—**अत्रेवादी**ति । अत्राप्यकलङ्कित्वकलङ्कित्वयोरन्यदनुक्तित्रयाधीनं भेदत्रयं बोध्यम् । श्लेषेऽप्येतद्द्वादशके उदाहर्त्तव्ये ।

शाब्दौपम्ये हेतुद्वयोक्त्युदाहरणमाह—**जितेन्द्रियेति** । अत्रातिगाढगुणत्वे विद्यावृद्धनिषेवित्वं तत्र च जितेन्द्रियत्वं हेतुः । अत्र गुणगतगाढत्वभङ्गुरत्वे उत्कर्षनिकर्षहेतू । अनयोरनुक्तित्रयेणान्यद् भेदत्रयं बोध्यम् । तत्र चातिगाढत्वानुपादाने 'नानाविधगुणस्यास्ये'ति वाच्यम् । भङ्गुरत्वानुपादाने तु 'न तामरसवद् गुणा' इति वाच्यम् । **अत्रेवार्थ** इति । अब्जस्येवेति षष्ठ्यन्तादुत्पन्नत्वात् ।

आर्थौपम्ये श्लेषे उदाहरति—**अखण्डे**ति, मण्डलं राजचक्रं बिम्बश्च, कला वैदग्ध्यं चन्द्रषोडशांशश्च । **अत्रे**ति । निशाकरेण तुल्य इत्यर्थकत्वे षष्ठ्यन्तादनुत्पत्तेः । निशाकरस्य तुल्य इत्यर्थे तु वतिर्न भवति, साधारणधर्मनिष्ठसम्बन्धबोधकषष्ठ्यन्तादेव तदनुशासनात् । **कलाशब्द** इति । इदमुपलक्षणम्, मण्डलशब्दोऽपीति बोध्यम् । (A)अत्राखण्डमण्डलत्व-कलावैकल्ये उत्कर्षनिकर्षहेतू । अनयोरनुक्तित्रयेणान्यद्

---

(A) अत्र कलावैकल्य-तदभावौ हेतू इति प्रदीपः ।

अत्र मालाप्रतिवस्तूपमावत् मालाव्यतिरेकोऽपि सम्भवति। अस्यापि भेदा एवमूह्याः। दिङ्मात्रमुदाह्रियते। यथा—

हरवन्न विषमदृष्टिर्हरिवन्न विभो विधूतविततवृषः।
रविवन्न चातिदुःसहकरतापितभूः कदाचिदसि॥ ४६१ ॥

अत्र तुल्यार्थे वतिः, विषमादयश्च शब्दाः श्लिष्टाः।

---

भेदत्रयं बोध्यम्। तत्र चाखण्डत्वानुपादाने प्रसन्नेति वाच्यम्। वैकल्यानुपादाने कलावैशिष्ट्यमिति वाच्यम्(A)। (B)अनयोः साधर्म्यांशे श्लेषः।

आक्षिप्तौपम्ये उदाहरिष्यन्नार्थौपम्ये मालासम्भवं दृष्ट्वा आर्थौपम्यानन्तरमेव तां दर्शयति **अत्र मालाप्रतिवस्त्विति**। **अस्यापि भेदा** इति, अनयैव हेतुद्वयोक्तितदनुक्तित्रयरीत्येत्यर्थः। मालामेव दर्शयति—**हरवदिति**। विषमा अयुग्मा लोकेषु न्यूनाऽधिका च। हरिवत् कृष्णवत् विधूतोऽपसारितो वृषो वृषासुरो येन, त्वं न तादृशः वृषस्य धर्मस्य त्वयाऽनपसारणात्। रविवदिति। करो रश्मी राजग्राह्यभागश्च। भूः पृथिवी तत्स्थ-लोकश्च। अत्र च निकर्षहेतुमात्रमुक्तम्। अन्यभेदास्तु यथासम्भवमूह्याः। अत्र च राज्ञि समदृष्टित्वस्य रक्षितवृषत्वस्य यथोचितकरग्राहित्वस्य चोपा-

---

(A) अत्रेदं विवेचनीयम्—उत्कर्षकारणस्य निकर्षकारणस्य च पृथगनुपादानेऽपि श्लेषव्यतिरेकोदाहरणस्थलं घटयता टीकाकृता एवमुक्तम्, परम् उभयोरनुपादाने श्लेषस्य निराश्रयत्वात् कथमुदाहरणसङ्गतिरिति तु विभावनीयम्। एतदर्थमत्रेत्थमुद्द्योतकाररीतिरवलम्बनीया—

'बहुलारिगतोऽप्येष श्रीमानुद्धतविक्रमः।
न निशाकरवज्जातु दृश्यतां वसुधाधिपः॥'

इति पाठेन बहुलशब्दे श्लेषसत्त्वादखण्डमण्डलत्वकलावैकल्ययोर्हेत्वोरनुपादानेऽपि सम्भवत्येवानुपादानत्रयम्। बहुलः कृष्णपक्षो विपुलश्चेति। अत्र बहुलारिमध्यगतोऽप्ययं श्रीमान्, चन्द्रस्तु न तथेति व्यतिरेकः। अत्रोक्तं भीमसेनमहाशयैः सुधासागरे—अत्रोत्कर्षकानुपादाने 'श्रीमानित्यादि' यथाश्रुतान्वये व्यतिरेकः स्पष्टः। अपकर्षकानुपादाने 'अखण्डमण्डलः श्रीमानेष पृथिवीपतिः जातु निशाकरवन्न, निशाकरः कदाचित् खण्डमण्डलोऽपि भवति' इति भाव इति, स्पष्ट एव व्यतिरेकः। उभयानुपादाने 'श्रीमानेष पृथिवीपतिः जातु निशाकरवन्न, निशाकरः कदाचिन्निःश्रीकोऽपि भवति' इति भावात् स्पष्टो व्यतिरेकः। एवञ्च—गोविन्दमहामहोपाध्यायैः काव्यप्रदीपे यदुक्तम्—'अत्रानुपादानत्रयं चिन्त्यम्' इति, तदज्ञानविजृम्भितम् इति।

(B) अनयोरिति 'नाब्जवद् भङ्गुरा गुणा' इत्यत्र 'कलावैकल्यमागत' इत्यत्र चेत्यर्थः। तथा चात्र गुणवत्त्वं कलावत्त्वञ्च साधर्म्यम्, तदंशे च श्लेष इति प्रकृतार्थसङ्गतिः।

नित्योदितप्रतापेन त्रियामामीलितप्रभः ।
भास्वताऽनेन भूपेन भास्वानेष विनिर्जितः ॥ ४६२ ॥

अत्र ह्याक्षिप्तैवोपमा, भास्वतेति श्लिष्टः । इत्येवंजातीयकाः श्लिष्टोक्तियोग्यस्य पदस्य पृथगुपादानेऽन्येऽपि भेदाः सम्भवन्ति, तेऽप्यनयैव दिशा द्रष्टव्याः । यथा वा—

स्वच्छात्मतागुणसमुल्लसितेन्दुबिम्बं
बिम्बप्रभाधरमकृत्रिमहृद्यगन्धम् ।
यूनामतीव पिबतां रजनीषु यत्र
तृष्णां जहार मधु नाननमङ्गनानाम् ॥ ४६३ ॥

अत्रेवादीनां तुल्यादीनां च पदानामभावेऽपि श्लिष्टविशेषणैराक्षिप्तैवोपमा प्रतीयते ।

---

दाने हेतुद्वयोक्तिः, तन्मात्रमुपादाय न हरवन्न हरिवन्न रविवदिति करणेन च निकर्षहेत्वनुक्तिः । अत्र व्यतिरेकप्रतियोग्यंशे श्लेषः । उभयानुपादानन्तु व्यतिरेकप्रतियोग्यंशे श्लेषे न सम्भवति, किन्तु नाब्जवद्गुणा इत्यादिके साधर्म्यांशे श्लेष एव सम्भवतीति बोध्यम् । क्वचित् पुस्तके तु नित्योदितेत्यादिवक्ष्यमाणाक्षिप्तौपम्योदाहरणानन्तरमेवायं श्लोकस्तिष्ठति । तत्तु न युक्तम् आर्थौपम्यमालाया आर्थौपम्यकथनानन्तरमेव वक्तुमौचित्यात्, नित्योदितेत्याद्यनन्तरमप्याक्षिप्तौपम्योदाहरणान्तरस्य वक्ष्यमाणत्वात्तदसमापने मालाप्रदर्शनानौचित्याच्च ।

आक्षिप्तौपम्ये श्लेषे उदाहरति—**नित्योदितेति** । अत्र नित्योदितप्रतापत्वत्रियामामीलितप्रभत्वे उत्कर्षनिकर्षहेतू । अन्यद् भेदत्रयञ्च पूर्ववदूह्यम् । अत्र श्लिष्टस्यापि भास्वच्छब्दस्य द्विरुपात्तत्वेनैतद्वशादपि प्रभेदान्तराणि सम्भवन्ति, तत्रापि शब्दार्थाक्षिप्तौपम्यभेदोऽपि द्रष्टव्य इत्याह—**इत्येवंजातीयका** इति । एवं जितेन्द्रियतयेत्यत्रापि गुणशब्दवत् पृथगुपादानमवधेयम् । क्वचित् पुस्तके श्लोकान्तरानन्तरमेवेयं पंक्तिर्लिखिता तिष्ठति तत्तु न युक्तम्, पृथगुपात्तश्लिष्टपदविशिष्टश्लोकानन्तरमेव तदौचित्यात् । न केवलं निर्जयेनैवौपम्याक्षेपः अपि तु क्वचित् श्लिष्टविशेषणैरपीत्युदाहरति—**स्वच्छात्मतेति** । यत्र पुरे अतीव पिबतां यूनां तृष्णां मधु कर्तृ जहार अङ्गनानाम् आननन्तु कर्तृ न जहार । मधुपाने तृष्णाविच्छेदोऽभूदङ्गनाधरपाने तु नेत्यर्थः । मध्वाननयोर्द्वयोर्विशेषणान्याह—स्वच्छात्मतेति । उभयत्रैव स्वच्छात्मतागुणादिन्दु-

(१६१) निषेधो (A)वक्तुमिष्टस्य यो विशेषाभिधित्सया ॥१०६॥
वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः ।

विवक्षितस्य प्राकरणिकत्वादनुपसर्जनीकार्यस्य अशक्यवक्तव्यत्वमतिप्रसिद्धत्वं वा विशेषं वक्तुं (B)निषेधो निषेध इव यः स वक्ष्यमाणविषय उक्तविषयश्चेति द्विधा आक्षेपः । क्रमेणोदाहरणम्—

ए एहि किंपि कीएवि कएण णिक्किव भणामि अलमहवा ।
अविआरिअकज्जारम्भआरिणी मरउ ण भणिस्सं ॥ ४६४ ॥

---

प्रतिबिम्बोल्लासः । आननपक्षे उल्लसितेन्दुबिम्बस्वरूपं वा । मधु बिम्बस्य चन्द्रबिम्बस्य प्रभाधारि, आननन्तु बिम्बफलप्रभोऽधरो यस्य तादृशम् । अकृत्रिमः स्वाभाविकः ।

द्विविधमाक्षेपालङ्कारमाह—निषेध इति । वक्तुमिष्टस्तावद् वक्ष्यमाण उक्तश्च भवति तद्विषयस्तदुक्तिनिषेध इत्यर्थः । वक्तुमिष्टतायां बीजमाह—अनुपसर्जनीकार्यस्येति, अनुपेक्षणीयप्रतिपादनस्येत्यर्थः । अवश्यवक्तव्यस्य निषेधोऽप्यनिषेध एवेत्याह—निषेध इति, निषेधादपि तत्प्रतीतेरिति भावः । तत्र वक्ष्यमाणविषयमाह—ए एहीति ।

(C)ए एहि किमपि कस्या अपि कृते निष्कृप भणाम्यलमथवा ।
अविचारितकार्यारम्भकारिणी म्रियतां न भणिष्यामि ॥ इति संस्कृतम् ।

---

(A) वक्तुमिति । केचित्तु वक्तुमित्युपलक्षणं करिष्यमाणस्यापि निषेध आक्षेपः; 'तां सुन्दरीं वर्णयितुं न मे वाणी प्रवर्त्तते' इत्यत्र करिष्यमाणवाणीप्रवृत्तेर्निषेधो वर्णनीयस्यानिर्वाच्यतां व्यनक्तीत्याहुरित्युद्द्योतः ।

(B) निषेधो निषेध इवेति, अभिधाननिषेधेऽप्यभिधेयानिषेधात्, विशेषप्राप्त्यर्थमेवाभिधानस्यापि निषेधादिति भाव इत्युद्द्योतः । शब्दगत्या निषेधेऽप्यर्थगत्या विधेरेव प्रतिपत्तेरिति प्रदीपः । अर्थगत्येति प्रदीपवाक्यस्याशयमाहोद्द्योतः—'तस्य प्रकृतत्वादेवाभिधातुं पतितस्य क्रियमाणो निषेधो बाधितः सन्नाभासत्वे पर्यवस्यन् विधेराक्षेपक इति भावः' इति । अत एव दर्पणकृताऽपि 'निषेधाभास' इत्युक्तम् ।

(C) ए इत्यव्ययं सानुनयसम्बोधने इत्युदाहरणचन्द्रिका । किमपि सन्तापातिशयरूपम् । ए इति सामर्ष सम्बोधनम् । अलमथवेति पूर्वाक्षेपे । अलमित्यनेनैव निषेधलाभे न भणिष्यामीति पुनः कथनं खेदातिशयद्योतकम् । अत्र नायिकासन्तापातिशयोऽवश्यं वक्तुमिष्टः, न चासौ विविच्य वक्तुं शक्य इति व्यञ्जयितुं निषिद्ध इत्युद्द्योतः ।

ज्योत्स्ना(A) मौक्तिकदाम चन्दनरसः शीतांशुकान्तद्रवः
कर्पूरं कदली मृणालवलयान्यम्भोजिनीपल्लवः।
अन्तर्मानसमास्त्वया प्रभवता तस्याः स्फुलिङ्गोत्कर-
व्यापाराय भवन्ति हन्त किमनेनोक्तेन न ब्रूमहे ॥ ४६५ ॥

(१६२) क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना ॥ १०७ ॥

(B)हेतु[1]भूतक्रियाया निषेधेऽपि तत्फलप्रकाशनं विभावना। यथा—

कुसुमितलताभिरहताऽप्यधत्त रुजमलिकुलैरदष्टाऽपि।
परिवर्त्तते स्म (C)नलिनीलहरीभि[2]रलोडिताऽप्यघूर्णत सा ॥४६६॥

'ए' इति साक्षेपप्राकृतसम्बोधने। अविचारितकार्यं खले त्वयि प्रेमानुबन्धः। अत्र तन्मरणस्याशक्यवक्तव्यत्वाभिधित्सया उक्तिनिषेधः।

उक्तविषयमाह—**ज्योत्स्नेति**। अः खेदे। अन्तर्मानसं मानसस्यान्तः। प्रभवता सता त्वया तस्याः स्फुलिङ्गोत्करस्येव व्यापाराय ज्योत्स्नादयो भवन्तीत्यर्थः। हन्त खेदे। अनेनोक्तेन किं न ब्रूमहे इत्यर्थः। (D)अत्रोक्तस्यैवार्थस्यातिप्रसिद्धत्वाभिधित्सया उक्तिनिषेधः।

विभावनाऽलङ्कारमाह—**क्रियाया** इति। अत्र क्रियापदं प्रकाशनीयफलहेतुक्रियापरमित्याह—**हेतुभूतक्रियये**ति। **कुसुमितलते**ति। सा विरहिणी अहताऽपि

(A) ज्योत्स्नेत्यादि। शीतांशुकान्तद्रवः चन्द्रकान्तमणिजलम् इत्युद्द्योतः।

(B) व्याख्यातमिदं सुधासागरादौ—वैयाकरणाः क्रियाया एव हेतुतां स्वीकुर्वन्ति, तन्मतेन व्याकरोति हेतुरिति। अन्यथा धात्वर्थरूपक्रियानिषेधस्याकिञ्चित्करत्वेनासङ्गतिः स्यात्। व्याख्यातञ्च मधुमतीकारैः—क्रियापदं हेतुपरम्, यत्तु क्रियापदं कारकव्यापारपरं तदपि भङ्ग्या हेतुपर्यवसन्नमिति। एवञ्च कारणप्रतिषेधे कार्यवचनं विभावना। ननु कारणाभावे कार्योत्पत्तौ स्फुरितस्य विरोधस्य प्रसिद्धातिरिक्तेन कारणेन परीहाराद् विरोधाभास एवायमिति चेन्न, समबलयोः परस्परविरोधे तत्स्वीकारात्, इह तु कारणविरहेण कार्यमेव बाध्यत्वेन गम्यते न तु तेन कारणविरह इति विशेषात् इति।

(C) 'नलिनीति नायिकाख्येत्यन्ये' इत्युदाहरणचन्द्रिका। सा नलिनीति रूपकमित्यन्ये।

(D) अत्र वियोगिनीनां ज्योत्स्नादि स्फुलिङ्गायते इत्यत्रातिप्रसिद्धत्वं विशेषं व्यञ्जयितुं

1. '-रूपक्रियाया' इति क्वचित्। 2. '-रलोलिते'ति क्वचित् पाठः।

(१६३) विशेषोक्तिरखण्डेषु कारणेषु फलावचः ।

मिलितेष्वपि कारणेषु कार्यस्याकथनं विशेषोक्तिः, अनुक्तनिमित्ता उक्तनिमित्ता अचिन्त्यनिमित्ता च । क्रमेणोदाहरणम्—

निद्रानिवृत्तावुदिते द्युरत्ने सखीजने द्वारपदं पराप्ते ।
श्लथीकृताश्लेषरसे भुजङ्गे चचाल नालिङ्गनतोऽङ्गना सा ॥४६७॥

कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने ।
नमोऽस्त्ववार्यवीर्याय तस्मै मकरकेतवे ॥ ४६८ ॥

---

कुसुमितलताभी रुजं दुःखमधत्त । अदृष्टाऽपि अलिकुलैः परिवर्त्तते स्म । अलोडिताऽपि नलिनीसम्बन्धितरङ्गैरघूर्णतेत्यर्थः, एतेषामुद्दीपकत्वात् । अत्र कारणीभूतहननादिक्रियाभावेऽपि रुग्धरणादिफलप्रकाशनम् । अत्र च क्रियाया इत्युपलक्षणम्, कारणमात्रप्रतिषेधो बोध्यः । तेनाप्रदीपोज्ज्वलं गृहमित्यादिपरिग्रहः ।

विशेषोक्त्यलङ्कारमाह—**विशेषोक्तिरिति**। अखण्डेषु मिलितेषु कारणेषूक्तेष्विति शेषः । फलावचः फलाभावकथनम् । वृत्तावप्येवमेव व्याख्येयम्, न तु फलानुक्तिः सकलपदार्थानामेव फलवत्त्वेनानुक्तफले सर्वत्रैवैतदलङ्कारप्रसक्तेः, वैचित्र्याननुभवात्तत्र नेष्टापत्तिः । अस्यास्त्रैविध्यमाह—**अनुक्तनिमित्तेति**। फलाभावस्य चिन्त्यत्वेऽपि अनुक्ततत्केत्यर्थः ।

**निद्रेति**। द्युरत्नं सूर्यः । भुजङ्गः कामुकः । अत्राऽऽलिङ्गनतोऽचलनस्य निमित्तमुत्कटो रसावेशश्चिन्त्योऽप्यनुक्तः । निद्रानिवृत्त्यादीनि च चलनकारणान्युक्तानि ।

एककारणोक्तावप्ययं भवतीत्यभिप्रायेणोक्तनिमित्तामुदाहरति—**कर्पूर इवेति**।
(A)दाहेऽपि कर्पूरस्याऽऽस्वादविशेषजननशक्तिर्न विहन्यत इत्यतो दग्धकर्पूरो दृष्टान्तः ।

---

ज्योत्स्नादीन्युक्त्वा तत्कथनं प्रतिषिद्धम् । यत्तु वामनेन 'उपमेये सति किमुपमानेनेत्येवमुपमानाक्षेप आक्षेप' इत्युक्तम्, तत्तु वक्ष्यमाणप्रतीपरूपतया गतार्थम् इत्युद्द्योतकाराः ।

(A) दाहेऽपीति । अत्राहुः सुधासागरकाराः—'अत्र कर्पूरो दाहमात्रे उपमानं न तु शक्तिमत्त्वेऽपीति भास्करः । शक्तिमत्त्वे इति परमार्थः, ईषद्दग्धस्य तस्य सौरभाद्यतिशयात्—

भ्रूभ्यां प्रियाया भवता मनोभूचापेन चाऽऽपे घनसारभावः ।
निजां यदप्लोषदशामपेक्ष्य सम्प्रत्यनेनाधिकवीर्यतार्जि ॥ (७।२४)

इत्यादिनैषधदर्शना'दिति काव्यप्रदीपकाराः । तद्भ्रान्तिविलसितम् । तथा हि—कर्पूर इवेषद्दग्धोऽपि शक्तिमानिति विवक्षायाम् अन्यस्यापीषद्दग्धस्य शक्तिमत्त्वसम्भावनया विशेषोक्ति-

(A)स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरताऽपि तनुं यस्य शम्भुना न बलं हृतम् ॥ ४६९ ॥

---

अत्र दाहफलं शक्तिमत्त्वाभावस्तदभावः शक्तिमत्त्वमुक्तम्, अवार्यवीर्यत्वञ्च तन्निमित्तमुक्तमित्युक्तनिमित्ता, दाहश्च कारणमेकमेवोक्तम् ।

अचिन्त्यनिमित्तामाह—स एक इति। त्रीणि जगन्ति स एको जयतीत्यन्वयः । अत्र तनुहरणस्य फलं बलहरणं तदभाव उक्तः, तन्निमित्तञ्चाचिन्त्यत्वादनुक्तम् इति (B)अचिन्त्यनिमित्ता ।(C)

---

भज्येत । तस्मान्निःशेषदाहे कर्पूर उपमानम् । यथा कर्पूरदाहे भस्मापि नावशिष्यते तथा निःशेषं दग्धोऽपि जने जने यः शक्तिमानित्यर्थः । एवञ्च शक्तिध्वंसे निःशेषदाहस्य नियतःकारणत्वाद् विशेषोक्तिरुपपद्यत इति सहृदयैराकलनीयम् इति ।

भ्रूभ्यामित्यस्यार्थस्तु—मनोभूचापेन कामबाणेन प्रियाया अर्थाद् दमयन्त्या भ्रूभ्यां भ्रयुगलेन भवता, भ्रूत्वं गच्छता सता घनो दृढः सारो बलं यस्य तस्य भावोऽतिदृढत्वं च आपे प्रापे यदैव च भ्रूत्वं तदैव दृढत्वमिति चकारार्थः ( न केवलं भ्रूत्वं प्राप्तं किन्तु दृढत्वमपि प्राप्तमिति चकारार्थ इति केचित् )। पुष्पत्वदशायां निःसारस्यापि धनुषो भैमीभ्रूत्वदशायां ससारत्वं जातमित्यर्थः । कथं ससारत्वमित्यत आह—यद् यस्मान्निजां स्वीयामप्लोषदशाम् अदाहावस्थामपेक्ष्य सम्प्रति दग्धस्य भैमीभ्रूभवनसमये अनेन धनुषा अधिकवीर्यता अतिशयितपराक्रमत्वम् आर्जि अर्जितम् । अदग्धपुष्परूपचापापेक्षया दग्धस्य श्यामीभवत्केशरशेषस्य भैमीभ्रूभवतस्तस्यैव चापस्य जगद्वशीकरणेऽधिकसामर्थ्यदर्शनादेवमनुमीयत इति भावः । घनत्वं सारत्वं दृढत्वं श्रेष्ठत्वञ्च प्राप इति वा । अथ च घनसारभावः कर्पूरत्वञ्च । यतः कर्पूरोऽपि निजाङ्गदाहात् स्वीयापक्वावस्थामपेक्ष्य दाहावस्थायामधिकवीर्यतामतिशयितसौगन्ध्यं शीतलत्वं चार्जयतीति नैषधीयप्रकाशे स्पष्टम् इत्यानन्दाश्रमसंस्कृते काव्यप्रकाशे ।

(A) स एक इति । कुसुमेत्यनेनायुधस्य निःसारतेत्युद्द्योतः ।

(B) अचिन्त्यनिमित्तेति । यद्यप्यनुक्तत्वाविशेषादेषाऽप्यनुक्तनिमित्तैव तथाऽपि प्रकरणादिना ज्ञातस्य निमित्तस्यावचने अनुक्तनिमित्ता, अज्ञातस्य वचने एषेति भेद इत्युद्द्योतकाराभिप्रायः ।

(C) विभावनाविशेषोक्त्योर्विषयविवेकमभिप्रेत्याह साहित्यदर्पणे विश्वनाथः—'इह च ( विशेषोक्तौ ) कार्याभावः कार्यविरुद्धसद्भावमुखेनापि निबध्यते, विभावनायामपि कारणाभावः कारणविरुद्धसद्भावमुखेनापि । एवञ्च 'यः कौमारहरः स एव हि वरः' इत्यादेरुत्कण्ठाकारणविरुद्धस्य निबन्धनाद् विभावना । 'यः कौमारहर' इत्यादेः कारणस्य च कार्यविरुद्धाया उत्कण्ठाया निबन्धनाद् विशेषोक्तिः । एवञ्चात्र विभावनाविशेषोक्त्योः सङ्करः, शुद्धोदाहरणन्तु मृग्यम्'

(१६४) यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः ॥ १०८ ॥

यथा—

एकस्त्रिधा वससि चेतसि चित्रमत्र
देव द्विषां च विदुषां च मृगीदृशां च ।
तापं च सम्मदरसं च रतिं च तन्वञ्
शौर्योष्मणा च विनयेन च लीलया च ॥ ४७० ॥

(१६५) सामान्यं वा विशेषो वा तदन्येन समर्थ्यते ।
यत्तु सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा ॥ १०९ ॥

---

यथासंख्यालङ्कारमाह—**यथासंख्यमिति**। क्रमिकाणां प्रथमद्वितीयादिक्रमोक्तानां तादृशसंख्याक्रमेणैव तदन्वयिपदार्थान्वय इत्यर्थः। **एकस्त्रिधेति**। हे देव! अत्रेदं चित्रं यदेकस्त्वं द्विषां चेतसि शौर्योष्मणा तापं तन्वन्, विदुषां चेतसि विनयेन सम्मदरसं तन्वन्, मृगीदृशाञ्च चेतसि लीलया रतिं तन्वन् एवंभूतस्त्रिधा वससीति यथासंख्यमन्वयः। चकारत्रयमत्र स्वस्वप्राधान्येन समुच्चयार्थः।(A)

(B)चतुर्विधमर्थान्तरन्यासालङ्कारमाह—**सामान्यं वेति**। **तदन्येनेति**। सामान्यान्येन विशेषेण सामान्यम्, विशेषान्येन सामान्येन विशेष इत्यर्थः। 'समर्थ्यते' उक्तधर्मवत्तयाऽमिथ्या क्रियते, विशेषे तद्धर्मवत्त्वादर्शनात् तत्सामान्ये उक्तः स धर्मो न मिथ्येत्येवं बोधविषयः क्रियते इत्यर्थः। तादृशसमर्थनेञ्च क्वचित् साधर्म्येण क्वचिद्द वैधर्म्येण

---

इति। तर्कवागीशास्तु—कार्यकारणविरुद्धसद्भावमुखेन कार्याभावकारणाभावोक्तौ विशेषोक्तिविभावनयोः शुद्धोदाहरणे। क्रमेण यथा—"धनिनोऽपि स्थिरस्वान्ता यौवने धर्मतत्पराः। अनात्मश्लाघिनः शूरा भूपाला रघुवंशजाः॥" अत्र स्थिरस्वान्तत्वमुन्मादविरुद्धं धर्मोपार्जनकारणं वार्द्धकं तद्विरुद्धं यौवनमित्याहुः। बालबोधिनीकारेण चोक्तम्—कारणाभावफलावचनयोः साक्षादुक्तौ यथाक्रमं विभावनाविशेषोक्ती स्फुटे इति। टीकाकारस्याप्यत्रैव स्वरस इति काव्यलक्षणप्रस्तावे 'यः कौमारहरः' (२१ पृः) इत्यस्यालङ्कारनिर्णयावसरे 'अनयोरस्फुटत्वञ्च कारणाभावफलाभावयोर्वाचकेन नञाऽनिर्देशा'दिति लेखेन प्रतिभाति।

(A) अत्र यथासङ्ख्यस्यालङ्कारत्वे विप्रतिपत्तिमुद्भावयन्नाहोद्द्योतकारः—यद्यपि कविप्रतिभानिर्मितत्वस्यालङ्कारताजीवातोर्लेशतोऽप्यभावादस्य नालङ्कारत्वं तथाऽप्येकत्र पद्ये बहूनां क्रमान्वये वैचित्र्यादलङ्कारत्वेनोक्त इति।

(B) चतुर्विधमिति। अष्टधाऽर्थान्तरन्यास इति दर्पणे विश्वनाथाः। एतन्मते कार्येण कारणसमर्थने कारणेन च कार्यसमर्थने काव्यलिङ्गमेवेति चतुर्विध एव स इति भावः।

साधर्म्येण वैधर्म्येण वा सामान्यं विशेषेण यत् समर्थ्यते विशेषो वा सामान्येन, सोऽर्थान्तरन्यासः। क्रमेणोदाहरणम्—

निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम्।
पश्यति पित्तोपहतः शशिशुभ्रं शङ्खमपि पीतम् ॥ ४७१ ॥

सुसितवसनालङ्काराया कदाचन कौमुदी-
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद् विधुः।
तदनु भवतः कीर्तिः केनाप्यगीयत येन सा
प्रियगृहमगान्मुक्ताशङ्का क नासि शुभप्रदः ॥ ४७२ ॥

गुणानामेव दौरात्म्याद् धुरि धुर्यो नियुज्यते।
असञ्जातकिणस्कन्धः सुखं स्वपिति गौर्गडिः ॥ ४७३ ॥

---

इत्याह—**साधर्म्येणेति**(A)। क्रमेणेति। सामान्यविशेषयोः साधर्म्येणादौ समर्थनं ततस्तयोर्वैधर्म्येण समर्थनम् इति क्रमेणेत्यर्थः।

**निजदोषेति**। निजदोषावृतमनसां स्थाने अतिसुन्दरमपि वस्तु विपरीतं भाति। एवकारोऽप्यर्थे। तदेव समर्थयति—पश्यतीति। अत्र दुष्टसामान्यस्य सुन्दरवस्तुन्यपि विपरीतदर्शनं सामान्यं पित्तदोषदुष्टविशेषस्य सुन्दरशङ्खे पीतत्वदर्शनरूपविपरीतदर्शन-विशेषेण समर्थितम्, तावतैव दुष्टसामान्यस्य सुन्दरे विपरीतदर्शित्वसामान्याऽमिथ्यात्वप्रतीतिः। तत्समर्थनञ्चात्र दोषवत्त्वेनोभयसाधर्म्येण।

सामान्येन विशेषसमर्थनं साधर्म्येणाह—**सुसितेति**। व्याख्यातमिदं दोषोल्लासे (३६७ पृ०)। अत्र रात्रिरूपकालविशेषे राज्ञोऽभिसारिकासुखप्रदत्वं कालसामान्ये राज्ञः सुखप्रदत्वेन समर्थितम्, तत्समर्थनञ्च रात्रिकालतदितरकालयोः सुखप्रदत्व-साधर्म्येण।

विशेषेण सामान्यसमर्थनं वैधर्म्येणाह—**गुणानामिति**। धुरि भारवहने। धुर्यो भारवहनसमर्थः। तस्य नियोजनञ्च तस्य तत्समर्थनिर्वलसत्त्वरूपगुणानामेव दौरात्म्यात्, दौरात्म्यञ्च दुःखजनककर्मप्रयोजकत्वात्। तादृशगुणाभावे तु न नियुज्यत

---

(A) दृष्टान्तादनुमानतश्चार्थान्तरन्यासं विविनक्त्युद्द्योतकारः—दृष्टान्ते [illegible] सामान्यं सामान्येन विशेषो विशेषेण समर्थ्यत इति ततो भेदः। साक्षाद् व्याप्त्यादेरनभिधाना[illegible]मानतो भेदः, कविनिबद्धप्रमात्रन्तरनिष्ठानुमितेरेवानुमानालङ्कारविषयत्वाच्च इति।

अहो हि मे बह्वपराद्धमायुषा यदप्रियं वाच्यमिदं मयेदृशम् ।
त एव धन्याः सुहृदः पराभवं जगत्यदृष्ट्वैव हि ये क्षयं गताः ॥४७४॥

(१६६) विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः ।

---

इत्यत आह—असंजातेति । असंजातः किणो वहनव्रणचिह्नं यत्र तादृशः स्कन्धो यस्य तादृशः सन् (A)गडिरलसो गौः सुखं स्वपिति, न तु केनापि नियुज्यत इत्यर्थः । अत्र धुरि नियुज्यमानत्वधर्मवत्तया उक्तस्य प्राणिसामान्यस्य धुर्यत्वविरोध्यात्मकगडित्वरूपवैधर्म्यवता गडिना गवा समर्थनम्, गडेर्धुरि नियोगाभावाधीनसुखस्वापेन गडित्वविधर्मिणो धुर्यप्राणिसामान्यस्य धुरि नियोगः सत्य इति प्रतीतेः ।

विशेषस्य सामान्येन समर्थनं वैधर्म्येणाह—अहो हीति । (B)अभिमन्युवधमर्जुने कथयिष्यतो युधिष्ठिरस्योक्तिरियम् । आयुषा अद्यापि सतेति शेषः । इदमप्रियम् अभिमन्युवधरूपम् । अत्र (C)वक्ष्यमाणाप्रियतयाऽधन्यो जनविशेषो युधिष्ठिरोऽदृष्टसुहृत्पराभवत्वाद् धन्यतया उक्तेन जनसामान्येन समर्थितः । मरणपर्यन्तमदृष्टसुहृत्पराभवत्वेन च वैधर्म्येण तत्समर्थनम् । अधन्यजनविशेषसमर्थनञ्च तद्विशेषणस्याधन्यत्वस्यैव समर्थनं तद्विधर्माणां धन्यत्वेन तदधन्यत्वस्यैवामिथ्यात्वप्रतीतेः(D) ।

दशविधं विरोधालङ्कारमाह—विरोध इति । 'यद्वचः' यस्य बोधनम् ।

---

(A) गडिरिति । गडिर्भारवहनसमर्थोऽप्यधूर्वहो दुष्ट इति ख-पुस्तकपाठान्तराज् ज्ञायते, गलिरिति पाठ उद्द्योतसम्मतः । य आसज्जितं युगं बलात् पातयति स गौर्गलिरिति तद्व्याख्यानञ्च ।

(B) सुहृदं प्रत्यप्रियं वदत उक्तिरियम् । अत्र हि यद्व यत इत्यादेः प्रतिपादकस्याभावे समर्थ्यसमर्थकभाव आर्थस्तत्सत्त्वे शाब्दः । ननु—

उपकारमेव तनुते विपद्गतः सद्गुणो नितराम् ।
मूर्छां गतो मृतो वा निदर्शनं पारदोऽत्र रसः ॥

इत्यत्र कोऽलङ्कार इति चेदयमेव, निदर्शनशब्दस्य समर्थकपरत्वात् । उपमाऽत्रालङ्कार इति कश्चित् । एतेनोदाहरणालङ्कारोऽयमतिरिक्त इत्यपास्तम् इत्युद्द्योतः ।

(C) वक्ष्यमाणेति, वक्ष्यमाणोऽप्रियो येन तस्य भावस्तत्ता तयेत्यर्थः ।

(D) कार्यकारणयोः समर्थ्यसमर्थकत्वेऽप्यर्थान्तरन्यासोऽलङ्कार इति यद् दर्पणकृतोक्तं तदस्य काव्यप्रकाशकृतो नाभिमतमित्युद्द्योतकृता स्पष्टीकृतम् । तथा च—कारणेन कार्यस्य कार्येण कारणस्य वा समर्थनन्तु काव्यलिङ्गस्य विषय इति बोद्धव्यम्, समर्थ्यसमर्थकयोः सामान्यविशेषभावसम्बन्धेऽयं, तदितरसम्बन्धे काव्यलिङ्गमित्युपगमादिति ।

**वस्तुवृत्तेनाविरोधेऽपि विरुद्धयोरिव यदभिधानं स विरोधः ।**

**(१६७) जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धा स्याद् गुणस्त्रिभिः ॥११०॥**
**क्रिया द्वाभ्यामपि द्रव्यं द्रव्येणैवेति ते दश ।**

**क्रमेणोदाहरणम्—**

**अभिनवनलिनीकिसलयमृणालवलयादि दवदहनराशिः ।**
**सुभग कुरङ्गदृशोऽस्या विधिवशतस्त्वद्वियोग[1]परिपाते ॥४७५॥**
**गिरयोऽप्यनुन्नतियुजो मरुदप्यचलोऽब्धयोऽप्यगम्भीराः ।**
**विश्वम्भराऽप्यतिलघुर्नरनाथ तवान्तिके नियतम् ॥ ४७६ ॥**

---

तस्य दशविधत्वमाह—**जातिरिति**। जात्याद्यैर्जातिगुणक्रियाद्रव्यैश्चतुर्भिः सह जातिर्विरुद्धा स्यादित्यर्थः। गुणस्तु गुणाद्यैस्त्रिभिरित्यर्थः। गुणस्य जात्या सह विरोधस्तु जातेर्गुणेन सह विरोधरूप एवेति पृथङ् नोक्तः। एवमुत्तरद्वयेऽपि पूर्वगणनाप्रविष्टत्यागेनैव गणनया क्रमशो ह्रासः।

तत्र जातेर्जात्या सह विरोधमुदाहरति—**अभिनवेति**। हे सुभग! विधिवशतस्त्वद्वियोगस्य परिपाते उपस्थितौ अभिनवनलिनीदलादिकं दवदहनराशिस्तापकत्वादित्यर्थः। अत्र नलिनीदलत्वादिजातेर्दवदहनत्वजात्या सहैकाधिकरण्येन विरोधभानम्, तापकत्वेनाऽऽरोपमात्राद्वास्तवत्वेन त्वविरोधः। (A)न च रूपकमेवेदं न विरोध इति वाच्यम्; विरुद्धशीततोष्णत्वव्याप्ययोरनयोर्जात्योर्विरोधभानस्यैव पुरःस्फूर्त्तिकत्वेन रूपकबाधनात्।

जातेर्गुणेन सह विरोधमाह—**गिरयोऽपीति**। गुणश्च जातिक्रियाभिन्नधर्ममात्रम् अभावसाधारणमेव, न तु वैशेषिकोक्तः। हे नरनाथ, तवान्तिके गिरयोऽपि नियत-

---

(A) उद्द्योतकारेणाप्यत्र विरोधमाशङ्कमानेन भङ्ग्यन्तरेणेत्थमेव समाधायि; यथा—नन्वेवमत्राऽऽरोपमूलं रूपकमेव, न विरोधः; अन्यथा मुखं चन्द्र इत्यत्रापि विरोध एव स्यादिति चेन्न; अत्र विरोधोत्थापनार्थमभेदस्य विवक्षितत्वेऽपि तस्यान्यार्थमुपादानेनाचमत्कारित्वात्, विरहिण्यवस्थायामत्यद्भुतत्वस्यात्र प्रतिपिपादयिषितत्वेन तदनुगुणतयाऽन्तर्गर्भितोऽप्यर्थो विरोध एव चमत्कारितया समुल्लसतीति तस्यैवालङ्कारत्वात्। मुखं चन्द्र इत्यादौ तु चन्द्रनिष्ठाह्लादकत्वादिसकलगुणानां मुखे प्रतिपत्त्यर्थं चन्द्राभेद एव चमत्कारी न तु सन्नपि विरोधः, विवक्षितार्थाननुगुणत्वात्, इति रूपकमेव न तु विरोधोऽलङ्कारः। यदि तु विरहिण्यवस्थाया अत्यद्-

---

1. '-पविपाते' इति मुद्रितपुस्तकेषु पाठः।

येषां कण्ठपरिग्रहप्रणयितां संप्राप्य धाराधर-
स्तीक्ष्णः सोऽप्यनुरज्यते च कमपि स्नेहं पराप्नोति च।
तेषां (A)सङ्गरनृत्यसक्तमनसां राज्ञां त्वया भूपते
पांशूनां पटलैः प्रसाधनविधिर्निर्वर्त्यते कौतुकम् ॥ ४७७ ॥

---

मनुन्नतियुजः, यशोविभूतिभिरुन्नतस्य तव ततोऽप्यौन्नत्याधिक्यात्। एवं मरुदपेक्षया बलवत्त्वात् अब्ध्यपेक्षया गाम्भीर्याधिक्यात्तेषामचलत्वादिकम्। अत्र (B)गिरित्वादि-जातेरौन्नत्याद्यभावरूपगुणैः सह विरोधभानम्, आपेक्षिकतदभाववत्त्वाच्चाविरोधः।

जातेः क्रियाविरोधमाह—**येषा**मिति। हे भूपते, येषां राज्ञां कण्ठपरिग्रहप्रणयितां कण्ठप्राप्तिवात्सल्यं संप्राप्य तव स तीक्ष्णोऽपि धाराधरः खड्गोऽनुरज्यते रक्तो भवति, कमपि स्नेहं रुधिरस्तिमितत्वं पराप्नोति प्राप्नोति। अथ च येषां कण्ठपरिग्रहात् तीक्ष्णस्य पुरुषस्यापि अनुरक्तता स्नेहप्राप्तिश्चेत्यनेन सुकुमारशरीरत्वमुक्तम्, तेषां राज्ञां सङ्गर-रूपनृत्यसक्तमनसां त्वया पांशूनां पटलैः प्रसाधनविधिर्भूषणविधिर्निर्वर्त्यत इतीदं कौतुकम्, सुकुमाराङ्गाणां नृत्यप्रसक्तानां चन्दनादिनैव प्रसाधनौचित्यात्। (C) अत्र

---

भुतत्वं न विवक्षितम् अप्यर्थश्च न गर्भीकृतः किन्तु पीडाजनकत्वाद्यतिशयमात्रम्, तदाऽत्र रूपकमेव। यदि वा नगरविशेषस्थितेरत्यद्भुतत्वविवक्षया अप्यर्थगर्भीकरणेन च 'यत्र नारीणां मुखं चन्द्र' इत्युच्यते तदा तत्र विरोध एवेति दिक् इति।

(A) सङ्गरसङ्गसक्तमनसामिति मुद्रितपुस्तकपाठः। तत्र सङ्गरसङ्गो युद्धप्राप्तिरित्यर्थः।

(B) गिरित्वादिजातेरिति। अत्राविशेषेण गिरित्वादिजातेरित्युक्तत्वात् प्रकारान्तरस्या-नुल्लेखाच्च 'विश्वम्भराऽप्यतिलघु'रित्यत्रापि विश्वम्भरात्वजातेरतिलघुत्वगुणेन सह विरोधो व्याख्यातु-रभिप्रेत इति प्रतिभाति। तत्र च विश्वम्भराया एकव्यक्तिवाचित्वाजातिवाचकत्वानुपपत्तेर्विश्वम्भरा-पदं योगार्थबलाच्चतुर्दशभुवनपरं मन्तव्यम् इति कश्चित्। वस्तुतस्तु—अग्रिमग्रन्थे क्रियाद्रव्य-विरोधोदाहरणे जलनिधित्वस्य जातित्वनिराकरणप्रस्तावे 'अब्धयोऽप्यगम्भीरा' इत्यस्यापि प्रकृते अलक्ष्यत्वमुट्टङ्कितम्। एवञ्च अविशेषेणोक्तावपि यथासम्भवमेवैतेषां लक्ष्यत्वमिति टीकाकृतो हृदयमवधेयम्। प्रदीपकारास्तु विश्वम्भरेति जात्युदाहरणमित्याहुः।

(C) अत्रेत्यादि। अन्यथैवात्र विरोधप्रसञ्जनं प्रदीपोद्द्योतसुधासागरकारादीनामभिमतम्। ते हि—अत्र धाराधरत्वजातेरनुरागस्नेहपराप्तिक्रियाभ्यां विरोधः लौहित्यचैक्कण्यार्थकत्वादविरोध इत्याहुः। तीक्ष्णत्वस्यानुरागेण विरोध इत्यपव्याख्यानम् अनुदाहरणत्वप्रसङ्गात्। तथा हि तीक्ष्णत्वं क्रूरत्वं तच्च क्रूरसंसर्गेण सरलेऽप्युत्पद्यते इति गुण एव न जातिरिति जातिविरोधासम्भवादिति सुधासागरकाराः।

सृजति च जगदिदमवति च संहरति च हेलयैव यो नियतम् ।
अवसरवशतः शफरो जनार्दनः सोऽपि चित्रमिदम् ॥ ४७८ ॥

सन्ततमुसलासक्ता बहुतरगृहकर्मघटनया नृपते ।
द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः ॥४७९॥

पेशलमपि खलवचनं दहतितरां मानसं सतत्त्वविदाम् ।
परुषमपि सुजनवाक्यं मलयजरसवत् प्रमोदयति ॥ ४८० ॥

क्रौञ्चाद्रिरुद्दामदृशदृढोऽसौ यन्मार्गणानर्गलशातपाते ।
अभून्नवाम्भोजदलाभिजातः स भार्गवः सत्यमपूर्वसृष्टिः(A) ॥४८१॥

---

चन्दनादिप्रसाध्यताव्याख्यायाः क्षत्रियत्वरूपराजत्वजातेः पांशुप्रसाधनक्रियाविरोधभानम् । मृतानां तथात्वात् प्रसाधनत्वारोपेण तदवास्तवत्वाच्चाविरोधः ।

जातेर्द्रव्यविरोधमाह—**सृजति** चेति । सर्वत्र तत्तद्द्रव्यतावच्छेदकधर्मस्य जातित्वबाधे तत्तद्द्रव्येण सह तादात्म्येन विरोधोऽवधेयः । यो जनार्दनो हेलयैव अयत्नेनैवेदं जगत् सृजत्यवति संहरति च, अवसरस्य समयस्य वशतः सोऽपि शफरः प्रोष्ठीमत्स्यरूप इतीदं चित्रमित्यर्थः । शफराकारत्वेन रोहितमत्स्यशावस्यैवात्र शफरत्वेनोक्तिः, 'अतो हरी रोहितमत्स्यरूपी'ति हरिवंशे रोहितमत्स्यत्वेनोक्तत्वात् । अत्र शफरत्वजातेर्जनार्दनेन द्रव्येण सह तादात्म्येन विरोधोऽपिकारेण दर्शितः । जनार्दनत्वन्तु न जातिः तदात्मनो नित्यतच्छरीरस्य वैकत्वात् । अवतारीयशरीरेषु तु न जनार्दनत्वमित्यभिप्रायः । अवतारविशेषत्वात् त्वविरोधः ।

गुणस्य गुणेन सह विरोधमाह—**सन्तते**ति । हे नृपते, सन्ततेत्यादिना पूर्वं कठिना द्विजपत्नीनां कराः, भवति त्वयि राज्ञि सति सरोजसुकुमाराः, भवता तेषां द्विजानां सम्पद्वर्द्धनेन दासीभिरेव कर्मकरणात् तासां कर्माकरणात् करकाठिन्यापगमात् । अत्र काठिन्यसौकुमार्ययोर्गुणयोर्विरोधभानम्, कालभेदात् त्वविरोधः ।

गुणस्य क्रियाविरोधमाह—**पेशलमपी**ति । सतत्त्व-तत्त्वयोः पर्यायः, तत्त्वविदामित्यर्थः । अत्र पेशलत्वगुण-दाहक्रिययोः परुषत्वगुण-प्रमोदनक्रिययोश्च विरोधभानम्, तत्तद्वचनस्वभावात् त्वविरोधः ।

गुणस्य द्रव्यविरोधमाह—**क्रौञ्चाद्रि**रिति । 'शातपाते' इति पाठे अनर्गलं शातं

---

(A) क्रौञ्चाद्रिरिति । 'अपूर्वसर्ग' इति पाठ उद्द्योतादिसम्मतः । अपूर्वः सर्गो रचना यस्य, यत्कर्तृको यत्कर्मको वा । शातपात इति, शातवद् वज्रवत् पाते सतीत्युद्द्योतः ।

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥४८२॥
अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः ।
क एवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः ॥ ४८३ ॥

---

छेदनं यस्य सोऽनर्गलशातः, तथा च क्वचिद् विशेषणस्य परनिपाताद् अनर्गलशातस्य यन्मार्गणस्य पाते सत्युद्दामदृशदृढोऽप्यसौ क्रौञ्चाद्रिर्नवाम्भोजदलवद्(A)अभिजातः कोमलोऽभूत् स (B)भार्गवो रामः सत्यं विधेरपूर्वा सृष्टिरित्यर्थः । 'अनर्गलपातशाते' इति पाठे तु यन्मार्गणानामनर्गलपाताधीनशाते छेदने निमित्तं कोमलोऽभूदित्यर्थः । अत्र क्रौञ्चाद्रित्वं न जातिः, एकमात्रव्यक्तिवृत्तित्वाद् गिरेश्चैत्रादेरिवावस्थाभेदाभावात्, अतः क्रौञ्चाद्रिणा द्रव्येण सह तादात्म्येनाभिजातत्वगुणविरोधभानम् । भार्गवस्य विलक्षणसामर्थ्येनाभिजातत्वारोपात् त्वविरोधः । अत्र दृढत्वाभिजातत्वगुणयोरपि विरोधोऽवधेयः ।

क्रियायाः क्रियया सह विरोधमाह—**परिच्छेदेति** । व्याख्यातमिदं पदैकदेश-व्यङ्ग्यरसध्वनौ (२०० पृ०) । अत्र (C)जडनतापनक्रिययोर्विरोधभानम्, क्रमशस्तदुभय-करणात् त्वविरोधः ।

क्रियाया द्रव्यविरोधमाह—**अयं वारामिति** । ताम्यन्तस्तिमिमकरा यस्यां पानक्रियायां तादृशं यथा स्यात्तथा मुनिरगस्त्य एनं जलनिधिमापास्यतीत्येवं को जानीते इत्यर्थः । पूर्वार्द्धन्तु स्पष्टार्थकम् । अत्र कर्मतासम्बन्धेन पानक्रियाया

---

(A) अभिजातः सुन्दरः 'अभिजातः स्मृतो न्याय्ये कुलीनप्राज्ञरूपयोरिति' विश्वप्रकाशात् । कोमलत्वरूपोऽर्थस्तु नवाम्भोजदलसाम्यालोचनया पर्यवसन्नः ।

(B) भार्गव इति । यद्यपि 'कुमारः क्रौञ्चदारणः' इति कोषात् स्कन्दे तत्त्वं प्रसिद्धम्, तथाऽपि स्कन्दसाहाय्यार्थं भार्गवोऽपि तत् कृतवानिति पुराणे प्रसिद्धमित्युद्द्योते द्रष्टव्यम् ।

(C) जडनेत्यादि । जडनं शीतलीकरणं तापनञ्च उत्तापजननमिति विरोधप्ररोहः । श्लेषाज्जडयतीत्यस्य सुखपारवश्यतापादनेन मोहयतीत्यर्थकरणात् तत्खण्डनम् ।

समदमतङ्गजमदजलनिस्यन्दतरङ्गिणीपरिष्वङ्गात् ।
क्षितितिलक त्वयि तटजुषि शङ्करचूडापगाऽपि कालिन्दी ॥४८४॥

(१६८) स्वभावोक्तिस्तु(A) डिम्भादेः स्वक्रियारूपवर्णनम् ॥१११॥

स्वयोः(B)स्तदेकाश्रययोः, रूपं वर्णः संस्थानं च । उदाहरणम्—

---

जलनिधिना द्रव्येण सह तादात्म्येन विरोधभानम्, तस्य पानासम्भवात्, मुनितपः-प्रभावात् त्वविरोधः । न च सप्तसमुद्रवृत्तित्वाज्जलनिधित्वं जातिरेवेति वाच्यम्, समुद्रत्वस्य तथात्वेऽपि योगार्थघटितस्य जलनिधित्वस्यातथात्वात् । न चैवम् 'अब्धयोऽप्यगम्भीरा इत्यत्र कथमब्धित्वजातेर्गुणविरोध उदाहृत इति वाच्यम्, तदपहाय गिरय इत्याद्यंश एव तदुदाहरणत्वात्, अब्धय इत्याद्यंशे (C)गुणद्रव्ययोरेव विरोधात् ।

द्रव्यस्य द्रव्येण सह विरोधमाह—**समदे**ति । हे क्षितितिलक, त्वयि तटजुषि सति शङ्करचूडापगा गङ्गाऽपि समदेत्यादितः कालिन्दी, मदजलनीलत्वात् । अत्र शङ्करचूडापगा-कालिन्द्योर्द्रव्ययोस्तादात्म्येन विरोधभानमपिकारेण रूपकबाधया कृतम्(D) । न च सीताऽलकनन्दादिना गङ्गावृत्तित्वाद् गङ्गात्वं जातिरेवेति वाच्यम्, गङ्गात्वस्य तथात्वेऽपि योगार्थघटितशङ्करचूडापगात्वस्यातथात्वात् ।

स्वभावोक्त्यलङ्कारमाह—**स्वभावे**ति । डिम्भः शिशुः । आदिग्रहणादकृत्रिम-क्रियारूपवन्मात्रपशुपक्ष्यादिपरिग्रहः । स्वपदमत्र स्वीयपरमिति व्याचष्टे—**स्वयो**रिति, स्वीययोरित्यर्थः । तस्यापि स्वीयमात्रयोरित्यर्थ इत्याह—**तदे**केति, तन्मात्रा-

---

(A) स्वभावोक्तिरिति । अत्र चमत्कृतिहेतुत्वमलङ्कारसामान्यलक्षणप्राप्तम्, तेन 'पश्य चायं बलीवर्दो घासमत्ति मुखेन तु' इत्यादेर्निरासः । साधारणस्वभाववर्णनस्य स्फुटत्वान्ना-लङ्कारत्वम् । असाधारणस्तु लोकसिद्धोऽपि प्रतिभामात्रवेद्यत्वादलौकिकवद्भातीत्यलङ्कारः । (डिम्भादेरिति) आदिना युवति-मुग्ध-कातर-तिर्यग्-भ्रान्त-हीन-पात्रादिसंग्रहः । एनामेव 'जाति'-रिति केचिद् व्यवहरन्ति । रूपपदेन वर्णादिसंग्रहश्चाजहत्स्वार्थलक्षणयेत्युद्द्योतकाराः ।

(B) तदेकाश्रययोरिति, तन्मात्राश्रययोरित्यर्थः । एतच्च डिम्भादेरित्यनेनैव तत्सम्बन्धाव-गतेरुक्तस्य स्वशब्दस्यान्ययोगव्यवच्छेदकत्वरूपाधिकफलकल्पनयेत्युद्द्योतकाराभिप्रायः ।

(C) गुणद्रव्ययोरिति । न च गुणद्रव्यविरोधस्तत्राप्राकरणिकः, जातिगुणयोः प्रकृतत्वादिति वाच्यम्, एकोदाहरणान्तःपातित्वेन तदुपादानस्याशक्यपरिहारत्वात्, प्रसङ्गत एव गुणद्रव्यविरोध-कथनम् । परम्—'यद्यपि जलनिधीनां बहुत्वेन न द्रव्यविरोधोदाहरणत्वमुचितं तथाप्येक-लवणाम्बुधिपरतया समर्थनीयम्' इति प्रदीपकारोक्त्या तु प्रागेव संशयः समुच्छिद्यत इत्यवधेयम् ।

(D) विरोधपरिहारस्तु कालिन्दीपदस्य श्यामाभामात्रपरतया कृतो वेदितव्यः

(A)पश्चादंघ्री प्रसार्य त्रिकमतिविततं द्राघयित्वाऽङ्गमुच्चै-
रासज्याऽऽभुग्नकण्ठो मुखमुरसि सटां धूलिधूम्रां विधूय ।
घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो
मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण॥४८८॥

(१६६) व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा ।

---

श्रययोरित्यर्थः । रूपपदार्थं व्याचष्टे—रूपमिति । (B)आदिपदग्राह्यस्य स्वक्रिया-वर्णनमुदाहरति—पश्चादिति । प्रातः शयनादुत्थितस्तुरङ्गः खुरेण क्ष्मां विलिखति । किं कृत्वा ? पश्चादङ्घ्री पश्चात्पादद्वयं त्रिकञ्च कटिदेशमतिविस्तृतं यथा स्यात्तथा प्रसार्येत्यर्थः । 'पृष्ठवंशाधरे त्रिकम्' इति कोषः । त्रिकमित्यत्र चार्थः पूरणीयः । तथा अङ्गम् उच्चैरतिशयं द्राघयित्वा दीर्घीकृत्य आभुग्नकण्ठः सन् उरसि मुखमासज्य । प्रोथतुण्डौ आष्ठाधरौ । ईदृशी क्रियाऽश्वस्यैव । वर्णे तूदाहरति दण्डी । यथा—

तुण्डैराताम्रकुटिलैः पक्षैर्हरितकोमलैः ।
त्रिवर्णराजिभिः कण्ठैरेते मञ्जुगिरः शुकाः ॥ इति । (२।१०)

संस्थाने तूत्तररामचरिते यज्ञीयाश्वं दृष्ट्वा लवस्योक्तिर्यथा—

पश्चात् पुच्छं वहति विपुलं तच्च धूनोत्यजस्रं
दीर्घग्रीवः स भवति खुरास्तस्य चत्वार एव ।
शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्रमात्रान्
आस्तामेतद् व्रजति स पशुर्दूरमेहोहि यामः(C) ॥

इत्यत्र विपुलपुच्छखुरचतुष्टयदीर्घग्रीवाः संस्थानानि । डिम्भक्रियावर्णने तु—

करारविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तम् ।
वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि(D) ॥ इति ।

व्याजस्तुत्यलङ्कारमाह—व्याजेति । मुखे आपाततो निन्दा स्तुतिर्वा । 'अन्यथा'

---

(A) त्रिकनतिविततमिति प्रदीपादिसम्मतः पाठः । चलत्प्रोथतुण्ड इति । चलन् प्रोथो नासा यत्र तादृशं तुण्डं यस्येत्यर्थस्तु ज्यायान् भाति, प्रोथशब्दस्य नासापर्याये कोषादौ दर्शनात् ।

(B) आदिपदग्राह्यस्येति, डिम्भादेरित्यादिपदेन लब्धस्य पशोरित्यर्थः । अत्र च मूलपद-ग्राह्यस्योदाहरणमपहाय किमित्यादिपदग्राह्यस्योदाहरणोपन्यासप्रयास इति न खल्ववगच्छामः ।

(C) 'किं व्याख्यातैर्व्रजति स पुन'रिति चतुर्थचरणे विशेषो मुद्रितोत्तररामचरिते ।

(D) करारविन्देनेति । करेण पादं संगृह्य मुखे निवेशनं शिशुस्वभाव इति स्वभावोक्तिः ।

व्याजेन व्याजरूपा वा स्तुतिः। क्रमेणोदाहरणम्—

हित्वा त्वामुपरोध[1]बन्ध्यमनसां मन्ये न मौलिः परो
लज्जा[2]मज्जनमन्तरेण न रमामन्यत्र संदृश्यते।
यस्त्यागं तनुषेतरां मुखशतैरेत्याऽऽश्रितायाः श्रियः
प्राप्य त्यागकृतावमाननमपि त्वय्येव यस्याः स्थितिः ॥४८६॥

---

(A)तद्विपरीता तु तयो रूढिर्व्यञ्जनया पर्याप्तिरित्यर्थः। ननु निन्दामुखेन स्तुतिर्भवत्येव व्याजस्तुतिः, स्तुतिमुखेन निन्दा तु व्याजनिन्दैव सा कथं व्याजस्तुतिरित्यतः संज्ञाया द्विविधं योगार्थमाह—(B)व्याजेनेति। यथासंख्यमिदमर्थद्वयम्।

हित्वा त्वामिति। अहं मन्ये त्वां राजानं हित्वा परो जन उपरोधबन्ध्यमनसां मौलिः प्रधानं नास्ति त्वमेव निरुपरोधतमः। तथा लज्जाया मज्जनं विलयो निर्लज्जत्वं रमां लक्ष्मीमन्तरेण न अन्यत्र संदृश्यते सैव निर्लज्जतमेत्यर्थः। यस्त्वं मुखशतैर्द्वारशतैरेत्याऽऽगत्याऽऽश्रितायाः श्रियस्त्यागमर्थिभ्यस्तनुषेतरां तथा त्यागकृतावमाननं प्राप्यापि यस्याः श्रियस्त्वय्येव स्थितिः, सततवर्द्धमानश्रीकत्वात्। अत्र निन्दामुखेन दातृत्वश्रीमत्त्वव्यञ्जनया स्तुतिः।

---

(A) तद्विपरीतेति। अयमंशः पर्याप्तिरित्यस्य विशेषणम्। तथा च—तयोः स्तुतिनिन्दयोस्तद्विपरीता तयोर्मुखे प्रतीयमानयोर्निन्दायाः स्तुतेश्च विपरीता—यत्र निन्दा तत्र स्तुतिर्यत्र स्तुतिस्तत्र निन्देत्येवंरूपा पर्याप्तिः पर्यवसानम्। सा च व्यञ्जनयेत्यर्थः। एवञ्च—मुखे निन्दावगतौ यद् व्यञ्जनया स्तुतौ पर्यवसानम्, स्तुतेर्वा मुखेऽवगमे निन्दायां पर्यवसानं सा व्याजस्तुतिरित्यर्थः। 'मुख इत्यनेन पर्यवसानाभावं वदन् बाधितत्वमभिप्रैति। अत एव नास्या ध्वनित्वम्। तत्र हि निर्बाधेन वाच्येन व्यञ्जनयाऽर्थान्तरावगतिः। न चैवं प्रकृते, बाधेन लक्षणाप्रसारात्; उपकृतं बहु नामेत्यादिवदिति बोध्यम्' इत्युद्द्योते व्याख्यातम्।

(B) मुद्रितपुस्तकेषु 'व्याजरूपा व्याजेन वा स्तुतिरि'ति पाठक्रमविपर्ययो वृत्तिग्रन्थस्य दृश्यते। स न युक्तिसहः 'क्रमेणोदाहरणम्' इति स्वोक्तिविरोधापत्तेः। तथा हि—वृत्तिकृता क्रमेणोदाहरणमित्युपक्रम्य स्तुतिपर्यवसायिन्या मुखे निन्दया घटिताया व्याजस्तुतेरुदाहरणमुक्तम्; तच्च निरुक्तपाठक्रमादरे न घटते। यच्चैतदनुपपत्तिभिया केनचित् 'क्रमेणेति कारिकाक्रमेण न तु वृत्तिक्रमेणेति व्याख्यातं तदपि यदृष्टं तल्लिखितमिति विवेकविश्रान्तमेव। तस्माद् 'व्याजेनेति' इति वृत्तेः प्रतीकग्रहणेन 'यथासंख्यमिदमर्थद्वयम्' इति च ब्रुवता जितं महेश्वरेणेति।

---

1. '-शून्यमनसाम्' इति क्वचित् पाठः। 2. '-वर्जनम्' इति पाठः क्वचित्।

हे हेलाजितबोधिसत्त्व वचसां किं विस्तरैस्तोयधे
नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः।
तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशो-
भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः॥ ४८७॥

(१७०) सा (A)सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम् ॥११२॥

---

स्तुतिमुखेन निन्दामाह—हे हेलेति। बोधिसत्त्वं बुद्धिमत्प्राणी, हे हेलाजिततत्क, (B)अतिबुद्धिमन्नित्यर्थः। हे तोयधे, वचसां विस्तरैः किं संक्षिप्तमेव ब्रवीमीत्यर्थः। परहितस्याऽऽधाने उत्पादने गृहीतव्रतः परो जनस्त्वत्सदृशो नास्ति त्वमेव तादृश इत्यर्थः। यद् यस्मात्तृष्यतां पान्थजनानाम् उपकारघटनायां वैमुख्येन लब्धस्यायशो-भारस्य प्रोद्वहनेन मरोर्निर्जलदेशस्य साहायकं सहायतां कृपया करोषि एकेनोह्य-मानस्य भारस्य द्वितीयेनापि वहनात् सहायता। (C)मरुणेव त्वयापि तृष्यतामुपकारो न क्रियते क्षारजलत्वादिति भावः। अत्र स्तुत्या परानुपकारकत्वेन निन्दापर्याप्तिः।

---

(A) सहोक्तिरिति। अत्र सहशब्दार्थः साहित्यमेकजातीयैककालिकक्रियाद्यन्वयित्वसम-नियतम्। 'पुत्रेण सहागत' इत्यत्र पुत्रप्रतियोगिकसाहित्यवानागत इति शाब्दबोधः। तेन पुत्रवृत्त्यागमनसमानकालिकसमानदेशागमनवान् पितेति मानसो बोधः। तत्र तृतीयान्तस्य विशे-षणतया गुणत्वं प्रथमान्तस्य विशेष्यतया प्रधानत्वम्। एवञ्च प्रथमान्ते आगमनस्य शाब्दोऽन्वयः, तृतीयान्ते तु सहार्थसामर्थ्यादार्थः। एवञ्च यत्र गुणप्रधानभावावच्छिन्नयोः शब्दार्थमर्यादयैकधर्म-सम्बन्धस्तत्रायमलङ्कारः। समुच्चये तूभयत्र प्राधान्यं शाब्द एव चैकान्वय इति ततो भेदः। 'चैत्रमैत्रौ सह गच्छतः' इत्यादावपि तथैवेति नायमलङ्कारः। हृद्यत्वं चालङ्कारसामान्यलक्षण-प्राप्तम्, तेन 'अनेन सार्द्धं विहराम्बुराशेः'—इत्यादौ नेयम्। हृद्यत्वं चास्याः श्लेषभित्तिकाभेदा-ध्यवसानात्मकेन केवलाभेदाध्यवसानात्मकेन वाऽतिशयेनानुप्राणने भवतीत्युद्द्योते स्पष्टम्।

(B) अतिबुद्धिमन्निति। एतच्च पथिकसाहायकपरिहारेण मरोरेव साहायकविधाने हेतु-गर्भविशेषणम्। बुद्धिमन्तो हि प्राणिनः स्वसदृशानां स्वस्मादधिकानां वोपकारं कुर्वन्ति न तु क्षुद्राणाम्, क्षुद्राश्च पान्थाः। तस्माद् युक्तमेवोदधेर्मरोः स्वसदृशस्य साहायकविधानम्। वस्तुतस्तु बोधिसत्त्वा बौद्धा इति कारुण्यातिशयोपोद्बलकं विशेषणं भवितुमुचितमित्याभाति।

(C) मरुणेवेति। तथा च मरूपकारकृतिरूपा स्तुतिस्तृषितपान्थानुपकारकरणनिन्दायां पर्यव-सन्नेति व्याजरूपा स्तुतिः। न चात्राप्रस्तुतप्रशंसैवास्तु [ इति वाच्यम् ] स्तुतिनिन्दात्मकतया विच्छित्तिविशेषात्, कार्यकारणभावादिसम्बन्धाभावाच्च, शुद्धव्यञ्जनाविषयत्वाभावाच्चेत्युद्द्योतः।

एकार्थाभिधायकमपि सहार्थबलाद् यद् उभयस्याप्यवगमकं सा सहोक्तिः। यथा—

सह दिअहणिसाहिँ दीहरा सासदण्डा
सह मणिवलयेहिँ वाहधारा गलन्ति।
तुह सुहअ विओए तीअ उव्विग्गिरीए
सह अ तणुलदाए दुब्बला जीविदासा॥ ४८८॥

श्वासदण्डादिगतं दीर्घत्वादि शाब्दम् दिवसनिशादिगतं तु सहार्थस्य सामर्थ्यात् प्रतिपद्यते।

(१७१) विनोक्तिः सा विनाऽन्येन यत्रान्यः सन्न नेतरः(A)।

क्वचिदशोभनः क्वचिच्छोभनः। क्रमेणोदाहरणम्—

अरुचिर्निशया विना शशी शशिना साऽपि विना महत्तमः।
उभयेन विना मनोभवस्फुरितं नैव चकास्ति कामिनोः॥४८९॥

---

सहोक्त्यलङ्कारमाह—सा सहोक्तिरिति। 'द्विवाचकं' इत्यन्वयि। एवं वृत्तावपि अभिधायकमित्यन्वय्यर्थकमेव। सह दिअहेति।

सह दिवसनिशाभिर्दीर्घाः श्वासदण्डाः
सह मणिवलयैर्वाष्पधारा गलन्ति।
तव सुभग वियोगे तस्या उद्वेगिन्याः(B)
सह च तनुलतया दुर्बला जीविताशा॥ इति संस्कृतम्।

श्वासदण्डा दण्डाकारा निश्वासाः, वाष्पधारा अश्रुधाराः। शाब्दमिति तुल्यविभक्तिकशब्दव्युत्पत्तिसिद्धमित्यर्थः। सहार्थस्य सामर्थ्यादिति, तृतीयान्त-प्रथमान्तयोरभेदान्वयबोधकत्वाव्युत्पत्तेर्दिवसनिशा दीर्घा इति बोधानुपपत्तेः।

विनोक्त्यलङ्कारमाह—विनोक्तिरिति। सन्नेति सन् शोभनो नेत्यर्थः। तद् व्याचष्टे—क्वचिदशोभन इति। नेतर इति, नाशोभन इत्यर्थः। तद् व्याचष्टे—क्वचिच्छोभन इति। (C)अरुचिरिति। महत्तमस्तमःस्वरूपैव न शोभनेत्यर्थः।

---

(A) विनोक्तिरिति। अत्रापि [ सहोक्तौ सहशब्दार्थवत् ] विनाशब्दार्थ एव विवक्षितः, तेन नञ्-निर्-वि-अन्तरेण-ऋते-रहित-विकलेत्यादिप्रयोगेऽपीयमेवेत्युद्द्योतः।

(B) उद्विग्नाया इति मुद्रितपुस्तकीया संस्कृतिः।

(C) अरुचिरिति दीप्तिहीनः। मनोभवस्फुरितमिति कामोद्रेकः कामविलास इति यावत्।

मृगलोचनया विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भः।
अमृतद्युतिसुन्दराशयोऽयं सुहृदा तेन विना नरेन्द्रसूनुः ॥४९०॥

(१७२) (A)परिवृत्तिर्विनिमयो योऽर्थानां स्यात् समासमैः ॥११३॥

परिवृत्तिरलङ्कारः। उदाहरणम्—

लतानामेतासामुदितकुसुमानां मरुदयं
मतं लास्यं दत्त्वा श्रयति भृशमामोदमसमम्।
लतास्त्वध्वन्यानामहह दृशमादाय सहसा
ददत्याधिव्याधिभ्रमिरुदितमोहव्यतिकरम् ॥ ४९१ ॥

अत्र प्रथमेऽर्धे समेन समस्य, द्वितीये उत्तमेन न्यूनस्य।

---

अत्राशोभनत्वमुक्तम्। शोभनत्वमाह—**मृगलोचनयेति**। नायिकाप्रसक्त्या दुष्ट-सुहृत्सङ्गाच्च दुर्वृत्तस्य स्वभावसद्वृत्तस्य राजपुत्रस्य वर्णनमिदम्। अयं नरेन्द्रसूनुर्मृगलोचनया विना विचित्रेत्यादितः प्रगल्भः तत्सङ्गादेवातथाभूत इत्यर्थः। एवं तेन सुहृदा विना अमृतद्युतीत्यादिस्तत्सङ्गादेवातथाभूत इत्यर्थः। अत्र शोभनः।

परिवृत्त्यलङ्कारमाह—**परिवृत्तिरिति**। **समासमैरिति**, समद्वयेन विषम-द्वयेन चेत्यर्थः। विनिमयालङ्कारत्वभ्रमं निरस्यति—(B)**परिवृत्तिरलङ्कार** इति।

**लतानामिति**। एतासामुदितकुसुमानां लतानां मतं सम्मतं लास्यं नृत्यं दत्त्वाऽयं मरुदसमं तुल्यान्तररहितं भृशमतिशयम् आमोदं श्रयति, लतास्तु अध्वन्यानां पथिकानां दृशं चक्षुरादाय अर्थात्तेभ्य आधिव्याध्यादीन् ददतीत्यर्थः। विरहिणः पथिकाः लता दृष्ट्वा चिन्ताव्याधियुक्ता भवन्तीत्यर्थः। **अत्रेति**, आमोदलास्ययोर्द्वयोरप्युपादेयत्वेन समत्वम्। **द्वितीये** इति, दृश (C)उपादेयत्वादाधिव्याध्यादीनान्त्वनुपादेयत्वात्।

---

(A) परिवृत्तिरिति। विनिमयो हि केनचिद् वस्तुना दत्तेन कस्यचित् परकीयस्याऽऽदानम्, विनिमयपदस्य तत्रैव शक्तेः। एवमादाय दानमपि सा। दानादानव्यवहारः कविकल्पित एव न वास्तवस्तत्रालङ्कारत्वाभावात्; तेन—'क्रीणन्ति यत्र मुक्ताभिर्बदराण्यपि बालिकाः' इत्यत्र नेयम्। परकीयस्येत्युक्ते—

'किमित्यपास्याऽऽभरणानि यौवने धृतं त्वया वार्द्धकशोभि वल्कलम्।'

इत्यत्र नेयम्, विनिमयाभावादिति प्रदीपोद्द्योतयोः स्पष्टम्।

(B) परिवृत्तिरिति। पूर्वाचार्याणामेषैव संज्ञा दृश्यते, न तु विनिमय इति भावः।

(C) उपादेयत्वादिति। एवञ्च उपादेयत्वादिकृत एव समासमव्यवहार इति ज्ञेयम्।

नानाविधप्रहरणैर्नृप संप्रहारे
स्वीकृत्य दारुणनिनादवतः प्रहारान् ।
दृप्तारिवीरविसरेण वसुन्धरेयं
निर्विप्रलम्भपरिरम्भविधिर्वितीर्णा ॥ ४९२ ॥

अत्र (A)न्यूनेनोत्तमस्य ।

( १७३ ) प्रत्यक्षा इव यद् भावाः क्रियन्ते भूतभाविनः ।
तद् भाविकम्—

भूताश्च भाविनश्चेति द्वन्द्वः । भावः कवेरभिप्रायोऽत्रास्तीति भाविकम् । उदाहरणम्—

आसीदञ्जनमत्रेति पश्यामि तव लोचने ।
भाविभूषणसम्भारां साक्षात्कुर्वे तवाकृतिम् ॥ ४९३ ॥

अत्र आद्ये भूतस्य द्वितीये भाविनो दर्शनम् ।

---

न्यूनेनोत्तमस्याऽऽह—**नानाविधेति**, हे नृप ! संप्रहारे युद्धे नानाविधप्रहरणैर्दारुणनिनादवतः प्रहारान् स्वीकृत्य दृप्तशत्रुसमूहेन इयं वसुन्धरा अर्थात्तुभ्यं वितीर्णा । वसुन्धरा कीदृशी? निर्गतोऽपास्तस्त्वया सह विप्रलम्भो वियोगो यस्य तादृशः परिरम्भविधिः सम्बन्धविधानं यस्यास्तादृशी । प्रहारेण मृतानां शत्रूणां पृथ्वी त्वया प्राप्ता, तया सह तव वियोगश्च न भविष्यतीत्यर्थः । अत्र प्रहारा अनुपादेयत्वेन न्यूनास्तैरुपादेयत्वेनाधिकाया वसुन्धराया विनिमयः ।

भाविकालङ्कारमाह—**प्रत्यक्षा इवेति** । 'क्रियन्ते' शब्देन स्वजन्यधीविषयाः क्रियन्ते । संज्ञाव्युत्पत्तिमाह—**भाव इति** । (B)अभिप्रायश्च प्रत्यक्षप्रायत्वबोधनवशाद् भूतभाविपदार्थस्याऽऽश्रयोत्कर्षविषयो बोध्यः । **आसीदिति** । यौवनोद्भेदाच् चक्षुष्यञ्जनं विनापि तच्छोभा, भूषणाभावेऽपि शरीरे तच्छोभा जातेत्यर्थः(C) ।

---

(A) न्यूनेनोत्तमस्येति । तथा च असमेनासमस्य विनिमयरूपा परिवृत्तिरपि द्विधा भवति, क्वचिन्न्यूनेनोत्तमस्य क्वचिदुत्तमेन न्यूनस्येति साकल्येन परिवृत्तिस्त्रिविधेति भावः ।

(B) अभिप्राय इति । अभिप्रायो लौकिकप्रत्यक्षविषयत्वेन प्रतिपादनेच्छेति तूद्द्योते ।

(C) अत्र पूर्वार्द्धे भूतस्याञ्जनस्य, उत्तरार्द्धे भाविनो भूषणसम्भारस्य प्रत्यक्षतयाऽभिधानमिति प्रदीपः । अत्रेदं चिन्तनीयम्—असम्बन्धे सम्बन्धरूपातिशयोक्त्यैव गतार्थोऽयम्, प्रत्यक्षा-

(१७४)—काव्यलिङ्गं हेतोर्वाक्यपदार्थता ॥ ११४ ॥

वाक्यार्थता, यथा—

वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे न प्रायः क्वचिदपि भवन्तं प्रणतवान् ।
नमन् मुक्तः संप्रत्यहमतनुरग्रेऽप्यनतिभाङ्
महेश क्षन्तव्यं तदिदमपराधद्वयमपि ॥ ४९४ ॥

अनेकपदार्थता, यथा—

प्रणयिसखीसलीलपरिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।

---

काव्यलिङ्गालङ्कारमाह--काव्यलिङ्गमिति । क्रियान्वयात् समाप्तत्वे वाक्यम्, तदनन्वयादसमाप्तत्वे पदम् । अयमेव हेत्वलङ्कारोऽपीति स्मर्त्तव्यम् ।

वपुरिति । हे पुरारे, अहं पुरा क्वचिदपि जन्मनि भवन्तं न प्रणतवान्, इदं वपुःप्रादुर्भावादनुमितम् । नमने सति मुक्तत्वेन वपुःप्रादुर्भावो न स्यादित्यर्थः । अग्रे भाविकालेऽप्यहमनतिभाक्, यतः संप्रति नमन्नेव मुक्तः सन् अतनुः, शरीरसाध्यत्वादेव नतेः । तत्तस्माद् हे महेश, इदं पूर्वापरकालयोरनमनादपराधद्वयमपि क्षन्तव्यम् । न चापराधस्य विहितनमनाकरणाधीनप्रत्यवायरूपत्वेन मुक्तौ सत्यां तदभावात् कथं क्षमाप्रार्थनमिति वाच्यम्, शास्तिकरणार्हतया ज्ञेयत्वस्यैवात्रापराधत्वात् । अत्र न प्रणतवानिति क्रियया समाप्तस्य वाक्यस्यार्थो(A)ऽनमनम् अपराधद्वये जनको हेतुः ।

पदार्थतायामुदाहर्त्तव्यायां पदस्यानेकत्वैकत्वभेदेन द्वैविध्यात् प्रथममनेकपदार्थतामाह—(B)प्रणयीति । मालतीं हन्तुमुद्यतमघोरघण्टं प्रति माधवस्योक्तिरियम् ।

---

सम्बन्धेऽपि तत्सम्बन्धवर्णनात्; भूतादिवस्त्वसम्बन्धेऽपि तत्सम्बन्धवर्णनाच्चेति । साऽनुप्राणिकाऽत्रेति कश्चिदित्युद्द्योतः ।

(A) अनमनमिति । यद्यप्यनमनमेवापराधस्तयोश्च न हेतुहेतुमद्भावस्तथाऽपि तदिदमित्यस्य, सर्वनाम्नां बुद्धिस्थपरामर्शकत्वाद् दुरितविशेषरूपमित्यर्थः । क्षन्तव्यमित्यस्य च लक्षणया नाशनीयमित्यर्थ इत्यदोष इत्युद्द्योतकाराः ।

(B) प्रणयीति नर्कुटकं छन्द इति क्वचित् ।

वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥ ४९५ ॥

एकपदार्थता, यथा—

भस्मोद्धूलन भद्रमस्तु भवते रुद्राक्षमाले शुभं
हा सोपानपरम्परां गिरिसुताकान्तालयालङ्कृतिम् ।
अद्याऽऽराधनतोषितेन विभुना युष्मत्सपर्या-सुखा-
लोकोच्छेदिनि मोक्षनामनि महामोहे निधीयामहे ॥४९६॥

(A)एषु अपराधद्वये पूर्वापरजन्मनोरनमनम्, भुजपाते शस्त्रोपक्षेपः, महामोहे सुखालोकोच्छेदित्वं च यथाक्रममुक्तरूपो हेतुः।

---

यद् वपुः प्रणयीत्यादिनाऽधिगतैः प्राप्तैः ललितशिरीषपुष्पहननैरपि ताम्यति, तत्र वपुषि वधाय शस्त्रमुपक्षिपतस्तव शिरसि ममैव भुजोऽकाण्डयमदण्ड इव पततु इत्यन्वयः। अत्र वधाय शस्त्रमुपक्षिपत इति क्रियाऽसमाप्त्या वाक्यतामनापन्नानां विभक्त्यन्तानेकपदानामर्थो भुजपाते जनको हेतुः।

एकपदार्थतामाह—भस्मेति। शिवभक्त्या मुमुक्षोः कस्यचिदुक्तिरियम्। भस्मना अङ्गेषु यदुद्गतधूलीकरणं तद् भस्मोद्धूलनम्, हे तादृश, भवते भद्रमस्तु त्वां नानुशीलयिष्यामीत्यर्थः। तथा हे रुद्राक्षमाले, तवापि शुभमस्तु। गिरिसुताकान्तस्य महेशस्याऽऽलये अलंकृतिभूतां सोपानपरम्परां हा शोचामीत्यर्थः। कुत इत्यत्राह—अद्येति। युष्माकं सपर्यया अनुशीलनेन यः सुखालोकः सुखानुभवस्तदुच्छेदिनि मोक्षनामनि महामोहे वयमद्याऽऽराधनतोषितेन विभुना महेशेन निधीयामहे पात्यामहे, अतः शरीरसाध्यं युष्मदनुशीलनं न स्यादित्यर्थः।

अत्र मोक्षस्य महामोहत्वे युष्मत्सपर्यासुखालोकोच्छेदित्वं समासैकपदार्थो हेतुः। ननु मोक्षस्य महामोहत्वमवास्तवमेवाऽऽरोपितम्, अतोऽजन्यस्य तस्य कथं सुखालोकोच्छेदित्वं जनको हेतुः, अलीकस्याजन्यत्वात्, ज्ञापकहेतुश्च नायमलङ्कार इत्युत्तरालङ्कारे (५७७पृ०) स्वयमेव वक्ष्यमाणत्वात्। तत्र हि प्रतिवचनस्य प्रश्नहेतुत्वाशङ्कायां वक्ष्यति—'न हि प्रश्नस्य प्रतिवचनं जनको हेतु'रिति (५७८पृ०) चेत्, सत्यम्; मोक्षस्य

---

(A) एष्विति, उक्तोदाहरणत्रये। उक्तरूप इति यथाक्रमं वाक्यार्थरूपोऽनेकपदार्थरूप एकपदार्थरूपश्चेति भावः।

(१७५) पर्यायोक्तं विना वाच्यवाचकत्वेन यद् वचः ।

वाच्यवाचकभावव्यतिरिक्तेनावगमनव्यापारेण यत् प्रतिपादनं तत् पर्यायेण भङ्ग्यन्तरेण कथनात् पर्यायोक्तम् ।

---

महामोहत्वोक्तावेवात्र सुखालोकोच्छेदित्वं जनकहेतुर्बोध्यः, स्वज्ञानद्वारा तथात्वात् । यत्तु महामोहत्वे सुखालोकोच्छेदित्वं हेतुरिति अग्रे ग्रन्थकृल्लिखनम्, तस्यापि महामोहत्वोक्तावित्येवार्थो बोध्यः । उच्यमानार्थस्य प्रतिवचनस्य तु प्रश्नाजनकत्वान्नैतदलङ्कारत्वमित्यभिप्रायः । यद्वा महामोहत्वमिव तस्य सुखालोकोच्छेदित्वमप्यारोप्यमाणमादायैवात्र जनकहेतुत्वम् । यथासंख्यमेवूदाहरणेषु हेतून् ग्राहयति—ए ष्विति(A) ।

पर्यायोक्त्यलङ्कारमाह—**पर्यायेति** । **यदिति** । वाच्यमेव यद् वस्तु वाच्यवाचकत्वेन विना अर्थाद् व्यञ्जनया प्रतिपाद्यत इत्यर्थः । अत्र चानेकार्थशब्दार्थत्वाभावे सतीति बोध्यम्, तेन प्रकरणादिनियन्त्रितैकार्थस्यानेकार्थशब्दस्य व्यङ्ग्ये तद्द्वितीयार्थे नातिव्याप्तिः । (B)न च कथं वाच्यार्थस्य व्यञ्जनया प्रतिपादनमिति वाच्यम्, प्रत्ययार्थ-

---

(A) काव्यलिङ्गार्थान्तरन्यासयोर्विषयविवेकश्चेत्थम्—अर्थान्तरन्यासे तटस्थतयोपनिबद्धस्य हेतुत्वे पर्यवसानम्, इह तु साक्षादेव हेतुविभक्त्यादिना हेतुतयोपनिबद्ध इति ततो भेद इति प्रदीपः । व्याख्यातञ्चोद्द्योते—"इह तु साक्षादेवेति, तत्तत्पदार्थनिरूपितहेतुतयोपनिबद्ध इत्यर्थः । हेतुविभक्त्यादिनेति क्वाचित्कोऽपपाठः, गम्यमानहेतुत्वकस्यैव हेतोः सुन्दरत्वेन प्राचीनैः काव्यलिङ्ग[ङ्गत्वा]भ्युपगमात् । अत एव वपुःप्रादुर्भावादनुमितमित्यंशे नायमलङ्कार इत्याहुः । सामान्यविशेषभावसम्बन्धानालिङ्गितत्वेन ततो भेद इत्यन्ये । केचित्तु निर्हेतुरूपदोषाभावः काव्यलिङ्गम्, हेतुहेतुमद्भावस्य वस्तुसिद्धत्वेन कविप्रतिभानिर्वर्त्यत्वाभावात् तत्प्रयुक्तचमत्काराभावेनास्यालङ्कारताया दुरुपपादत्वाच्च । श्लेषादिसंमिश्रणेऽपि तत्कृत एव चमत्कारो नैतत्कृत इत्याहु"रिति ।

(B) न च कथमिति । जाग्रति प्रमाणद्वयसंवादन्याये, जाग्रत्यां च 'प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिका' इति सूक्तौ यद्यपि वाच्यार्थस्य व्यञ्जनया प्रतिपादनं तद्रसिकानां नास्वारसिकं तथाप्यभिधया प्रतिपन्नस्यार्थस्य व्यञ्जनया प्रतिपादनं पिष्टपेषणमित्याशङ्काग्रन्थार्थः । प्रदीपकृदपि 'न चैवं प्रतिपन्नस्यैव प्रतिपत्तिरफलेति किं व्यापारद्वयेने'ति ग्रन्थेनैवं समशयिष्ट । परमाशङ्काग्रन्थस्यैदम्पर्यमात्रत्वे वृत्तावेव तत्समाधानस्योक्तत्वादफलं टीकाकृतः प्रयत्नान्तरमित्यन्यथैवेदानीं प्रश्नार्थश्चिन्त्यते । तच्चेत्थम्—ननु

'स्याद् वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा ।

वाच्यादयस्तदर्थाः स्युः......'

उदाहरणम्—

यं प्रेक्ष्य चिररूढाऽपि निवासप्रीतिरुज्झिता।
मदेनैरावणमुखे मानेन हृदये हरेः ॥ ४९७ ॥

अत्रैरावणशक्रौ मदमानमुक्तौ जाताविति व्यङ्ग्यमपि शब्देनोच्यते, तेन यदेवोच्यते तदेव व्यङ्ग्यम्, यथा तु व्यङ्ग्यं न तथोच्यते; यथा—गवि शुक्ले चलति दृष्टे 'गौः शुक्लश्चलति' इति विकल्पः, यदेव दृष्टं तदेव विकल्पयति(A) न तु यथा दृष्टं तथा; यतोऽभिन्नासंसृष्टत्वेन दृष्टं भेदसंसर्गाभ्यां विकल्पयति।

---

घटितसंसर्गेण (B)वाच्यार्थस्य बाधेन संसर्गान्तरेण वाच्यार्थस्यैव व्यञ्जनया प्रतिपादनात्। अवगमनव्यापारेणेति, व्यञ्जनयेत्यर्थः। संज्ञाव्युत्पत्तिमाह—तत् पर्यायेणेति। 'भङ्ग्यन्तरं' विभिन्नाकारकतया प्रत्यायनम्।

यं प्रेक्ष्येति। यं राजानं प्रेक्ष्य ऐरावणमुखे मदेन हरेरिन्द्रस्य हृदये च मानेन अभिमानेन चिररूढाऽपि निवासप्रीतिरुज्झिता इत्यर्थः, त्रासेन मदशोषात् पराजितत्वेनाभिमानत्यागाच्च। अत्र मदमानयोरचेतनयोः प्रीतित्यागबाधाद् व्यञ्जनयाऽन्यसंसर्गेण प्रतिपाद्यमानं वाच्यार्थमाह—अत्रेति। प्रीतिकर्मकता हि मदमानत्यागस्य कर्मविहित-क्त-प्रत्ययार्थघटिता, ऐरावणशक्रकर्मकता तु व्यङ्ग्यः संसर्गः। मदमानैरावणशक्रास्तु वाच्या अपि व्यङ्ग्यसंसर्गेण व्यङ्ग्या इत्यर्थः। तदाह—व्यङ्ग्यमपीति। व्यङ्ग्यवाच्ययोरेकत्वमेव, संसर्गमात्रस्य तु भेद इत्याह—तेन यदेवेति। यथेति, येन संसर्गेणेत्यर्थः। तथेति, तेन संसर्गेणेत्यर्थः। एवमेकस्मिन् विषये उत्तर-

---

इत्युक्तत्वात् कथं वाच्यार्थस्य व्यञ्जनया प्रतिपादनं तस्य वाचकशब्दार्थत्वात्, व्यञ्जकशब्दार्थस्य च व्यङ्ग्यत्वादित्याशङ्काग्रन्थार्थः, तथात्व एवोत्तरमपि सुसमञ्जसं स्यादिति।

(A) न तु यथा दृष्टमिति। निर्विकल्पके शुक्लतदाश्रयगोत्वतदाश्रयचलनतदाश्रया विशकलिता (असंसृष्टाः) भासन्ते, सविकल्पके तु संसृष्टतयेत्यर्थः, निर्विकल्पकस्य विशिष्टधीहेतुत्वादिति भावः। यद्वा निर्विकल्पके किञ्चित्त्वेन वस्तु भासते सविकल्पके तु तत्तन्नामरूपजात्यादिप्रकारेणेति 'न तु यथे'त्यादेरर्थ इत्युद्द्योतः।

(B) वाच्यार्थस्य बाधेनेति। एतच्च न व्यञ्जनाग्राहकम्, व्यञ्जनायां वाच्यार्थबाधस्यानौपयिकत्वात्। शब्दप्रतिपाद्यस्तु अर्थाभास एव नार्थ इत्येवं बोधयितुं तदुपात्तमिति ज्ञेयम्। एवञ्च वाच्यार्थस्येति वाच्यार्थाभासस्येत्यर्थः। एवमुत्तरत्र 'प्रीतित्यागबाधा'दित्यत्राप्येवमेवार्थः।

(१७६) उदात्तं वस्तुनः सम्पत्—

सम्पत् समृद्धियोगः। यथा—

मुक्ताः (A)केलिविसूत्रहारगलिताः सम्मार्जनीभिर्हृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालांघ्रिलाक्षारुणाः।
दूराद् दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुका
यद्विद्वद्भवनेषु भोजनृपतेस्तत् त्यागलीलायितम् ॥४९८॥

---

ज्ञानासमानप्रकारकं पूर्वज्ञानमुक्त्वा तत्र दृष्टान्तयते—यथा गवीति। दृष्टे (B)निर्विकल्पकेनावगते 'विकल्पः' सविकल्पकज्ञानम्। यदेवेति सामान्योक्त्या नपुंसकत्वम्। स एव दृष्टो गौर्निर्विकल्पकेन गृहीत इत्यर्थः। 'विकल्पयति' सविकल्पेन गृह्णाति। न तु यथा दृष्टमिति। अत्र था-प्रत्ययार्थः प्रकारोऽविवक्षितः, निर्विकल्पकस्य निष्प्रकारकत्वात्, किन्तु यादृशं दृष्टमित्येवार्थः। विविच्यैतद् दर्शयति—अभिन्नेति। न च निर्विकल्पकेनाभिन्नत्वाद्यग्रहादिदमनुपपन्नमिति वाच्यम्, वाक्यार्थानवगमात्। अत्र हि आङ्पूर्व एव संसृजतिः, तथा च भिन्नश्च तदासंसृष्टश्चेति भिन्नासंसृष्टम्, तथात्वेनादृष्टमित्यर्थो नञर्थस्य पश्चादन्वयेन बोध्यः। अ-शब्द एवात्र नञ्समानार्थोऽसमासस्थ एव, अतस्तस्य दृष्टमित्यत्रान्वयो नानुपपन्नः। तथा च निर्विकल्पकेनैव गृहीतं भेदसंसर्गाभ्यां विकल्पयति, सविकल्पकेन पुरुषो गृह्णातीत्यर्थः(C)।

उदात्तालङ्कारमाह—उदात्तमिति। वस्तुसमृद्धिव्यञ्जनमित्यर्थः। मुक्ता इति। विद्वद्भवनेषु संमार्जनीभिः प्रातर्हृताः प्राङ्गणसीम्नि मुक्ता यत् केलीशुका दूरात् कर्षन्ति भोजनृपतेस्त्यागलीलायितं त्यागलीलैव तत् इत्यर्थः, भोजनृपतिना विद्वद्भ्यो बहु-

---

(A) केलिविसूत्रेति। केलौ क्रीडायां विसूत्राश्छिन्नसूत्रा ये हारास्तेभ्यो गलिताः। मन्थरेति। मन्थरं चलन्ती या बाला षोडशवर्षा तस्या अङ्घ्रिलाक्षया अरुणाः।

(B) निर्विकल्पकेनेति। विशेषणविशेष्यभावसम्बन्धानवगाहि ज्ञानं निर्विकल्पकम्। सविकल्पकञ्च तद्विपरीतं विशेषणविशेष्यभावसम्बन्धावगाहीत्यर्थः।

(C) पर्यायोक्तस्य लक्षणान्तरमुत्थाप्य तत्खण्डनमुखेनोक्तमुद्द्योतकृद्भिः—"यत्तु-

पर्यायोक्तं तदप्याहुर्यद् व्याजेनेष्टसाधनम्।
शुकं भोजयितुं यामि युवाभ्यामास्यतामिह॥

अत्र नायिकां नायकेन सङ्गमय्य शुकभोजनव्याजेन निर्गच्छन्त्या सख्या तत्स्वाच्छन्द्यरूपेष्टसाधनं पर्यायोक्तमिति, तत्तु ध्वनिमर्यादां नातिशेत इति दिक्। एवञ्च—'अनायि देशः कतमस्त्वयाऽद्य वसन्तमुक्तस्य दशां वनस्य' (नैषधीयचरितम् ८।२९) इत्यत्राप्येवमेव" इति।

(१७७)—महतां चोपलक्षणम् ॥ ११५ ॥

उपलक्षणम् अङ्गभावः, अर्थादुपलक्षणीयेऽर्थे। उदाहरणम्—

तदिदमरण्यं यस्मिन् दशरथवचनानुपालनव्यसनी।
निवसन् बाहुसहायश्चकार रक्षःक्षयं रामः ॥ ४९९ ॥

न चात्र वीरो रसः, तस्येहाङ्गत्वात्।

(१७८) [(A)]तत्सिद्धिहेतावेकस्मिन् यत्रान्यत् तत्करं भवेत्।
समुच्चयोऽसौ,

---

मुक्तादानात्। मुक्तानां प्रातः सम्मार्जनीभिर्हरणमुपपादयति—केलिविसूत्रेति। केलिशुकानामुत्कर्षणमुपपादयति—दाडिमबीजेति। तेषां दाडिमबीजशङ्कामुपपादयति—मन्थरेति, लाक्षाया आर्द्रत्वेन धूलिसम्पर्कवारणाय नितम्बगौरवाच्च मन्थरचलनम्। अत्र मुक्तानामीदृशानादरः समृद्धिव्यञ्जकः।

अन्यविधमुदात्तालङ्कारमाह—महताञ्चेति। व्याचष्टे—उपलक्षणमिति। 'अङ्गभावः' सम्बन्धिता। उपलक्षणीय इति, व्यङ्ग्य इत्यर्थः। तथा च व्यङ्ग्यवस्तुनो महत्त्वस्योपलक्षणीयस्य व्यञ्जको महतां सम्बन्ध इत्यर्थः। (B) तदिदमिति। अरण्यमत्र पञ्चवटीवनम्। रक्षःक्षयं खरदूषणादिराक्षसनाशम्। अत्र [1]'व्यङ्ग्यवस्तुनोऽरण्यमहत्त्वस्य व्यञ्जिका महतो रामस्य सम्बन्धिता। अत्र वीररसध्वनित्वमाशङ्क्ते—न चात्रेति। तस्येहाङ्गत्वादिति, [2]रामस्य वीरत्वेनारण्यमहत्त्वस्यैव व्यञ्जनया पर्यापणादित्यर्थः[2]*, अरण्यस्यैव प्रकृतत्वात्। [3]अत एवात्र नापराङ्गत्वमपि, अरण्यमहत्त्वपर्यापणेनोदात्तालङ्कारस्यैव विषयत्वात्[3]*।

समुच्चयालङ्कारमाह—तत्सिद्धीति। प्रस्तुतस्येति प्रस्तुतकार्यस्येत्यर्थः।

---

(A) अत्राऽऽहुः प्रदीपकाराः—तत्सिद्धिहेतौ तस्य प्रस्तुतस्य कार्यस्य साधके। समाधावतुल्यकक्षयोः कारणयोरुपादानम् अत्र तु तुल्यकक्षयोरिति विशेष इति। विवेचितञ्चैतदुद्द्योते—'समाधौ हि एकेन कार्ये निष्पाद्यमाने अन्येनाकस्मादापतता सौकर्यादिरूपातिशयसम्पादनम्, अत्र तु एककार्यसम्पत्तौ सर्वेषां 'खले कपोत'न्यायेन पातः; कार्यस्य च न कोऽप्यतिशय इति भावः। काव्यलिङ्गे हेतुत्वमात्रं विवक्षितम्, न तु हेतुना गुणप्रधानभावस्यैकत्वानेकत्वस्य वा चिन्ता; अत्र तु एकस्यैव तत्कार्यकारित्वे अन्येषां साहाय्यमात्रमिति ततो विशेष' इति।

(B) पुष्पकविमानस्थस्य लक्ष्मणस्याङ्गदं प्रतीयमुक्तिरित्युद्द्योतः।

---

1. 'वाच्यवस्तुनोऽरण्यस्य' इति ग-पुस्तकपाठः। 2. 'उदात्तालङ्कारघटकस्वीयस्थायिभावाश्रयरामव्यवधानेनाङ्गत्वात्' इति ख-पाठः। 3. 'न चैवमपराङ्गत्वमेवेति वाच्यम्, वीरतया जनितस्य राममहत्त्वस्य निर्वाहकाङ्गत्वेनापराङ्गत्वाभावात्, अङ्गप्रकर्षकाङ्गस्यैवापराङ्गत्वात्' इति क-पाठः।

तस्य प्रस्तुतस्य कार्यस्य एकस्मिन् साधके स्थिते साधकान्तराणि यत्र सम्भवन्ति स समुच्चयः। उदाहरणम्—

दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽत्युत्सुकं
गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्मलम्।
स्त्रीत्वं धैर्यविरोधि मन्मथसुहृत् कालः कृतान्तोऽक्षमो
नो सख्यश्चतुराः कथं तु विरहः सोढव्य इत्थं शठः(A) ॥ ५०० ॥

अत्र विरहासहत्वं स्मरमार्गणा एव कुर्वन्ति, तदुपरि प्रियतम-दूरस्थित्यादि उपात्तम्। एष एव समुच्चयः सद्योगेऽसद्योगे सद-सद्योगे च पर्यवस्यतीति न पृथग् लक्ष्यते। तथा हि—

---

सम्भवन्तीति, उक्त्या सम्भवन्तीत्यर्थः। दुर्वारा इति। शठो दुःखदायित्वेन खलो विरहः इत्थं हेतुभ्यः कथं नु सोढव्यः। असहनहेतूनाह—दुर्वारा इति। [1]'तत्सत्त्वेऽपि पतिसान्निध्ये सुप्रापे सोढव्य इत्यत आह—प्रियतम इति'*। ननु मनसि धैर्यमवलम्ब्यतामित्यत्राऽऽह—मनोऽत्युत्सुकमिति, अनिवार्यमित्यर्थः। प्रेमत्यागोऽपि न सम्भवतीत्याह—गाढमिति। प्रेमगाढत्वेऽपि जरती विरहं सहत एवेत्यत्राऽऽह—नवं वय इति। एतादृशदुःखात् प्राणत्यागोऽपि न सम्भवतीत्याह—अतिकठिना इति। विषभक्षणादिसाहसादात्महत्याऽपि न शक्या इत्याह—कुलमिति। अत्युत्सुके मनसि यत्नाद् धैर्यमवलम्ब्यतामित्यत्राऽऽह—स्त्रीत्वमिति। स्त्रीणामपि कालविशेषे धैर्यं स्यादेवेत्यत्राऽऽह—मन्मथेति। दैवानुकूल्ये सर्वमिदमकिञ्चित्करमित्यत्राऽऽह—कृतान्त इति। कृतान्तो दैवम्। 'कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु' इति कोषात्। (B)अक्षम आनुकूल्याक्षमः प्रातिकूल्ये क्षमारहितो वा। ननु सखिप्रयुक्तैरुपचारैर्विरहः सह्यतामित्यत्राऽऽह—नो सख्य इति। सद्योग इति। [2]'कारणानामुपादेयवस्तुरूपत्वे सद्योगस्तेषामनुपादेयवस्तुरूपत्वेऽसद्योगस्तदुभयमिश्रणे तु सदसद्योगः'*।

---

(A) मयूरसूनोः शङ्कवर्णस्य पद्यमिदमिति शार्ङ्गधरपद्धतौ स्पष्टम् इति क्वचित्, स्वं प्रति विधिं प्रति वा काचिद् वदतीति वक्तृबोद्धव्यनिर्देशप्रकार उद्द्योतीयः।

(B) अक्षम इति मारणे इत्युद्द्योतः।

---

1. अयमंशो ग-पुस्तके नास्ति। 2. 'साधकानां सतां शोभनानाम् असताम् अशोभनानां मिश्रितानां तेषाञ्च योग इत्यर्थः' इति ख-पाठः।

कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतिशालिनी
भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम् ।
प्रकृतिसुभगा ह्येते भावा अमीभिरयं जनो
व्रजति सुतरां दर्पं राजंस्त एव तवाङ्कुशाः ॥ ५०१ ॥

अत्र सतां योगः । उक्तोदाहरणे त्वसतां योगः ।

शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥ ५०२ ॥

(A) अत्र शशिनि धूसरे शल्ये शल्यान्तराणीति शोभनाशोभनयोर्योगः ।

---

कुलमिति । स्फीता उद्वेगरहिता । अयं संसारी यो जनस्त्वद्भिन्नः । दर्पमहङ्कारम् । (B)अङ्कुशा दर्पनिवारकाः । अत्रेति । 'सताम्' इति, उपादेयत्वात् । उक्तोदाहरणं दुर्वारा इत्यादिकम्, तेषामसत्त्वं दुःखदायकत्वेनानुपादेयत्वात् ।

सदसद्योगे त्वाह—शशीति । मे मम मनसि सप्तैव शल्यानि दुःखदायकानि । किं किमित्याह—शशीति । गलितयौवनाऽपि कामिनी कामाकुला । प्रभुरपि धनपरायणः । नृपाङ्गणगतोऽपि खलः परापकारी । एते त्रयः स्वाधीनदोषदुष्टत्वेन द्वेष्यत्वादशोभनाः । अन्ये तु दैवाधीनदोषदुष्टाः शोच्यत्वेन शोभनाः । एषां योग इत्याह—(C)शोभनाशोभनयोरिति ।

---

(A) अत्रेति वृत्तिः । धूसरशशित्वरूपे शल्ये मनःक्षोभकरे हेतौ सत्येव शल्यान्तराणि गलितयौवनत्वादीनि हेतवोऽपि क्षोभकरत्वेनोपात्ता इत्यर्थः । उक्तमुदाहरणचन्द्रिकायाम्—अत्र शशिनः स्वतः शोभनस्यापि दिवसधूसरत्वादशोभनत्वेन शोभनाशोभनरूपस्य तादृशैरेव [शोभनाशोभनैः] कामिनीप्रभृतिभिः समुच्चय इति ।

(B) अङ्कुशा इति । यान्येव कुलानाममलिनत्वादीनि अन्येषामविनीतानां दर्पं जनयन्ति तान्येव तव दर्पाभावे कारणानीति महदाश्चर्यमिति भावः । एतत्पद्यस्मारितं पद्यान्तरं यथा—

विद्या विवादाय धनं मदाय शक्तिः परेषां परिपीडनाय ।
खलस्य साधोर्विपरीतमेतज् ज्ञानाय दानाय च रक्षणाय ॥ इति ।

(C) शोभनाशोभनयोरिति । एतच्चिन्त्यम्—एवं सति सहचरभिन्नत्वरूपार्थदोषेणालङ्कारता

## (१७६)—स त्वन्यो युगपद् या (A)गुणक्रियाः ॥११६॥

### गुणौ च क्रिये च गुणक्रिये च गुणक्रियाः।

---

अन्यविधं समुच्चयमाह—स त्वन्य इति। युगपदिति, एककालवृत्तित्वेन निर्दिष्टा इत्यर्थः। गुणश्च विशेष्यस्य धर्ममात्रं क्रियाभिन्नम्, न तु वैशेषिकोक्तः, न वा विशेष्यः।

---

न स्यात्, एवं विशेष्यस्य शोभनत्वं विशेषणस्य त्वशोभनत्वमिति प्रक्रान्तम्, इह तु विशेष्यस्याशोभनत्वमिति प्रक्रमभङ्गो वा। एवञ्च नृपाङ्गणगतः खल इत्यत्र नृपाङ्गणगतत्वेन शोभनत्वं खलत्वेन चाशोभनत्वमिति समर्थनेऽपि सहचरभिन्नत्वात्तदंशमुपेक्ष्यैवालङ्कारोदाहरणता प्रामाणिकैरुक्ता। तस्मादत्र 'नृपाङ्गणमसद्युतम्' इति पाठो युक्तः, सदसदिति च कर्मधारयो युक्तः, शश्यादीनां सहजकान्तत्वाद् धूसरत्वादीनां सहजनिन्द्यत्वात् तद्युक्तानां शोभनाशोभनात्मकता।

उक्तञ्च प्रदीपे—अत्र सदसतोर्योगः, दुर्जनस्यासत्त्वात् शश्यादीनां सत्त्वात्। एतच्चिन्त्यम्, पूर्वं दूरस्थित्यादिविशेषणेन, धूसरत्वादिनाऽत्राप्यसम्यक्त्वमिति। व्याख्यातमिदं प्रभायाम्—पूर्वमिति दुर्वारा इत्युदाहरण इत्यर्थः। विशेषणेनासम्यक्त्वमित्यन्वयः। तत्रापि हि प्रियतमस्य सत्त्वमेव, दूरस्थितिविशेषणेन परमसत्त्वम्, इहापि स्वतः सुन्दरस्य शशिनो दिवसधूसरत्वेनेत्यसद्योग एवेत्यर्थः। वस्तुतस्त्वत्र सदसद्योगपदे न द्वन्द्वः, किन्तु कर्मधारयः—संश्चासाव-संश्चेति सदसन्निति। तादृशानामनेकेषामेककार्यजनने समुच्चय इत्यर्थः। एवमपि 'दुर्वाराः' 'शशी'-त्यनयोः कथं भेद इति चेत्, इत्थम्,—दुर्वारा इत्यत्र विरहासहिष्णुतया प्रियतमादीनां सतामप्यसत्त्वेन विवक्षा, इह तु अशोभनमेवैतदिति विवक्षितम्, न तु शोभनमपीति न सदसद्योग इति।

सुधासागरकारास्तु—यत्तु काव्यप्रदीपकारैरुक्तम्—अत्र सदसतोर्योगः, दुर्जनस्यासत्त्वात् शश्यादीनां सत्त्वात्। एतच्चिन्त्यम्, पूर्वं दूरस्थित्यादिविशेषणेन, धूसरत्वादिनाऽत्राप्यसम्यक्त्वमिति। तत् प्रामादिकम्, न खलु दूरस्थित्यादिविशेषणेन विरूपता प्रतिपाद्यते, किन्तु सत्यपि रमणीयत्वे विरहासहतया तदवस्थायामसम्यक्त्वम्। धूसरत्वादीनां वैरूप्यं शश्यादीनां रमणीयत्वं साहजिकम् इत्याहुः।

(A) गुणक्रिया इति। ननु गुणक्रिया इति बहुवचनाद् गुणाः क्रियाश्चेति विग्रहे बहूनां गुणानां यौगपद्यमेव लभ्यते, एवं बह्वीनां क्रियाणामेव तल्लभ्यते, न तु द्वयोर्गुणयोर्द्वयोश्च क्रिययोस्तथा द्वयोर्गुणक्रिययोरिति ? सत्यम्, बहुत्वविवक्षायामुक्तदोषः स्यात्, न चेह संख्याविशेषविवक्षा। एवं सजातीययौगपद्यस्यापि। एवञ्च गुणयोः क्रिययोश्च यौगपद्यस्येव गुणक्रिययोर्यौगपद्यस्यापि लाभादुक्तार्थलाभो निरवद्य इत्यर्थः। अन्ये तु गुणाश्च क्रियाश्चेति द्वन्द्वे बहूनामेव समुच्चयः स्यादतो गुणौ च क्रिये चेति द्वन्द्वोत्तरं गुणक्रियाश्च गुणक्रिये चेति गुणक्रिया इत्येकशेषाद्

क्रमेणोदाहरणम्—

विदलितसकलारिकुलं तव बलमिदमभवदाशु विमलं च।
प्रखलमुखानि नराधिप मलिनानि च तानि जातानि ॥५०३॥
अयमेकपदे तया वियोगः प्रियया चोपनतः सुदुःसहो मे।
नववारिधरोदयादहोभिर्भवितव्यं च निरातपत्वरम्यैः ॥५०४॥

---

तत्र गुणयौगपद्यमाह—**विदलितेति**। तव बलं सैन्यं विदलितसकलशत्रुबलं सद् विमलं हृष्टम् आश्वभवदित्यर्थः। अत्र बलप्रखलमुखयोर्विशेष्ययोर्धर्मौ विमलत्व-मलिनत्वे गुणावेककालवृत्तित्वेन चकाराभ्यां निर्दिष्टौ।

क्रिययोर्यौगपद्यमाह—**अयमेकपदे** इति। एकपदे (A)एककालरूपे स्थाने। अहोभि-र्दिवसैर्नववारिधरोदयान्निरातपत्वेन आतपराहित्येन रम्यैर्भवितव्यम्, भूतमित्यर्थः। (B)अवाचकत्वदोषस्त्वत्रास्त्येव[1]। अत्र वियोगाहनी विशेष्यत्वान्न गुणौ, अत उपनति-क्रिया-भवितव्यत्वक्रिययोरेव यौगपद्यम्।

---

द्वयोर्द्वयोरेव समुच्चय इति त्रिविधः समुच्चयोऽयमित्याहुः। एतन्मते द्विवचनान्तेनोत्सर्गतः समासाभावात्तत्कल्पनक्लेशः। द्वयोरेव समुच्चय इत्यप्ययुक्तम्,

प्रादुर्भवति पयोदे कज्जलमलिनं बभूव नभः।
रक्तञ्च पथिकहृदयं कपोलपाली मृगीदृशः पाण्डुः ॥

इत्यादौ बहूनां गुणानामपि समुच्चयस्येष्टत्वात्। तथा—

उदितं मण्डलमिन्दो रुदितं सद्यो वियोगिवर्गेण।
मुदितञ्च सकलललनाचूडामणिशासनेन मदनेन ॥

इत्यादौ बह्वीनां क्रियाणां समुच्चयस्यासंग्रहप्रसङ्गात्। अतः स यथोक्त एव प्रकारः समीचीन इति प्रभायाम्।

(A) एककालरूप इति। उदाहरणचन्द्रिकाप्येवमेव व्याचष्टे। अकस्मादित्युद्द्योतः।

(B) अवाचकत्वेति,'तव्य'प्रत्ययस्यातीतकालावाचकत्वादित्यर्थः। वस्तुतस्त्वेकपदे इत्यत्रापि अवाचकत्वं द्रष्टव्यम्, अव्ययस्यास्य अकस्मादित्यर्थवाचकत्वेनैव प्रसिद्धेः। तादृशार्थश्च परार्द्धेना-न्वयाभावान्न गृहीत इति द्रष्टव्यम्। एवं 'चोपनत' इत्यत्राक्रमताऽपि, उपनतश्चेत्येवं समुच्चेय-क्रियानन्तरमेव तदन्वयक्रमस्य स्वरसतो लब्धत्वात्।

---

1. एतदनन्तरम् 'अत्र प्रियया चेत्यत्र उपनतश्चेत्यन्वयः, प्रियायाः समुच्चयस्याविवक्षितत्वात्। तथा च क्रियान्वितचकाराभ्यां तद्द्वयस्यैव यौगपद्यम्, एकपदे इत्यनेनापि तद्बोधनन्तु सम्भेदेनान्यतरवैयर्थ्यमिति न्यायात्। युगपत् प्रयोगबाहुल्यं हि सम्भेदः' इत्यधिकः ख-पुस्तके।

कलुषं च तवाहितेष्वकस्मात् सितपङ्केरुहसोदरश्रि चक्षुः ।

पतितं च महीपतीन्द्र तेषां वपुषि प्रस्फुटमापदां कटाक्षैः ॥५०५॥

"धुनोति चासिं तनुते च कीर्तिम्" इत्यादेः, "कृपाणपाणिश्च भवान् रणक्षितौ ससाधुवादाश्च सुराः सुरालये" इत्यादेश्च दर्शनाद् (A)व्यधिकरणे इति, एकस्मिन् देशे इति च न वाच्यम् ।

( १८० ) एकं क्रमेणानेकस्मिन् पर्यायः——— ।

एकं वस्तु क्रमेणानेकस्मिन भवति क्रियते वा स पर्यायः ।

क्रमेणोदाहरणम्—

नन्वाश्रयस्थितिरियं तव कालकूट
केनोत्तरोत्तरविशिष्टपदोपदिष्टा ।
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥५०६॥

---

गुणक्रियायौगपद्यमाह—कलुषञ्चेति । अहितेषु रिपुषु विषयेषु सितपङ्केरुहश्रि तव चक्षुरकस्मात् कलुषमभवच्च । हे महीपतीन्द्र, प्रस्फुटं तेषामहितानामुपर्यापदां कटाक्षैः पतितञ्च । अत्र चक्षुषोर्धर्मः कलुषत्वं गुणः, कटाक्षाणां विशेष्याणां पातः क्रिया, तयोर्यौगपद्यम् । एवां यौगपद्यमेकाधिकरणे भिन्नाधिकरणे च दृश्यते, तद्भेदेनैतत्-प्रभेदो न वक्तव्य इत्याह—धुनोतीति ।

पर्यायालङ्कारमाह—एकमिति । भवतीति, स्वयं भवतीत्यर्थः । क्रियत इति, परेण क्रियत इत्यर्थः । क्रमेणेति, स्वयंभवनपरक्रियमाणत्वक्रमेणेत्यर्थः ।

नन्वाश्रयेति । हे कालकूट, तवोत्तरोत्तरविशिष्टपदा उत्तरोत्तरोच्चरूपप्रकृष्टस्थाना आश्रयस्थितिः केनोपदिष्टा । उत्तरोत्तरोच्चोच्चस्थानान्येवाह—प्रागित्यादि । हृदयात् कण्ठ उच्चस्ततोऽपि मुखस्था वागुच्चा इत्युत्तरोत्तरविशिष्टपदत्वम् । कलिकाल एव खलसत्त्वादधुनेत्युक्तम् । अधुना पुनरित्यन्वयः । अत्रैकस्य कालकूटस्य हृदयाद्यनेक-स्थानेषु स्वयंभवनम् । व्यक्तिभेदेऽपि कालकूटस्यैक्यादैक्यम्, वाचि तु तत्तुल्यतापकत्वा-दारोप्यमेव बोध्यम् ।

---

(A) व्यधिकरण इति । यथासंख्यमिदमर्थद्वयम् । राजरूपैकाधिकरणे असिकम्पन-कीर्त्तितननयोर्दर्शनाद्भिन्नाधिकरण इति न वाच्यम्, तथा कृपाणपाणित्व-ससाधुवादत्वयो रणक्षिति-सुरालयत्वरूपभिन्नदेशतादर्शनाच्च एकस्मिन् देश इति च न वाच्यमित्यर्थः ।

यथा वा—

बिम्बोष्ठ एव रागस्ते तन्वि पूर्वमदृश्यत ।
अधुना हृदयेऽप्येष मृगशावाक्षि लक्ष्यते ॥५०७॥

अत्र रागस्य वस्तुतो भेदेऽप्येकतयाऽध्यवसितत्वादेकत्वमविरुद्धम् ।

तं ताण सिरिसहोअररअणाहरणम्मि हिअअमेक्करसम् ।
बिम्बाहरे पिआणं णिवेसिअं कुसुमबाणेण ॥५०८॥

---

एकशब्दवाच्यत्वेनैकत्वाध्यासादप्याह—**यथा वा**—**बिम्बोष्ठ एवेति**। रागो रक्तिमा अनुरागश्च। (A)अत्र परक्रियमाणत्वेनानुक्तत्वाद् दृश्यमानत्वेन च भवतीत्यवसीयते। **अत्रेति**। अध्यवसानमत्रैकरागशब्दवाच्यत्वात्।

क्रियत इत्युदाहरति—**तं ताणेति**।

तत्तेषां (B)श्रीसहोदररत्नाहरणे हृदयमेकरसम्।
बिम्बाधरे (C)प्रियाया निवेशितं कुसुमबाणेन॥ इति संस्कृतम्।

श्रीसहोदररत्नं कौस्तुभोऽमृतञ्च तदाहरणे तयोराहरणनिमित्तं तेषां प्रबन्धगम्यानाम् असुराणामेकरसं हृदयं मोहिनीरूपायाः प्रियाया बिम्बाधरे कुसुमबाणेन निवेशित-

---

(A) ननु अलङ्कारप्राणभूतस्य रागस्य 'लक्ष्यते' इति क्रियाकर्मत्वेन न स्वयंभवनं नापि परक्रियमाणत्वमिति कथमिदमुदाहरणशय्यामधिशेत इत्यत आह—अत्रेति।

(B) 'श्रीसहोदररत्नाभरणे' इति संस्कृतानुवाद उद्द्योतसुधासागरादीनाम्। श्रीसहोदररत्नं कौस्तुभस्तदाभरणे हरौ इति च तन्मतेऽर्थः। परं मोहिनीरूपधारणेन नारायणस्य तदा स्वरूपेऽनवस्थानात्, अवस्थानेऽपि तद्विरोधिनां दैत्यानां तत्र हृदयस्यैकरस्यमसम्भवमिव स्यात्, आधारद्वयस्यातुल्यतायाञ्च निकृष्टादुत्कृष्टे स्वत एव हृदयस्य प्रवृत्तिर्भवतीत्यकिञ्चित्करः कुसुमबाणश्च स्यादित्याद्यसमीचीनतैतन्मते लक्ष्यते। टीकाकृन्मते तु कौस्तुभामृतरूपे आधारे एकरसं हृदयं मोहिन्यां तुल्याधारे निवेशितमिति कुसुमायुधस्योत्कर्षः, पूर्वदोषद्वयाननुसङ्गश्चेत्यादि ज्ञेयम्।

अत्रोक्तमुद्द्योतकारेण—केचित्तु यदसुराणां हृदयं विजिगीषाज्वलनजाज्वल्यमानं श्रीसहोदररत्नानाम् आ समन्ताद्धरणे तत्परमासीत्, तत् सुकुमारतरोपकरणेनापि कामेन प्रियाबिम्बाधरे निवेशितम्, सकलरत्नसारतुल्यो बिम्बाधर इति तेषामभिमानोत्पत्तेः। एवञ्च व्यङ्ग्योपमाऽत्रेत्याहुः, तन्मतेऽपि हरणस्य वैषयिकाधारत्वात् पर्यायाक्षतिरेवेति।

(C) प्रियाणामिति संस्कृतानुवादः प्रदीपोद्द्योतसुधासागरादीनामनुमतः। तत्रैकस्यामपि मोहिन्यां बहुवचनप्रयोगः प्राकृते लिङ्गवचनानियमादिति सुधासागरकाराभिप्रायः।

यथा वा—

श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः
पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्याम्।
धत्ते वक्षः कुचसचिवतामद्वितीयश्च वक्त्रं
तद्गात्राणां गुणविनिमयः कल्पितो यौवनेन(A) ॥५०९॥

मित्यर्थः। मोहिनीकन्यागतहृदयैरसुरैः कौस्तुभामृते उपेक्षिते इत्यर्थः। अत्रासुराणां कौस्तुभामृत[गत]हृदयस्य प्रियाधरे कामेन क्रियमाणत्वम्।

परेण क्रियमाणत्वस्य सामान्यत उक्तौ विशेषाणामपि तथात्वलाभे उदाहरति— **यथा वा—श्रोणीबन्ध** इति। एकेन सन्त्यज्यमानस्यापरेण ग्रहणरूपस्तद्गात्राणां गुणविनिमयो यौवनेन कल्पितः। तदेव विशिष्य दर्शयति—श्रोणीबन्ध इति। बन्धः संस्थानं संस्थानविशिष्टा श्रोणीत्यर्थः। यौवने श्रोणीसंस्थानस्थौल्यान्मध्यभागतैण्याच्च। पद्भ्यामिति हंसकुञ्जरगभीरगमनाल्लोचनतारल्याच्च। धत्ते वक्ष इति। कुचसचिवतां कुचसद्वितीयत्वं तद्धरणाच्चाद्वितीयत्वत्यागोऽर्थवशलभ्यस्तदेवाद्वितीयत्वम् आस्यं कर्तृ धत्ते इत्येवार्थः। (B)ननु कथमेतत्? वक्षसः कुचसद्वितीयत्वधारणात् स्वाधेय-

(A) अयं श्लोकः प्रदीपकृता नोदाहृतः, सुधासागरेऽपि प्रक्षेपमर्यादया धृतः। तथा चोक्तम्—'श्रोणीबन्धस्त्यजति तनुताम् इत्युदाहरणन्तु प्रक्षिप्तमिति बोध्यम्' इति। कुवलयानन्दरसगङ्गाधरयोस्तु काव्यप्रकाशोदाहरणतया पद्यमिदमुपलभ्यते। उद्द्योतकृता च 'नन्वाश्रयस्थिति'रित्युक्त्वाऽऽद्योदाहरणानन्तरं व्याख्यातम्। आदर्शपुस्तकानामप्येकत्र उपान्तिमोदाहरणतयेदमधारीत्यन्यदेवैतत्। परं परक्रियमाणत्वोदाहरणतया यदस्य टीकाकृता स्थानं दत्तं तदेव न्याय्यमभूत्। तत्र परक्रियमाणत्वाविशेषेणोदाहरणद्वये प्राप्ते तत्पौर्वापर्यमक्षिकान्वेषणप्रयासेन कृतमिति ज्ञेयम्।

(B) नन्विति। प्रश्नार्थस्तु—कथमयमर्थश्चतुर्थपादार्थेन समञ्जसः, तदसामञ्जस्ये च कथमुदाहरणसङ्गतिरिति द्विविधः। स च 'विनिमयाभावादि'ति 'एकस्यानेकत्र स्थित्यभावाच्चे'ति हेतुभ्यां ग्राहयति। इमामेवाशङ्कां हृदि निधायोक्तमुद्द्योतकृद्भिः—'धत्ते इत्यनेन तस्मिन् प्रागद्वितीयता या स्थिता सा वक्त्रेण गृहीतेति बोधितम्' इति। ख-पुस्तके पुनरत्रान्यथैवाशङ्कितम्, तथा हि—यद्यपि वक्षसा स्वाधेयद्वितीयराहित्यस्यैव त्यागः, आस्येन तु स्वतुल्यद्वितीयराहित्यधरणमित्यतो न विनिमयः, न चैकस्यानेकत्र स्थितिस्तथाऽपि अद्वितीयत्वपदश्लेषादीदृशाद्वितीयत्वस्यैकत्वाध्यासान्नानुपपत्तिः। पूर्वश्लोके ('बिम्बोष्ठ एव रागस्ते' इत्यादौ) 'रागद्वयस्यैवे'ति। एतन्मतमप्युद्द्योतकृताऽनुगृह्यते; यथा—'मुखे अद्वितीयत्वं निरुपमत्वम्, वक्षसि द्वितीयराहित्यम्, तयोश्चाभेदाध्यवसायः' इति। परमेतादृशः संशयो वृत्तिकृतैव मूलोत्पाटमुदपाटीति युक्तोऽस्मद्धृतः पाठः।

(१८१) ——————अन्यस्ततोऽन्यथा(A)।

अनेकमेकस्मिन् क्रमेण भवति क्रियते वा सोऽन्यः।

क्रमेणोदाहरणम्—

मधुरिमरुचिरं वचः खलानाममृतमहो प्रथमं पृथु व्यनक्ति।

अथ कथयति मोहहेतुमन्तर्गतमिव हालहलं विषं तदेव ॥५१०॥

तद् गेहं नतभित्ति मन्दिरमिदं लब्धावकाशं दिवः

सा धेनुर्जरती नदन्ति करिणामेता घनाभा घटाः।

---

द्वितीयराहित्यस्यैव धरणमिति विनिमयाभावात्, एकस्यानेकत्र स्थित्यभावाच्च। उच्यते—मनोहरणे कर्मणि वक्षः कुचरूपसद्वितीयवत्त्वं धत्ते कुचसहितवक्षसा मनोहरणात्। तथा च बाल्यकालीनस्य मनोहरणे सद्वितीयराहित्यस्य त्यागोऽवगम्यते, तदेव मनोहरणे सद्वितीयराहित्यमास्यं कर्तृ धत्त इत्यर्थः। अलङ्कारादिसद्वितीयं विनाऽप्यास्येनैव मनोहरणात्। अत्र तदङ्गानां गुणविनिमयस्य सामान्यतो यौवनेन क्रियमाणत्वोक्त्यैव मध्यभागादिना तनुताद्याश्रयणस्यापि यौवनेन क्रियमाणत्वलाभः।

अन्यविधं पर्यायालङ्कारमाह—क्रमे(?)णान्य इति। अन्यत्वमन्यथात्वञ्च विवृणोति—**अनेकमेकस्मिन्** इति। अनेकमित्यन्य इत्यस्य विवृतिः, एकस्मिन्नित्यन्यथेत्यस्य। **मधुरिमेति**। मधुरिम्णा माधुर्येण रुचिरं खलानां वचः, अहो आश्चर्यं प्रथममममृतं व्यनक्ति अथानन्तरं तदेव वचोऽन्तर्गतं (B)हालहलाख्यं विषप्रभेदमिव कथयति प्रकाशयतीत्यर्थः। अत्रैकस्मिन् वचसि प्रकाशनाख्येन सम्बन्धेनामृतविषानेकभवनं क्रियत इत्युदाहरति।

**तद् गेहमिति**। सम्पत्तिकाले (C)दरिद्रदामोदरस्य गृहादिकं दृष्ट्वा सविस्मयस्य कस्यचिदुक्तिरियम्। आश्चर्यम् अयं द्विजो दिवसैरर्थात् कतिपयैरियतीं भूमिमवस्थां

---

(A) अन्यस्ततोऽन्यथेति। ततस्तस्मात् पूर्वस्मात् पर्यायादित्यर्थः, अन्यथा वैपरीत्यम् (एकस्मिन् अनेकस्य भवनकरणरूपम्) अन्यः पर्याय इति कारिकार्थः।

(B) 'हालाहलं हालहलं वदन्त्यपि हलाहलम्' इति द्विरूपकोषः।

(C) दरिद्रदामोदरस्येति। दरिद्रस्य सुदाम्नः सम्पत्कालीनावस्थावर्णनमिदमिति सुधासागरकाराभिप्रायः।

स क्षुद्रो मुषलध्वनिः कलमिदं सङ्गीतकं योषिता-
माश्चर्यं दिवसैर्द्विजोऽयमियतीं भूमिं समारोपितः ॥५११॥

अत्रैकस्यैव हानोपादानयोरविवक्षितत्वान्न परिवृत्तिः ।

---

समारोपितोऽर्थाद् विधिना(A)। तत्र नतभित्तिगेहस्य जरत्या धेनोः क्षुद्रमुषलध्वनेश्च दारिद्र्यकालीनस्य प्रदर्शनम्। नतभित्ति नीचपिण्डीकम्, मुषलध्वनेः क्षुद्रत्वम् अवहन्तृदौर्बल्याद् हन्तव्यधान्याद्यल्पत्वाच्च। मन्दिरादित्रयस्य तु सम्पत्तिकालीनस्य प्रदर्शनम्। दिवः स्वर्गाल्लब्धावकाशं स्वर्गप्रविष्टचूडम्। घटाः समूहाः। अत्र नतभित्तिगेहाद्यनेकमेकस्मिन् द्विजे स्वामित्वेन सम्बन्धेन विधिना क्रियमाणम्। आरोपित इति कर्मणि प्रत्ययेन कर्त्तुर्विधातुराक्षेपात्।

(B)'नन्वेकमनेकस्मिन् अनेकमेकस्मिंश्च इति द्विविधोऽपि पर्यायः परिवृत्त्य-लङ्काराभिन्न एव, पूर्वत्र त्यक्तग्रहणरूपत्वेन परत्र चैकत्यागेनान्यग्रहणरूपत्वेन परिवृत्तिसम्भवादित्यत आह—अत्रेति। पूर्वत्र एककर्त्तृकहानोपादानस्य परत्रैककर्त्तृ-कर्महानोपादानस्य (C)परिवृत्त्यलङ्कारनिर्वाहकस्याभावादित्यर्थः। तथा चैकस्येत्यत्र एकस्य कर्त्तुरेकस्य कर्मणश्चेति बोध्यम्[1]*।

---

(A) अर्थाद्विधिनेति। विधिरत्र प्रयोजककर्त्तेत्यभिप्रायः, भीमसेनस्तु—दिवसैरिति प्रयोजकनिर्देश इत्याह सुधासागरे।

(B) नन्वेकमिति। 'विनिमयाभावात् परिवृत्तेः [ भेदः ]' इति विश्वनाथपङ्क्तिं व्याचि-ख्यासता साहित्यदर्पणविवृतौ तर्कवागीशेनैवमेव संशय्य किञ्चित् प्रकारान्तरेण समाधायि; यथा—ननु द्विविधोऽत्र पर्यायः परिवृत्त्यभिन्न एव; पूर्वत्र त्यक्तग्रहणरूपत्वेन परत्रैकवस्तुत्यागो-पाधिकापरवस्तूपादानरूपस्य विनिमयस्याभावादित्यर्थः। परिवृत्तेर्भेद इत्यन्वयः। तथा च पूर्वत्र वस्तुभेदाभावादपरत्रापरवस्तूपादानं प्रति अन्यवस्तुत्यागस्य नियमाभावात् पर्यायद्वये परि-वृत्त्यभेदसम्भावना नास्तीति भाव इति।

(C) अयञ्च हेतुग्रन्थो मूलमतिक्रामन्निव दृश्यते। तथा हि वृत्त्या तावत् स्थिते अपि

---

1. 'अत्र पर्यायद्वये परिवृत्त्यलङ्कारप्रसक्तिं निरस्यति—अत्रेति। पर्यायद्वयभेदादेकस्येत्यस्य विभिन्नोऽर्थः। तथा हि—परिवृत्त्यलङ्कारे एकस्य धर्मिणः किञ्चिद्वस्तुहानं किञ्चिद्वस्तूपादानम्, एकं क्रमेणेत्यादिपर्याये तु नैकस्य धर्मिणस्त्यागत्वम्, तत्रैकेन धर्मिणा वर्णवादिना त्यक्तस्य विषस्यान्येन धर्मिणा वृषलक्ष्मणादिना ग्रहणात्। तथा च तत्पक्षे एकस्य धर्मिण इत्यर्थः। 'अन्यत्र' इत्यादिपर्याये तु एकस्य धर्मस्य हानमेव न तूपादानम्, अन्यस्य धर्मस्योपादानमेव न तु हानम्। परिवृत्तौ तु एकस्य धर्मस्य एकेन धर्मिणा आदानमित्यतोऽत्र तथाऽविवक्षणान्न परिवृत्तित्वमित्यर्थः' इति ख-पाठः।

## ( १८२ ) अनुमानं तदुक्तं यत् साध्यसाधनयोर्वचः(A) ॥११७॥

(B)पक्षधर्मान्वयव्यतिरेकित्वेन त्रिरूपो हेतुः साधनम्, धर्मिणि अयोगव्यवच्छेदो व्यापकस्य साध्यत्वम्। यथा—

अनुमानालङ्कारमाह—अनुमानमिति। [1]पक्षधर्मेति। द्वन्द्वात् परस्य भावप्रत्ययस्य सर्वत्रान्वयः, पक्षधर्मत्वेनान्वयव्यतिरेकित्वेन च त्रिरूप इत्यर्थः[1]*। धर्मिणीति, हेतुमद्धर्मिणीत्यर्थः। 'अयोगव्यवच्छेदो'ऽवश्यं सत्त्वम्, तन्निष्ठाभावाप्रतियोगित्वम् इत्यर्थः। [2]व्यापकस्येति, तेनाव्यापकं यत्र साध्यते तत्र नेदृशं साध्यत्वमित्यर्थः। तत्र त्वनुमानाभास इत्यर्थः[2]*।

हानोपादाने न विवक्षिते इत्यायाति, टीकाकृता तु परिवृत्तेः प्रसक्तिरेव नास्तीति प्रतिपाद्यते। अत्रेदं विचार्यते—पूर्वपर्याये 'श्रोणीबन्धस्त्यजति तनुता'मित्यादौ मध्यभागस्य तनुतासेवनोक्त्या तत्सम्बन्धिनीं प्राक्तनीं स्थूलतां श्रोणीबन्धः श्रयतीत्याक्षिप्यते; तथा लोचनाभ्यां तरलगतयः श्रिता इत्युक्त्या च तद्गता मन्थरता पद्भ्यां श्रितेत्यस्त्येव वस्तुतो विनिमयः। तथा च पूर्वत्रैककर्तृकहानोपादानस्याभावादिति टीकाकृदुक्तं न चारुतरम्। एवं द्वितीयपर्याये च 'तद्गेहं नतभित्ति' इत्यादौ परिवृत्तिव्युदासकम् एककर्तृकैककर्मकहानोपादानत्वकथनमप्यकिञ्चित्करमेव, अतादृशस्थलेऽपि 'दत्त्वा कटाक्षमेणाक्षी'त्यादौ परिवृत्तेः सत्त्वात्। तस्मात् हानोपादानयोरविवक्षितत्वादिति वृत्तिकृता यदुक्तं तदेव साध्विति प्रतिपद्यामः। अत एव प्रदीपकृताऽपि—'न चेयं परिवृत्तिर्हानोपादानयोरविवक्षितत्वा'दित्युक्तमिति।

(A) अत्रानुमानमिति भावे ल्युट्, तेन जायमानानुमितिरत्रालङ्कारः। सा च मन्ये शङ्केऽवैमि जाने इत्यादिवाचकोपादाने वाच्या यत्र लिङ्गलिङ्गिनोः सत्त्वं तत्र तेषामनुमितिबोधकत्वात्। यत्र साहश्यादिनिमित्तसद्भावस्तत्रोत्प्रेक्षाबोधकत्वम्। वक्ति कथयति इत्यादिलक्षणोपादाने लक्ष्या। उभयानुपादाने साध्यसाधनाभ्यां तदाक्षेपे प्रतीयमानेति बोध्यमित्युद्द्योतः।

(B) पक्षधर्मेति। अनुमित्सितसाध्यकः पक्षः, पर्वतो वह्निमान् धूमादित्यत्र पर्वते वह्नेरनुमित्सेति पर्वतः पक्षः। पक्षे हेतोर्वृत्तित्वं पक्षधर्मता। निश्चितसाध्यकः सपक्षः, यथा तत्रैव अनुमाने महानसम्, महानसे हि वह्नेर्निश्चयोऽस्ति। सपक्षे हेतोर्वृत्तित्वम् अन्वयित्वम्। निश्चितसाध्याभावो विपक्षः, यथा तत्रैव जलह्रदः, जलह्रदे वह्न्यभावस्य निश्चयात्। हेतोर्विपक्षावृत्तित्वं व्यतिरेकित्वम्। एवञ्च यथा पक्षधर्मान्वयव्यतिरेकित्वेनेत्यत्र भावप्रत्ययस्त्रिभिरेव सम्बध्यते, तथा अन्वयव्यतिरेकीत्यत्र द्वन्द्वात् परः श्रूयमाण इनुप्रत्यय उभाभ्यामेव सम्बध्यत इति द्रष्टव्यम्।

1. 'पक्षधर्मपदमत्र भावप्रधानम्। अन्वयश्च सपक्षे सत्त्वम् व्यतिरेकश्च विपक्षाद् व्यावृत्तिः। तथा च पक्षधर्मत्वसपक्षसत्त्वविपक्षासत्त्वात्मकत्रिरूप इत्यर्थः' इति ग-पाठः। 2. ग-पुस्तकेऽयमंशो नास्ति।

यत्रैता लहरीचलाञ्चलदृशो व्यापारयन्ति भ्रुवं
यत् तत्रैव पतन्ति सन्ततममी मर्मस्पृशो मार्गणाः ।
तच्चक्रीकृतचापमञ्चितशरप्रेङ्खत्करः क्रोधनो
धावत्यग्रत एव शासनधरः सत्यं सदासां स्मरः(A) ॥५१२॥

(B)साध्य-साधनयोः पौर्वापर्यविकल्पे न किञ्चिद् वैचित्र्यमिति न तथा दर्शितम् ।

---

यत्रैता इति। एता लहरीचलाञ्चलदृशस्तरङ्गवच्चञ्चलप्रान्तनयना नार्यो यत्र दिशि भ्रुवं व्यापारयन्ति तत्रैव दिशि यदमी मर्मस्पृशो मार्गणाः पतन्ति, तत् तस्मात् चक्रीकृतचापं यथा स्यात्तथा अञ्चितशरश्चालितबाणः प्रेङ्खत्करो वर्द्धमानहस्तः क्रोधनः कामिषु क्रोधवान् स्मरः आसां शासनधर आज्ञाकारी सन्नग्रत एव सदा धावतीत्यर्थः ।

अत्र, भ्रूव्यापारविशिष्टा दिक् पक्षः, तत्र मर्मस्पर्शिशरपातः साधनम्, तद्दिशि उक्तविशेषणविशिष्टस्मरधावनं साध्यम् । (C)प्रयोगश्चैवम्—आसां भ्रूव्यापारविशिष्टा

---

(A) यत्रैता इति । यत्र जने एताः कामिन्यः लहरीवच्चलाचलाश्चपला दृशो यासां ताः । चलाञ्चलेति पाठे चञ्चलप्रान्तचक्षुष इत्यर्थः । भ्रुवं व्यापारयन्ति वक्रीकुर्वन्ति । अमी अनुभूयमाना मार्गणाः शराः । यद् यस्मात्, तत् तस्मात् । आसां कामिनीनाम् अग्रत एव सदा मण्डलीकृतचापं यथा स्यात्तथा धावतीति सत्यम् । कीदृक् स्मरः ? अञ्चिते योजिते शरे प्रेङ्खन् चपलः करो यस्य सः । शासनमाज्ञा तद्धारकः । इत्युद्द्योतोदाहरणचन्द्रिकयोः ।

(B) साध्यसाधनयोरिति । पौर्वापर्यविकल्पे पौर्वापर्यव्यत्यये । यथा हि 'यत्रैता' इत्युदाहरणे पूर्वं साधनस्य पश्चाच्च साध्यस्य निर्देशः, एवम्—

मधु तिष्ठति वाचि योषितां हृदि हालाहलमेव केवलम् ।
अत [यत] एव निपीयतेऽधरो हृदयं मुष्टिभिरेव ताड्यते ॥

इत्यादौ पूर्वं साध्यस्य पश्चात् साधनस्य निर्देशोऽपि सम्भवतीत्यनया रीत्या प्राप्तमप्यनुमानद्वैविध्यं कथं नोक्तमिति ग्रन्थार्थः पूर्वपक्षत्वेनावतरतीति प्रदीपकारादीनामभिप्रायः ।

(C) प्रदीपाभिमतः प्रयोगश्चेत्थम्—एताश्चक्रीकृतचापं सदा पुरोधावदञ्चितशरत्वादिविशिष्टमनोभवाः सततनिपतन्मर्मभेदिबाणक-लसद्भ्रूव्यापारकस्थानत्वादिति । व्याख्यातमिदं प्रभायाम्—एता इति स्त्रियः पक्षभूता निर्दिष्टाः । चक्रीकृतचापं यथा स्यात्तथा सदा पुरो धावन् अञ्चिते धनुषि योजिते शरे प्रेङ्खन् चपलः करो यस्य सः, क्रोधनः क्रोधशीलः, शासनमाज्ञा तद्धारको मनोभवो यासां तथाभूता इति साध्यम् । सततं निपतन्तो मर्मभेदिनो बाणा यत्र तादृशम्, लसद्भ्रूव्यापारो यत्र तादृशं स्थानं युवजनरूपं यासां तत्त्वादिति हेतुरिति ।

(१८३) विशेषणैर्यत् साकूतैरुक्तिः परिकरस्तु सः।

अर्थाद् विशेष्यस्य। उदाहरणम्—

महौजसो मानधना धनार्चिता
धनुर्भृतः संयति लब्धकीर्तयः।
न संहतास्तस्य [1]न भेदवृत्तयः
प्रियाणि वाञ्छन्त्यसुभिः समीहितुम् ॥ ५१३ ॥

---

दिक् धावत्तत्तद्विशेषणविशिष्टस्मरा, पतन्मर्मस्पृङ्मार्गणकत्वात् इति। (A)मार्गणपाते च वैलक्षण्यविवक्षणान्न व्यभिचारः। साऽध्येति। पौर्वापर्यं निर्देशे।

परिकरालङ्कारमाह—**विशेषणैरि**ति। बहुवचनाद् विशेषणबाहुल्यं विवक्षितम्। (B)व्यक्तीभविष्यति चेदम्। **साकूतैरि**ति, विशेष्यप्रकर्षे साभिप्रायैरित्यर्थः।

**महौजस** इति। युधिष्ठिरं प्रति चरस्योक्तिरियम्। अत्र तस्य वीरा इति विशेष्यमूह्यम्। तथा च तस्य दुर्योधनस्य वीरा असुभिः प्राणैरपि तस्य प्रियाणि वाञ्छन्ति प्राणव्ययेनापि तत्प्रियं कर्त्तुमिच्छन्तीत्यर्थः। ननु निर्बलैस्तैः किं कर्त्तव्यम् इत्यत्राऽऽह—महौजस इति। मृत्युभीतानां बलवत्त्वमप्यकिञ्चित्करमित्यत्राऽऽह—मानधना इति, स्वमृत्युनाऽपि मानरक्षका इत्यर्थः। मानिनामप्यनुपकारिप्रभुकार्येषु उपेक्षा स्यादित्यत्राऽऽह—धनार्चिता इति। युद्धोपकरणाभावे तेषामप्यकिञ्चित्करत्वमित्यत्राऽऽह—धनुर्भृत इति। कृतित्वाभावे तथाऽप्यकिञ्चित्करत्वमित्यत्राऽऽह—संयतीति। संयति युद्धे। बहुसमवायसापेक्षाणां न स्वतः कर्त्तृत्वमित्यत्राऽऽह—न संहता इति, समवायनिरपेक्षा इत्यर्थः। परस्परविरुद्धत्वे तथाऽपि न कार्यसाधकत्वमित्यत्राऽऽह—न भेदेति।

---

(A) मार्गणपाते चेति। मार्गणानां वैलक्षण्यस्य निरूपयितुमशक्यत्वात् पात इत्युक्तम्; तथा च मार्गणानां वैलक्षण्यस्यानिरूप्यत्वेऽपि पाते वैजात्यं सुनिरूप्यमेवेत्यभिप्रायः। वैलक्षण्यं वैजात्यम्, तच्चात्र चक्रीकृतचापत्वावितत्तद्विशेषणविशिष्टस्मरजन्यत्वेन विवक्षितम्, तेन क्वचिद् धावत्तत्तद्विशेषणविशिष्टस्वरत्वरूपनिरुक्तसाध्याभाववति जरन्मीमांसकादौ बाणहतयोद्धृपुरुषे वा निरुक्तवैलक्षण्याभाववत्पतनाश्रयमर्मस्पृङ्मार्गणकत्वस्य हेतोः सत्त्वेऽपि न व्यभिचारः।

(B) व्यक्तीभविष्यतीति, वृत्तौ अस्यालङ्कारस्यापुष्टार्थत्वदोषाभावमात्ररूपताखण्डनप्रस्तावे।

---

1. 'न भिन्नवृत्तयः' इति पाठः क्वचित्।

(A)यद्यप्यपुष्टार्थस्य दोषताभिधानात्तन्निराकरणेन पुष्टार्थस्वीकारः कृतः, तथाऽप्येकनिष्ठत्वेन बहूनां विशेषणानामेवमुपन्यासे वैचित्र्यमित्यलङ्कारमध्ये गणितः ।(B)

(१८४) व्याजोक्तिश्छद्मनोद्भिन्नवस्तुरूपनिगूहनम् ॥ ११८ ॥

निगूढमपि वस्तुनो रूपं कथमपि प्रभिन्नं केनापि व्यपदेशेन यदपह्नूयते सा व्याजोक्तिः । न चैषाऽपह्नुतिः, प्रकृताप्रकृतोभयनिष्ठस्य साम्यस्येहासम्भवात् । उदाहरणम्—

---

अत्रैतैर्विशेषणैर्विशेष्याणां वीराणां प्रकर्षः । तथाऽपीति, विशेषणबाहुल्ये वैचित्र्यमनुभवसिद्धमित्यर्थः ।

व्याजोक्त्यलङ्कारमाह—व्याजेति । 'उद्भिन्नस्य' कुतोऽपि प्राप्तप्रकाशस्य वस्तुस्वरूपस्य छद्मना निगूहनमित्यर्थः । व्याचष्टे—निगूढमपीति । उद्भिन्नपदसामर्थ्यान्निगूढत्वलाभः । प्रकृताप्रकृतोभयेति, (C)उपमेयनिषेधेनोपमानसाधनस्यैवापह्नुतित्वात् ।

---

(A) यद्यपीति । उक्तमिदं प्रदीपकृद्भिः—'न च वाच्यमपुष्टार्थत्वस्य दोषत्वाभिधानादर्थसिद्धं पुष्टार्थत्वमिति दोषाभावत्वमात्रतया कुतोऽलङ्कारमध्ये पठितोऽयमिति । एकनिष्ठत्वेन बहूनां विशेषणानामुक्तोदाहरणवदुपादाने वैचित्र्यमपि ह्यनुभवसिद्धम्, न तु दोषाभावत्वमात्रमिति सम्प्रदायः । वयं त्वालोचयामः—तादृशैकविशेषणोपन्यासेऽप्यलङ्कारत्वमुचितम् । अपुष्टार्थत्वविरहस्य निर्विशेषणतयाऽप्युपपत्तेरर्थसिद्धत्वाभावाद् वैचित्र्यस्य चानुभवसिद्धत्वात् । यथा—

शुद्धे सद्मनि पल्लविन्युपवने वाप्यां नवाम्भोरुहि
क्रीडाद्रौ च स-शाद्वले विवलितग्रीवैर्विमुक्ता दृशः । इत्यादौ ।

व्याख्यातञ्चोद्द्योते—अनुभवसिद्धत्वादिति । यथा नित्ये सन्ध्यावन्दनादौ दोषाभावस्य अङ्गवैकल्येऽपि सिद्धौ साङ्गतत्करणं फलातिशयायैव, तथा दोषाभावस्य विशेषणानुपादानेऽपि सम्भवेन साभिप्रायैकविशेषणनिबन्धनश्चमत्कारो दुरपह्नव इति भाव इति ।

(B) "अत्र निदर्शनकाराः—'एतत्पर्यन्तं मम्मटाचार्याणां कृतिः । तदुक्तम्—

'कृतः श्रीमम्मटाचार्यवर्यैः परिकरावधिः ।
प्रबन्धः पूरितः शेषो विधायाल्लटसूरिणा ॥'

इति । अतः परम् अल्लटाचार्यस्य कृतिरित्याहुः" इति बालबोधिन्याम् ।

(C) उपमेयनिषेधेनेति । एतच्च प्रकृताप्रकृतेत्यादिवृत्तिग्रन्थस्योपलक्षणपरतास्वीकारेणेति बोध्यम् । न तु मूलग्रन्थस्य यथाश्रुतो हेतुः । उद्द्योते—इदमुपलक्षणम् । तत्रोपमेयनिषेधपूर्वकमुपमानव्यवस्थापनम्, अत्र तु किञ्चिदनिषिध्यैव निमित्तान्तरप्रयुक्तत्वज्ञापनमित्यपि बोध्यम् इति ।

शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लसद्-
रोमाञ्चादिविसंष्ठुलाखिलविधिव्यासङ्गभङ्गाकुलः।
[1]हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद् वः शिवः ॥ ५१४ ॥

(A)अत्र पुलक-वेपथू सात्त्विक[2]तया प्रसृतौ शैत्यकारणतया प्रकाशितत्वादपलपितस्वरूपौ व्याजोक्तिं प्रयोजयतः।

(१८५) किञ्चित् पृष्टमपृष्टं वा कथितं यत् प्रकल्पते।
ताद्दगन्यव्यपोहाय परिसंख्या तु सा स्मृता ॥ ११६ ॥

प्रमाणान्तरावगतमपि वस्तु शब्देन प्रतिपादितं प्रयोजनान्तराभावात् सदृशवस्त्वन्तरव्यवच्छेदाय यत् पर्यवस्यति सा भवेत् परिसंख्या। अत्र च कथनं प्रश्नपूर्वकं तदन्यथा च परिदृष्टम्, तथोभयत्र व्यपोह्यमानस्य [3]प्रतायमानत्वं वाच्यत्वं चेति चत्वारो भेदाः।

---

**शैलेन्द्रेति**। शिवो वोऽवतात्। कीदृशः शैलेन्द्रेण हिमालयेन प्रतिपाद्यमानाया दीयमानाया गिरिजाया हस्तस्य यदुपगूढं भावकान्तत्वादुपगूहनं सम्पर्कस्तेनोल्लसता रोमाञ्चादिना पुलकवेपथुभ्यां विसंष्ठुलस्य अव्यवस्थस्य अखिलवैवाहिकविधिव्यासङ्गस्य भङ्गेन भङ्गभयेनाकुलः सन् हा आश्चर्यं तुहिनसम्बन्धिनोऽचलस्य करयोः शैत्यमित्यूचिवान, अत एव शैलस्यान्तःपुरेणान्तःपुरस्थस्त्रीगणेन मातृमण्डलेन गौरीपद्मादिभिः स्वीयगणैर्नन्द्यादिभिश्च सस्मितं दृष्टः। **सात्त्विकतयेति**, सत्त्वगुणोद्रेक एव कामोद्भेदात्।

परिसङ्ख्यालङ्कारमाह—**किञ्चिदिति**। अस्य व्याख्या वृत्तावेव स्पष्टा। **प्रयोजनान्तराभावादिति**। प्रमाणान्तरावगतस्य तत्र प्रतिपादनरूपप्रयोजनाभावादिति भावः। **प्रश्नपूर्वकमिति**, पृष्टमपृष्टं वेत्यस्य विवरणमिदम्। सूत्रेऽनुक्तमप्युदाहरणे दृष्टत्वात् प्रभेदान्तरद्वयमाह—**तथोभयत्रेति**। 'प्रतीयमानत्वं' व्यङ्ग्यत्वम्।

---

(A) अत्रेति वृत्तिः। प्रकाशितत्वादित्यन्तहेतुघटकदलस्यार्थस्तु—पार्वतीकरस्पर्शजन्यरोमाञ्चादेः शैलेन्द्रस्पर्शजन्यत्वप्रतिपादनम् इति।

---

1. 'घा: शैत्रम्' इति क्वाचित्कः पाठः। 2. '-रूपतये'ति क्वचित्। 3. 'प्रतीयमानते'ति मुद्रितपुस्तक-पाठः।

क्रमेणोदाहरणम्—

किमासेव्यं पुंसां सविधमनवद्यं द्युसरितः
किमेकान्ते ध्येयं चरणयुगलं कौस्तुभभृतः ।
किमाराध्यं पुण्यं किमभिलषणीयं च करुणा
यदासक्त्या चेतो निरवधिविमुक्त्यै प्रभवति ॥ ५१५ ॥

किं भूषणं सुदृढमत्र यशो न रत्नं
किं कार्यमार्यचरितं सुकृतं न [1]दोषाः ।
किं चक्षुरप्रतिहतं धिषणा न नेत्रं
जानाति कस्त्वदपरः सदसद्विवेकम् ॥ ५१६ ॥

कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते ।
काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति ॥ ५१७ ॥

---

किमासेव्यमिति । किमित्यादिः प्रश्नः, सविधमित्यादि प्रत्युत्तरम् । द्युसरितो गङ्गायाः [2]सविधं सान्निध्यम्[2]* । एकान्ते मरणकाले । निरवधिविमुक्तिः आत्यन्तिकी-मुक्तिः । सालोक्यादिमुक्तिव्यावर्त्तकमिदम् । अत्र नान्यदित्यादिकं प्रतीयमानम्, द्युसरित्सेवनादीनां पुराणादित एवावगतत्वादन्यासेवने पर्याप्तेः ।

वाच्यव्यपोह्यां प्रश्नपरिसंख्यामाह—**किं भूषणमिति** । आर्यैर्वशिष्ठादिभिश्चरितम् [3]आचरितं किं वस्तु कार्यं करणीयं [4]सुकृतमित्याद्युत्तरम्[4]* । न दोषा इति चाण्डाली-गमनादयः । अप्रतिहतं [5]व्यवधानेऽपि ग्राहकं[5]* [6]चक्षुः किं धिषणा बुद्धिः[6]* । 'तदपर' इति पाठे 'तत्'पदं धिषणापरम्, तस्या एव सदसद्विवेचयितृत्वात् । 'त्वदपर' इति पाठे तु प्रत्युत्तरपरितुष्टस्य प्रष्टुः प्रत्युत्तरयितृप्रशंसावाक्यमिदम् ।

प्रतीयमानव्यपोह्याम् अप्रश्नपरिसंख्यामाह—**कौटिल्यमिति** । अननुरागिणीं प्रशस्य रञ्जयितुरुक्तिरियम् । अत्र सर्वत्रैव न हृदीति प्रतीयमानम् । तथा च कौटिल्य-काठिन्यास्थिरबुद्धित्वानि ते हृदि न सन्ति, मयि तु तथाऽपि रागो नास्तीति वाक्यार्थः ।

---

1. 'दोषः' इति मुद्रितपुस्तकपाठः । 2. अयमंशः ख-पुस्तके नास्ति । 3. 'आचरितम्' इति ग-पुस्तके नास्ति । 4. 'इत्यर्थः' इति ग-पुस्तकपाठः । 5. अयमंशो ग-पुस्तके नास्ति । 6. 'कीदृशं चक्षुरिति प्रश्नः । उत्तरमाह धिषणेति । धिषणा बुद्धिः' इति ख-पुस्तकपाठः ।

भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे ।
चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम् ॥ ५१८ ॥

( १८६ ) (A)यथोत्तरं चेत् पूर्वस्य पूर्वस्यार्थस्य हेतुता ।
तदा कारणमाला स्यात्—

उत्तरमुत्तरं प्रति यथोत्तरम् । उदाहरणम्—

जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि सम्पदः(B)॥५१९॥

(C)"हेतुमता सह हेतोरभिधानमभेदतो हेतुः" इति हेत्वलङ्कारो न

---

वाच्यव्यपोह्याम् अप्रश्नपरिसंख्यामाह—भक्तिरिति । युवतिरूपे कामस्यास्त्रे । परिदृश्यत इत्यस्य भक्त्यादिकं कर्म बोध्यम् । अत्र विभवादयो व्यपोह्या वाच्याः ।

कारणमालालङ्कारमाह—यथोत्तरमिति । [1]मालादीपके पूर्वपूर्वस्यार्थस्योत्तरोत्तरक्रियां प्रति हेतुत्वेऽपि सर्वेषामेकक्रियान्वयः, अत्र तु न तथेति भेदः[1]* ।

जितेन्द्रियत्वमिति । उद्वेजिकां द्रौपदीं सान्त्वयतो युधिष्ठिरस्योक्तिरियम् । स्पष्टम् । कारणमालालङ्कारप्रसङ्गेन स्मृतस्यान्योक्तहेत्वलङ्कारस्यानुक्तिबीजमाह—

---

(A) यथोत्तरमित्युपलक्षणम्, यथापूर्वं परस्य परस्य कारणत्व इत्यपि बोध्यम् । यथा—

भवन्ति नरकाः पापात् पापं दारिद्र्यसम्भवम् ।
दारिद्र्यमप्रदानेन तस्माद् दानपरो भव ॥ इति ।

अत्र कथितपदत्वं न दोषः ; प्रत्युत पदान्तरेण तस्यार्थस्योक्तौ तत्त्वप्रतिभानाभावाद् विवक्षितार्थासिद्धेः' इत्युद्द्योतकाराः । विहितस्यानुवाद्यत्वे पूर्वं ( ३९३ पृ० ) यत् कथितपदस्य गुणत्वमुक्तम्, कारणमालालङ्कार एव तदुदाहरणस्थानमिति च स्मर्त्तव्यम् ।

(B) जितेन्द्रियत्वमिति । अत्र पद्ये भग्नप्रक्रमत्वं दोषः । जितेन्द्रियत्वं विनयस्य कारणमित्युक्ते तत् कस्य कारणमित्युचिता आकाङ्क्षा यद्यपि उत्तरवाक्येण निवर्त्तते, तथाऽपि न साक्षात् । एवमग्रेऽपि अस्याः ( कारणमालायाः ) किमुपस्कारकतयाऽलङ्कारत्वं कया रीत्या चोपस्कारकत्वमिति चिन्त्यम् । उत्तरोत्तरोत्तमवस्तुकारणत्वात् सर्व एव उपादेया इति ज्ञानं चमत्कारकारणमिति वदन्तीत्युद्द्योतकाराः ।

(C) हेतुमतेति । 'अभेदेनाभिधा हेतुर्हेतोर्हेतुमता सहे'ति दर्पणकाराः । अत्रोक्तं प्रदीप-

---

1. अयमंशो ग-पुस्तके नास्ति ।

लक्षितः। आयुर्घृतमित्यादिरूपो ह्येष न भूषणतां कदाचिदर्हति, वैचित्र्याभावात्।

अविरलकमलविकाशः सकलालिमदश्च कोकिलानन्दः।

रम्योऽयमेति सम्प्रति लोकोत्कण्ठाकरः कालः॥ ५२०॥

[1]अत्र काव्यरूपतां कोमलानुप्राससमहिम्नैव समाम्नासिषुर्न पुनर्हेत्वलङ्कारकल्पनयेति पूर्वोक्तकाव्यलिङ्गमेव हेतुः।

(१८७) ———————क्रियया तु परस्परम्॥ १२०॥

वस्तुनोर्जननेऽन्योन्यम्————

अर्थयोरेकक्रियामुखेण परस्परं कारणत्वे सति अन्योन्यनामाऽलङ्कारः। उदाहरणम्—

---

**हेतुमतेति**, हेतुमता कार्येण सहाभेदेन हेतोरभिधानमित्यर्थः। भूषणतामलङ्कारताम्।

**अविरलेति**। अयं रम्यः काल एतीत्यन्वयः। अत्र परमते कमलविकाशादिना कार्येण सह हेतोः कालस्याभेदेनाभिधानमाहार्यबोधजनकम्। स्वमते तु कमलविकाशादिजनके शुद्धसारोपा लक्षणैव। इदमुपलक्षणम्, अविरलः कमलविकाशो (A)यत्रेत्यादिबहुव्रीहिणाऽपि विवक्षितार्थसिद्धेर्नायं हेत्वलङ्कार इत्यपि बोध्यम्।

ननु नायं ध्वनिर्न वा गुणीभूतव्यङ्ग्यम्, स्फुटालङ्काराभावान्नापि चित्रम्, (B)तत् कथमिदं काव्यमित्यत आह—**अत्रेति**। **कोमलेति**। माधुर्यौजोव्यञ्जकवर्णातिरिक्तवर्णानुप्रासः कोमलानुप्रास इत्युक्तं प्राक् (४४० पृ०)। समाम्नासिषुः ऊचुः।

अन्योन्यालङ्कारमाह—**क्रियया त्विति**। एकजातीयक्रियासम्बन्धिनोर्वस्तुनोः

---

कृता—'नन्वत्र कार्यकारणभावालङ्कृतिप्रपञ्चनप्रसङ्गेन हेत्वलङ्कारोऽपि लक्षणार्हः, उक्तश्चायं भट्टोद्भटेन—'हेतुमता सह हेतोरभिधानमभेदतो हेतु'रिति, तत् किं न लक्षित इति चेत्, आयुर्घृतमित्यादिरूपस्यास्य वैचित्र्याभावेनालङ्कारत्वस्यैवाभावा'दिति।

(A) यत्रेत्यादीति। आदिपदेन सकलोऽलिमदो यत्रेति, कोकिलस्यानन्दो यत्रेति च बहुव्रीहिद्वयं ग्राह्यम्, आनन्दयतीत्यानन्दः, पश्चादुपपदसमासो वा ग्राह्यः।

(B) तत् कथमिति। न च माऽस्त्विदं काव्यं किमस्माकं गतमिति वाच्यम्, चिरन्तनैरस्य काव्यत्वाङ्गीकारादिति च प्रश्नकोटौ द्रष्टव्यम्।

---

1. 'इतरत्र'ेति पाठो मुद्रितपुस्तकेषु।

हंसाण [1]सिरी सरेहिं सारिज्जइ अह सराण हंसेहिं ।
अण्णोण्णं विअ एए अप्पाणं णवर गरुअन्ति ॥ ५२१ ॥

अत्रोभयेषामपि परस्परं जनकता मिथः श्रीसारतासम्पादनद्वारेण ।

(१९८) ——————उत्तरश्रुतिमात्रतः ।
प्रश्नस्योन्नयनं यत्र क्रियते तत्र वा सति ॥ १२१ ॥
असकृद् यदसम्भाव्यमुत्तरं स्यात्तदुत्तरम्(A) ।

प्रतिवचनोपलम्भादेव पूर्ववाक्यं यत्र कल्प्यते तदेकं तावदुत्तरम् । उदाहरणम्—

---

क्रियया विशेषणीभूतया परस्परं जनन इत्यर्थः, एकक्रियासम्बन्धितारूपविशेषणस्यैव जननात्तत्सम्बन्धिनोरपि तद्द्वारा जननोपचार इत्यर्थः (B) । हंसाणेति—

हंसानां श्रीः सरोभिः सार्यते अथ सरसां हंसैः ।
अन्योन्यमप्येत आत्मानं केवलं [2]गरयन्ति ॥ इति संस्कृतम् ।

सार्यते सारीक्रियते, (C)नामकारितान्तात् सारशब्दात् कर्मणि प्रत्ययः । 'णवरे'ति केवले देशी । गरयन्ति गुरुशब्दस्य कारिते 'प्रियस्थिरे'त्यादिना गरादेशः । अत्र श्रीसारताकरणसम्बन्धितारूपपरस्परक्रियायाः परस्परेण जननात्तद्वतः परस्परस्यापि जननमुपचारादित्याह—अत्रेति ।

द्विविधमुत्तरालङ्कारमाह—उत्तरेति । तत्र वेति, प्रश्ने वा सतीत्यर्थः । असकृदिति, काकाक्षिन्यायेन प्रश्नोत्तरयोरुभयत्रैव सम्बध्यते । 'असम्भाव्यं' लोकप्रसिद्ध्यगम्यं लोकविलक्षणमित्यर्थः । व्याचष्टे—प्रतिवचनेति । 'पूर्ववाक्यं' प्रश्नवाक्यम् ।

---

(A) उत्तरं नाम प्रश्नगम्यजिज्ञासानिवर्त्तकज्ञानविषयीभूतोऽर्थः । अत्र प्रश्नोत्तरयोः सकृदुपादानं न चमत्करोतीत्यसकृदित्युक्तम्, असम्भाव्यत्वन्तु चमत्कारित्वमिति मान्याः, अप्रसिद्धत्वमिति तु वयम्; तच्च प्रमाणान्तरागोचरविषयत्वात् । अत एव प्रश्नपरिसंख्यातो भेदः । इति प्रदीपोद्द्योतयोः स्पष्टम् ।

(B) अत्रोक्तं प्रदीपकारैः—'अविशिष्टं वस्तु तावदजातकल्पम्, तेन वैशिष्ट्यप्रयोजकक्रियाजनके जनकत्वोपचारः' इति ।

(C) नामकारितान्तादिति । पाणिनितन्त्रसिद्धस्य णिचः कलापमते कारितमिति संज्ञा ।

---

1. 'सरेहिं सिरी' इत्यपि क्रमः क्वचित् । 2. 'गुरुकुर्वन्ति' इति पाठः क्वचित् ।

वाणिअअ हत्थिदन्ता कुत्तो अम्हाणं वग्घकित्तीअ ।
जाव लुलिआलअमुही घरम्मि (A)परिसक्कए सोण्हा ॥ ५२२ ॥

[1]अत्र हस्तिदन्तव्याघ्रकृत्तीनामहमर्थी, ता मूल्येन प्रयच्छेति क्रेतु-र्वचनम् अमुना वाक्येन समुन्नीयते । न चैतत् काव्यलिङ्गम्, उत्तरस्य ताद्रूप्यानुपपत्तेः । न हि प्रश्नस्य प्रतिवचनं जनको हेतुः । नापीद-मनुमानम्, एकधर्मिनिष्ठतया साध्यसाधनयोरनिर्देशादित्यलङ्कारा-न्तरमेवोत्तरं साधीयः ।

[2]प्रश्नानन्तरं लोकातिक्रान्तगोचरतया यदसंभाव्यरूपं प्रतिवचनं स्यात्तदपरमुत्तरम्, अनयोश्च सकृदुपादाने न चारुताप्रतीतिरित्यस-कृदित्युक्तम् । उदाहरणम्—

---

वाणिअअ इति—

[3]वाणिजिक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च ।
यावल्लुलितालकमुखी गृहे परिष्वक्कते स्नुषा ॥ इति संस्कृतम् ।

स्नुषा पुत्रबधूः, परिष्वक्कते (B)दीप्यते । सुन्दर्यां स्नुषायामासक्तो मम पुत्रो हस्तिनो व्याघ्रांश्च न मारयतीत्यर्थः । अत्रेति । अर्थीत्यनन्तरं किं ताः सन्तीति पूरणीयम्, तदेवैतद्वाक्यस्य प्रश्नरूपत्वोपपत्तेः । 'ताद्रूप्यं' जनकहेतुत्वम् । तदेव दर्शयति—न हीति । ज्ञापकहेतुस्तु न (C)हेत्वलङ्कार इति भावः[4] । एकधर्मीति । एकधर्मी पक्षः ; प्रकृते तु प्रश्नस्य धर्मी क्रेता प्रतिवचनस्य धर्मी विक्रेतेति भेदः ।

---

(A) परिसक्कए इत्यस्य प्रतिवसतीति भीमसेनसम्मतं संस्कृतम् । परिसंक्रामतीति चोद्द्योतसम्मतम् । परिसंक्रामतीत्यस्य परिभ्रमतीत्यर्थः ।

(B) दीप्यत इति । वस्तुतः 'ककि वकी'त्यादिदण्डकान्तर्गतोऽयं ष्वक्कतिर्गत्यर्थ इति यथोक्तसंस्कारपक्षेऽपि परिभ्रमतीत्येवार्थो युक्तः ।

(C) हेत्वलङ्कार इति काव्यलिङ्गम् । न च स्नुषागृहनिवासस्य हस्तिदन्ताद्यभावे निमित्तत्वेन काव्यलिङ्गमेवास्तु तत्सम्भवेऽपि प्रश्नोन्नयनद्वारेणैव चमत्कारादित्याशय इत्युद्द्योतः ।

---

1. मुद्रितपुस्तके 'अत्रे'ति नास्ति । 2. 'प्रश्नादनन्तरम्' इति क्वचित् पाठः । 3. 'वाणिजक' इति मुद्रितपुस्तकपाठः । 4. एतदनन्तरं ख-पुस्तके 'न च जनकहेतुत्वाभावेऽपि ज्ञापकहेतुत्वादेव हेत्वलङ्कारः स्यात्, कथमन्यथा 'भस्मोद्धूलने'त्यादौ महामोहत्वज्ञापकस्य सपर्यासुखालोकोच्छेदित्वस्य हेत्वलङ्कारत्वं प्राग् दर्शितमिति वाच्यम्, ज्ञापकहेतोर्हेत्वलङ्कारत्वेऽपि उन्नीयमानप्रश्नातिरिक्तं ज्ञाप्यं प्रत्येव तथात्वात्, उन्नीयमान-प्रश्नस्य ज्ञाप्यत्वे तूत्तरालङ्कारत्वेनैवाऽऽघ्रातत्वाद् न हेत्वलङ्कारत्वमिति भावः । इत्यधिकः पाठः ।

का विसमा देव्वगई किं लद्धं जं जणो गुणग्गाही ।

किं सोक्खं सुकलत्तं किं दुक्खं जं खलो लोओ ॥ ५२३ ॥

प्रश्नपरिसंख्यायामन्यव्यपोह एव तात्पर्यम्, इह तु वाच्ये एव विश्रान्तिरित्यनयोर्विवेकः ।

(१८९) कुतोऽपि लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते ॥१२२॥

धर्मेण केनचिद् यत्र तत् सूक्ष्मं परिचक्षते ।

कुतोऽपि आकारादिङ्गिताद्वा सूक्ष्मस्तीक्ष्णमतिसंवेद्यः ।

उदाहरणम्—

वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धै-
र्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे ।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या
स्मित्वा पाणौ खड्गलेखां लिलेख ॥ ५२४ ॥

---

तत्र वा सतीत्यादिकं व्याचष्टे—**प्रश्नानन्तरमिति** । सूत्रे असकृदित्यस्य प्रश्नोत्तरयोर्द्वयोरप्यन्वयमभिप्रेत्य व्याचष्टे—**अनयोरिति** । **का विसमेति** ।

का विषमा दैवगतिः किं लब्धव्यं यद् जनो गुणग्राही ।
किं सौख्यं सुकलत्रं किं दुःखं यत् खलो लोकः ॥ इति संस्कृतम् ।

सौख्यं सुखोपयुक्तम् । अत्र प्रश्नोत्तरयोर्द्वयोरप्यसकृत्त्वाद् उत्तरस्य च लोकप्रसिद्ध्यवगम्यत्वाद् यथोक्तरूपत्वम् । अत्र प्रतीयमानव्यपोहायाः प्रश्नपरिसंख्यायाः प्रसक्तिं वारयति—**प्रश्ने**ति । अत्र सहृदयानामनुभव एव प्रमाणम् ।

सूक्ष्मालङ्कारमाह—**कुतोऽपी**ति । केनचिद्धर्मेणान्यस्मै प्रकाश्यत इत्यन्वयः । 'आकारो' धर्मः, 'इङ्गितं' क्रिया ।

**वक्त्रस्यन्दी**ति । काऽपि वयस्या कस्याश्चित् कण्ठे वक्त्रस्यन्दीत्यादिभिर्भिन्नं (A)रेखारूपकृतविभागं कुङ्कुमं दृष्ट्वा तस्याः पुंस्त्वं पुरुषायितत्वं व्यञ्जयन्ती प्रकाशयन्ती

---

(A) रेखारूपकृतविभागमिति । एतच्च स्वेदस्याऽऽननजन्यत्वसूचकम्; कण्ठीयस्वेदेन कण्ठगतचूर्णस्य रेखारूपविभागासम्भवात्, धाराकारपतितेन स्वेदेनैव तत्सम्भवाच्च । एतेन कुङ्कुममपि कण्ठस्यैवेति प्राप्तम्, वक्त्रसम्बन्धित्वे तु—भिन्नं गलितं वक्त्रादिति शेषः, कुङ्कुमं कण्ठे वर्त्तमानं दृष्ट्वेत्यर्थः ।

अत्राऽऽकूतिमवलोक्य कयाऽपि वितर्कितं पुरुषायितम् असिलतालेखनेन वैदग्ध्यादभिव्यक्तिमुपनीतम्, पुंसामेव कृपाणपाणितायोग्यत्वात्। यथा वा—

सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम्॥ ५२५॥

अत्र जिज्ञासितः सङ्केतकालः कयाचिदिङ्गितमात्रेण विदितो निशासमयशंसिना कमलनिमीलनेन लीलया प्रतिपादितः।

(१९०) उत्तरोत्तरमुत्कर्षो भवेत् सारः परावधिः॥ १२३॥

परः पर्यन्तभागोऽवधिर्यस्य धाराधिरोहितया तत्रैवोत्कर्षस्य विश्रान्तेः। उदाहरणम्—

राज्ये सारं वसुधा वसुधायां पुरं पुरे सौधम्।
सौधे तल्पं तल्पे वराङ्गनाऽनङ्गसर्वस्वम्॥ ५२६॥

---

स्मित्वा तस्या एव पाणौ खड्गलेखां लिलेखेत्यन्वयः। लिखनं व्यञ्जकम्। पुरुषायित एव वक्त्रगलितस्वेदानां कण्ठगमनसम्भवो न तूत्तानसुप्ताया इत्यतः सूक्ष्ममपि पुरुषायितत्वं लक्षितम्, पुरुषधर्मखड्गलेखया प्रकाशितम्। कुङ्कुमभेदोऽत्राऽऽकारः।

इङ्गितेन लक्षितत्वे त्वाह—यथा वा—सङ्केतेति। सङ्केतकाले मनो यस्य तम्। सङ्केतकालमत्र तज्जिज्ञासापरम्। ज्ञात्वेति हस्तसङ्केतादितदिङ्गितादिति शेषः। विटं धूर्त्तमुपनायकम्। हसन्नेत्रेति—हसता नेत्रेण अर्पिताभिप्रायकं यथा स्यात्तथा निमीलितमित्यर्थः। हर्षसूचकविकाश एव नेत्रस्य हासः। अर्पणमत्र ज्ञापनमित्यर्थः। इङ्गितमात्रेणेति, अर्थवशलभ्येनेति शेषः, इङ्गितस्याशब्दत्वात्।

सारालङ्कारमाह—उत्तरोत्तरमिति। परावधिरिति, समापनमुत्तरोत्तरोत्कर्षेणेत्यर्थः। तथात्व एव वैचित्र्यविशेषप्रतीतिरिति भावः। पर्यन्तभागः (A)श्लोकस्येति बोध्यम्। राज्ये सारमिति। पुरादावपि सारमित्यस्यान्वयः। अनङ्गसर्वस्वं वराङ्गना सारमित्यन्वयः। सारशब्दो जहल्लिङ्गोऽजहल्लिङ्गश्च बोध्यः। 'तत् किं त्रिभुवनसारा तारा नाऽऽराधिता भवते'त्यागमे जहल्लिङ्गः; प्रकृते त्वजहल्लिङ्गः।

---

(A) श्लोकस्येति प्रकृताभिप्रायेण, गद्यस्यापीति द्रष्टव्यम्, अविशेषात्तत्राप्यलङ्कारप्रवृत्तेः।

(१६१) भिन्नदेशतयाऽत्यन्तं (A)कार्यकारणभूतयोः।
(B)युगपद् धर्मयोर्यत्र ख्यातिः सा स्यादसङ्गतिः ॥१२४॥

(C)इह यद्देशं कारणं तद्देशमेव कार्यमुत्पद्यमानं दृष्टम्, यथा धूमादि। यत्र तु हेतुफलरूपयोरपि धर्मयोः केनाप्यतिशयेन नानादेशतया युगपदवभासनम्, सा तयोः स्वभावोत्पन्नपरस्परसङ्गतित्यागादसङ्गतिः।

---

नन्वत्र राज्य इत्यादिषु नाधिकरणसप्तमी, राज्याद्यधिकरणेषु वसुधादीनां किञ्चिदपेक्षया सारत्वाप्रतीतौ उत्तरोत्तरमुत्कर्षालाभात्; राज्य इत्यस्य वैयर्थ्यापत्तेश्च; वसुधाया राज्याधेयत्वाभावाच्च। नापि निर्द्धारणसप्तमी, राज्यवसुधादीनां सामान्यविशेषभावाभावेन निर्द्धारणासम्भवात्। 'पुरुषाणां क्षत्रियः शूरः' इत्यादिषु सामान्यविशेषभावसत्त्व एव निर्द्धारणात्। उच्यते—राज्ये राजत्वविषये यद् यद् वस्तु तत्र वसुधा सारम्। वसुधायां यद् यद् वस्तु तत्र पुरं सारमित्युक्तरीत्या सर्वत्र यद् यद् वस्तु तत्रेति पूरणाद् वसुधादिषु सर्वत्राधिकरणसप्तमी। पूरिते तत्रेत्यत्र तु निर्द्धारणसप्तमी। राज्य इत्यत्र विषयसप्तमीति नानुपपत्तिः।

असङ्गत्यलङ्कारमाह—**भिन्नदेशतये**ति। कार्यकारणभूतयोर्धर्मयोरत्यन्तं भिन्नदेशतया स्थितत्वेन युगपत् ख्यातिः कथनम्। [1]युगपत्ता च कथनमात्रे न तूत्पत्तावित्यवधेयम्। अत्र एकत्रैव देशे अवच्छेदभेदेन भिन्नदेशताव्यवर्त्तनाय—**अत्यन्त**मिति। तेन 'दंशो भुजङ्गस्य पदेऽक्षि घूर्णते' इत्यत्र वास्तवकथने नातिव्याप्तिः, तत्र देशस्य शरीरस्यैकत्वात्। **केनाप्यतिशयेने**ति, व्यङ्ग्येन[1]*।

---

(A) कार्यकारणभूतयोरिति। अत्र येन केनापि प्रकारेण कार्यांशेऽभेदाध्यवसानमनुप्राणकम्। केचित्तु लक्षणे कार्यकारणभूतयोरित्युपलक्षणम्, समानाधिकरणत्वेन प्रसिद्धयोर्वैयधिकरण्यनिबन्धोऽसङ्गतिः। 'नेत्रे निरञ्जने तस्याः शून्यास्तु वयमद्भुतम्' इत्यादौ निरञ्जनत्वशून्यतयोरकार्यहेत्वोरपि शुद्धसमानाधिकरणत्वेन प्रसिद्धयोरसङ्गतिरित्याहुरित्युद्द्योतकाराः।

(B) युगपदिति। युगपदिति स्वरूपनिर्वचनम्, न तु व्यावर्त्तकम्,

'उद्भिन्नमात्रे वयसि दृष्ट्वा प्रियतमाधरम्।
भावी लाक्षारसोऽत्रेति कामिनो रज्यते मनः॥'

इत्यत्र कालभेदेऽप्यसङ्गतेरिष्टत्वादिति प्रदीपोद्द्योतयोरनुसन्धेयम्।

(C) इहेति। अत्र यद्देशं तद्देशमिति बहुव्रीहिणा कारणस्य कार्यस्य च क्रमेण विशेषणम्।

---

1. अयमंशो ग-पुस्तके नास्ति।

उदाहरणम्—

जस्सेअ वणो तस्सेअ वेअणा भणइ तं जणो अलिअम् ।
दन्तक्खअं कवोले वहूए वेअणा सवत्तीणम् ॥ ५२७ ॥

एषा च विरोधबाधिनी न विरोधः, भिन्नाधारतयैव द्वयोरिह विरोधितायाः प्रतिभासात् । विरोधे तु विरोधित्वम् एकाश्रयनिष्ठमनुक्तमपि पर्यवसितम्, अपवादविषयपरिहारेणोत्सर्गस्य व्यवस्थितेः । तथा चैवं निदर्शितम् ।

(१९२) समाधिः सुकरं कार्यं कारणान्तरयोगतः ।

साधनान्तरोपकृतेन कर्त्रा यदक्लेशेन कार्यमारब्धं समाधीयते स समाधिर्नाम । उदाहरणम्—

मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्यैतदमुदीर्णं घनगर्जितम् ॥ ५२८ ॥

---

जस्सेअ इति—

[1]यस्य च व्रणस्तस्यैव वेदना भणति तज्जनोऽलीकम् ।
दन्तक्षतं कपोले वध्वा वेदना सपत्नीनाम् ॥ इति संस्कृतम् ।

[2]वेदना इति द्वितीयाबहुवचनान्तं भणतीत्यस्य कर्मपदम् इति[2]* । अत्र व्रणवेदनयोः कारणकार्ययोर्भिन्नदेशतया स्थितत्वेन युगपत् ख्यातिः । अत्र विरोधालङ्कारप्रसक्तिं वारयति एषेति । 'बाधिनी' बाधिका । [3]भिन्नाश्रययोरेकाश्रयत्व इव एकाश्रययोर्भिन्नाश्रयत्वेऽपि विरोधप्रसक्तिरिति भावः[3]* । अनुक्तमपीति । [4]एकाश्रयत्व एव विरोधालङ्कारो न भिन्नाश्रयत्वे इति[4]* विरोधलक्षणे अनुक्तमपीत्यर्थः । [5]अपवाद इति । विशेषविधिरपवादः सामान्यविधिरुत्सर्गः । अयमेव गोवृषन्यायः[5]* । तथा चैवमिति, विरोधालङ्कारोदाहरणम् एकाधिकरण एव विरुद्धतयोदाहृतमित्यर्थः ।

समाध्यलङ्कारमाह—समाधिरिति । 'तत्सिद्धिहेतावेकस्मिन्नि'त्याद्युक्तसमुच्चयालङ्कारेऽपि कारणान्तरयोगोऽस्ति । अत्र तु कार्यस्य सुकरत्वं विशेषः ।

मानमस्या इति । अत्रोद्दीपकेन घनगर्जितेन मानभङ्गः सुकरः ।

---

1. 'यस्यैव' इति मुद्रितपुस्तके । 2. 'वेदना इति इत्यध्याहार्यम्' ग-पुस्तकपाठः । 3. अयमंशो ग-पुस्तके नास्ति । 4. अयमंशो ग-पुस्तके नास्ति । 5. अयमंशो ग-पुस्तके नास्ति ।

(१९३) (A)समं योग्यतया (B)योगो यदि सम्भावितः क्वचित् ॥१२५॥

इदमनयोः श्लाघ्यमिति योग्यतया सम्बन्धस्य नियतविषयम् अध्यवसानं चेत्तदा समम्, तत् सद्योगेऽसद्योगे च। उदाहरणम्—

धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षी
रूपे देवोऽप्ययमनुपमो दत्तपादः स्मरस्य।
जातं दैवात् सदृशमनयोः सङ्गतं यत्तदेतच्
शृङ्गारस्योपनतमधुना राज्यमेकातपत्रम् ॥ ५२९ ॥

---

समनामकमलङ्कारमाह—सममिति। इदमनयोरिति, अनयोरेवेत्यर्थः। इदमेव नियतविषयत्वम्। सद्योग इति, उत्तमयोर्योगे योग्यतासम्भावनमित्यर्थः।

धातुरिति। एषा मृगाक्षी धातुः शिल्पातिशयस्य निकषस्थानम्। एतत्-परिणेता अयं देवोऽपि रूपेऽनुपमः। स्मरस्योपरि दत्तपादस्तदधिकरूपत्वात्। 'दत्तपत्र' इति पाठे पत्रं पत्रावलम्बनम्। अनयोः सङ्गतं मिलनं यद् दैवाज्जातं तदेतदधुना शृङ्गाररसस्य एकातपत्रं राज्यं राजत्वम् उपनतम् उपस्थितम्, प्राप्तयोग्याधिकरणत्वा-दिति भावः। अत्रोत्तमयोर्योगः शृङ्गारप्रशंसया योग्यतया सम्भावितः।

---

(A) योग्यतया आनुरूप्येण। 'समं स्यादानुरूप्येण श्लाघा योग्यस्य वस्तुनः' इति दर्पणे।

(B) अत्रोक्तमुद्द्योते—योग इति संयोगादिरूपः कार्यकारणभावश्च। [ संयोगादिरूपे दत्तोदाहरणमेव ] कार्यकारणभावसंसर्गस्यानुरूपत्वं कारणात् स्वसमानगुणकार्योत्पत्त्या, यथा—

मन्त्रार्पितहविर्दीप्तहुताशनतनूभुवः। शिखास्पर्शेन पाञ्चाल्याः स्थाने दग्धः सुयोधनः ॥ इति।

यादृशगुणकवस्तुसंसर्गस्तादृशगुणोत्पत्त्याऽपि समम्, [ यथा— ]

बडवानलकालकूटलक्ष्मीगरलव्यालगणैः सहैधितः।
रजनीरमणो भवेन्नृणां न कथं प्राणवियोगकारणम् ॥ [ इति ]

क्वचिदिष्टप्राप्त्यर्थं प्रयुक्तात् कारणात् तत्प्राप्त्या च। यथा—

उच्चैर्गजैरटनमर्थयमान एव त्वामाश्रयन्निह चिरादुषितोऽस्मि राजन्।
उच्चाटनं त्वमपि लम्भयसे तदेव मामद्य नैव विफला महतां हि सेवा ॥ इत्यत्र।

यद्यपि स्तुत्या निन्दाभिव्यक्तौ तदुपस्कारको विषमोऽप्यत्रास्ति तथाऽपि व्याजस्तुतिकक्षायां समालङ्कारो न वार्यते। न च लोकसिद्धायाः कारणानुरूपकार्योत्पत्तेर्निबन्धनं न चारुताबहम्, वस्तुतोऽननुरूपयोरपि कार्यकारणयोः श्लेषादिना धर्मैक्यसम्पादनद्वारा अनुरूपतावर्णने, वस्तुतो-ऽनिष्टस्यापि तेनैवोपायेन इष्टाभेदसंपादनेनेष्टप्राप्तिवर्णने चारुतया अनुभवसिद्धत्वाद् इति।

चित्रं चित्रं बत बत महच्चित्रमेतद् विचित्रम्
जातो दैवादुचितरचनासंविधाता विधाता।
यन्निम्बानां परिणतफलस्फीतिरास्वादनीया
यच्चैतस्याः कवलनकलाकोविदः काकलोकः(A) ॥ ५३० ॥

(१६४) क्वचिद् यदतिवैधर्म्यान्न श्लेषो घटनामियात्।
कर्तुः क्रियाफलावाप्तिर्नैवानर्थश्च यद् भवेत् ॥ १२६ ॥
गुणक्रियाभ्यां कार्यस्य कारणस्य गुणक्रिये।
क्रमेण च विरुद्धे यत् स एष विषमो मतः ॥ १२७ ॥

[१]द्वयोरत्यन्तविलक्षणतया यत् अनुपपद्यमानतयैव योगः प्रतीयते, [२]यच्च किञ्चिदारभमाणः कर्त्ता क्रियायाः प्रणाशात् न केवलमभीष्टं तत् फलं न लभेत यावदप्रार्थितमप्यनर्थं विषयमासादयेत्, [३-४]तथा सत्यपि कार्यस्य कारणरूपानुकारे यत् तयोर्गुणौ क्रिये च परस्परं विरुद्धतां व्रजतः स समविपर्ययात्मा चतूरूपो विषमः।

---

निकृष्टयोरप्याह—चित्रमिति। अतिहर्षे अतिविस्मये चात्र द्विस्त्रिरुक्तिः। अत्र निकृष्टयोर्निम्बफलकाकयोर्योगस्तन्निर्मातृप्रशंसया योग्यतया सम्भावितः।

चतुर्विधं विषमालङ्कारमाह—क्वचिद् यदतीति। श्लेषो योगः घटनामुपपद्यमानतां नेयान्न प्राप्नोति। क-द्वयप्रयोग इदं बोध्यम्। 'क्रमेण विरुद्धे' यथासंख्योक्तक्रमेण विरुद्धे। तथा च कार्यकारणयोर्गुणयोः क्रिययोश्च विरोध इत्यर्थः। व्याचष्टे—द्वयोरिति। कर्त्तुः क्रियेत्यादिकं व्याचष्टे—यच्च किञ्चिदिति। क्रियायाः प्रणाशादित्यनेन कालान्तरेऽपि फलावाप्तिर्नास्तीति दर्शितम्। गुणक्रियाभ्यामित्यादिकं व्याचष्टे—तथा सत्यपीति। नियतेऽपीत्यर्थः। 'यद्यप्यवयवावयविरूपकारण-

---

(A) चित्रमित्यादि। दैवाद् विधाता उचिताया अनुरूपाया रचनायाः संविधाता कर्त्ता जातः। यत् निम्बानां परिणतानां परिपक्वानां फलानां स्फीतिः फलसम्पत् आस्वादनीया कृतेति शेषः। यच्चैतस्याः फलसम्पदः काकलोको वायससमूहः कवलनकलाकोविदो भक्षणचातुरीपण्डितः कृत इति शेषः, एतच्चित्रमित्यादि।

---

1. 'यद्यपि कारणगुणाद्यनुकार एव कार्यस्य, तथाऽपि कविनाऽन्यत्रापि तथात्वं सम्भाव्य यत्तयोर्गुणक्रियाविरोधो वर्ण्यत इत्यर्थः' इति ख-पुस्तकपाठः।

क्रमेणोदाहरणम्—

शिरीषादपि मृद्वङ्गी केयमायतलोचना ।
अयं क च कुकूलाग्निकर्कशो मदनानलः ॥ ५३१ ॥

सिंहिकासुतसन्त्रस्तः शशः शीतांशुमाश्रितः ।
जग्रसे साश्रयं तत्र तमन्यः सिंहिकासुतः ॥ ५३२ ॥

सद्यः करस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा ।
तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोक्याभरणं प्रसूते ॥५३३॥

---

कार्ययोरेव (A)गुणक्रियानुकारनियमस्तथाऽपि तत्र तथा नियमदर्शनात् कविसृष्टौ (B)सर्वत्रैव तथा नियमोऽध्यस्यते[1]* ।

**शिरीषादपीति** । (C)कुकूलास्तुषाः । अत्र क-द्वयेन वामलोचनामदनानलयोर्योगोऽनुपपद्यमान इत्युक्तम् ।

कर्त्तुः क्रियेत्याद्युदाहरति—**सिंहिकेति** । सिंहिका सिंही, तत्सुतः सिंहः, तद्वित्रस्तत्वं शशस्य शीतांश्वाश्रयणादुत्प्रेक्षितमेव । साश्रयं सचन्द्रम् । सिंहिका राहुमाता, तत्सुतो राहुः । अत्र स्वक्रियायाः पलायनस्य फलं स्वत्राणम्, तदनाप्तिः, स्वाश्रयनाशोऽधिकोऽनर्थः ।

कार्यकारणयोर्गुणविरोधमाह—**सद्य इति** । तमालनीला कृपाणलेखा प्रतिरणं यस्य करस्पर्शमवाप्य शरदिन्दुवत् पाण्डु यशः प्रसूत इत्यन्वयः । अत्र नीलत्वं कारणस्य खड्गस्य, पाण्डुत्वं कार्यस्य यशसो गुणौ विरुद्धौ ।

---

(A) गुणक्रियानुकारनियम इति । समवायिकारणगुणाः कार्यगुणमारभन्त इति नियमः ।

(B) सर्वत्रैवेति । अवयवावयविरूपकारणकार्यभावातिरिक्तस्थलेऽपि, निमित्तकारणादावपीति यावत् । उद्द्योतकारास्तु—'सद्यः करस्पर्शमवाप्य' इत्युदाहरणप्रसङ्गेन—'अत्र श्यामत्वगुणविशिष्टात् कारणात् तद्विरुद्धगुणयुक्तस्य यशस उत्पत्तिः । अभेदाध्यवसानलक्षणेनातिशयेन समवायिकारणरूपतया स्थिते निमित्तकारणे विषयांशम् [ विषयस्य कार्यस्य प्रकृते यशसोऽंशं शरदिन्दुपाण्डिति विशेषणांशम् ] आलम्ब्य भातो विरोधो विषय्यंशविमर्शनात् [ विषयिण्याः कृपाणलेखाया विशेषणांशस्य तमालनीलत्वस्य विमर्शनात् निमित्तकारणगतत्वपर्यालोचनात् ] निवर्त्तत इति । अत्राभेदाध्यवसायोऽनुप्राणकः, तदुत्थापितविरोधश्च परिपोषकः' इत्याहुः ।

(C) कुकूलाग्निः करीषाग्निः कुम्भकारपचनाग्निरित्यन्य इत्युद्द्योतः ।

आनन्दममन्दमिमं कुवलयदललोचने ददासि त्वम् ।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे(A) ॥ ५३४ ॥

अत्राऽऽनन्ददानं शरीरतापेन विरुध्यते । एवम्—

विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये ।
मदविभ्रमासकलया पपे पुनः स पुरस्त्रियैकतमयैकया दृशा ॥५३५॥

इत्यादावपि विषमत्वं यथायोगमवगन्तव्यम् ।

(१६५) महतोर्यन्महीयांसावाश्रिताश्रययोः क्रमात् ।
आश्रयाश्रयिणौ स्यातां तनुत्वेऽप्यधिकं तु तत् ॥१२८॥

---

कार्यकारणयोः क्रियाविरोधमाह—**आनन्दमिति** । कुवलयदललोचने इति सम्बोधनम् । अत्राऽऽनन्ददानं कारणीभूतनायिकायाः क्रिया, तत्कार्यस्य विरहस्य तु शरीरतापनं क्रिया तद्विरुद्धा । अत्र चाऽऽनन्दतापयोर्गुणयोर्विरोधो नाशङ्कनीयः, क्रियां विना कार्यकारणरूपधर्मिगतत्वेन तयोरनिर्देशात् ।

'इत्थं निमित्तकारणकार्ययोः क्रियाविरोधमुदाहृत्य अवयवावयविरूपकार्यकारणयोः क्रियाविरोधमुदाहरति'[1]*—**एवं—विपुलेनेति** । यस्य सागरशयस्य कृष्णस्य सागरशयनदशायां विपुलेन कुक्षिणा युगक्षयकाले भुवनानि पपिरे पीतानि, स कृष्णः पुनरेकतमया पुरस्त्रिया कर्त्र्या मदविभ्रमेणासकलया कटाक्षरूपया एकया दृशा करणभूतया पपे कटाक्षेण सर्वाङ्गीणं दृष्ट इत्यर्थः । अत्र कुक्षिरवयवः कारणम्, तत्कर्तृका पानक्रिया सागरशयस्यावयविनः कार्यस्य कर्मतासम्बन्धेन पानक्रियया विरुद्धा, भुवनपातृकुक्षिमत एकनार्येकलोचनैकदेशपेयत्वस्य विरुद्धत्वेनैव भानात् । **यथायोगमिति** । अनेन कर्तृताकर्मतोभयसम्बन्धाभ्यां क्रिययोरपि विरोधसम्भव इत्युक्तम् ।

अधिकनामकमलङ्कारमाह—**महतोरिति** । महतोराश्रिताश्रययोराश्रयाश्रयिणौ तनू अपि यन्महीयांसौ वर्णनावशात् स्याताम्, तद् यथासङ्ख्यं द्विविधोऽधिकसंज्ञकोऽलङ्कार

---

(A) इममिति इदानीमेव दर्शनदशायाम् अनुभूयमानम् । 'अत्र नायिकाविरहयोर्जन्यजनकयोरानन्दजननतापक्रिययोर्विरोधः । न चात्रासङ्गतिर्विरोधो वा; विरोधे विरोधिनोः सामानाधिकरण्यस्य, असङ्गतौ कार्यकारणयोर्वैयधिकरण्यस्य चमत्कारप्रयोजकता; अत्र तु कार्यकारणवृत्तिविजातीयक्रियागुणयोगस्य चमत्कारितेति विशेषादि'त्युद्द्योतः ।

---

1. 'अवयवावयविरूपकार्यकारणयोरपि क्रियाविरोधं दर्शयति' इति ग-पुस्तकपाठः ।

आश्रितमाधेयम् आश्रयस्तदाधारः, तयोर्महतोरपि विषये तद्‌पेक्षया तनू अप्याश्रयाश्रयिणौ प्रस्तुतवस्तुप्रकर्षविवक्षया यथाक्रमं यद् अधिकतरतां व्रजतः, तदिदं द्विविधम् अधिकं नाम।

क्रमेणोदाहरणम्—

अहो विशालं भूपाल भुवनत्रितयोदरम्।
माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥५३६॥

युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाशमासत।
तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः ॥५३७॥

---

इत्यर्थः। तथा च महत आश्रितस्याऽऽश्रयस्तनुत्वेऽपि महीयान्, महत आश्रयस्याऽऽश्रितस्तनुत्वेऽपि महीयान् वर्णित इत्यर्थः। व्याचष्टे—**आश्रितमिति**। **महतोरपि विषये** इति, महतोरपि सम्बन्धिनावित्यर्थः। तनुत्वेऽपि (A)महीयोवर्णनफलमाह—**प्रस्तुतवस्त्विति**, वर्ण्यमानवस्त्वित्यर्थः।

महत आश्रितस्याऽऽश्रयं महीयांसमाह—**अहो** इति। विशालत्वमुपपादयति—**मातीति**। मातुं परिमातुमशक्योऽपि ते यशोराशिरत्र भुवनत्रितयोदरे यन्माति अवकाशं लभते अतो विशालमित्यर्थः। अत्राऽऽश्रितो यशोराशिर्महान्, तदपेक्षया तनुत्वेन कविविवक्षितमपि भुवनत्रितयोदरं विशालत्वरूपमहीयस्त्वेन वर्णितम्।

महत आश्रयस्य महीयांसमाश्रितमाह—**युगान्तेति**। नारदागमने कृष्णस्य हर्षवर्णनमिदम्। युगान्तकाले प्रतिसंहृताः स्वोदरे प्रवेशिता आत्मानः समस्तप्राणिनो येन तादृशस्य यस्य कैटभद्विषः कृष्णस्य यस्यां तनौ जगन्ति सविकाशम् अयन्त्रणम् आसत तस्य कृष्णस्य तस्यां तनौ तपोधनाभ्यागमसम्भवा मुदो न ममुर्नावकाशं लेभिरे। नित्यायस्ततनो (नित्यायास्तत्तनो)रवस्थामात्रभेद इति मतेन, ईश्वरतनुत्वेन तत्तनूनामेकत्वाध्यासाद् (B) वेदं बोध्यम्। अत्र युगान्तेत्यादिविशेषणवशादाश्रयः कृष्णतनुर्महती तदाश्रिता मुदस्तन्व्योऽपि तत्रावकाशालाभान्महत्यो वर्णिताः।

---

(A) महीय इति। महीयस्त्ववर्णनफलमित्युचितः पाठः।

(B) इदमिति—'यस्या'मिति 'तत्रे'ति यत्तद्भ्यामुपस्थापितं तनुद्वयस्यैक्यकथनमित्यर्थः, अन्यथा 'युगान्तकालप्रतिसंहृतात्मनो' भगवतः, पाण्डवसखस्य श्रीकृष्णस्य च भेदादेकार्थप्रतिपादनपरा यत्तच्छब्दद्वयी नोपयुज्यत इति भावः।

(१९६) प्रतिपक्षमशक्तेन प्रतिकर्तुं तिरस्क्रिया ।
या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते ॥१२९॥

(A)न्यक्कृतिपरमपि विपक्षं साक्षान्निरसितुमशक्तेन केनापि यत् तमेव प्रतिपक्षमुत्कर्षयितुं तदाश्रितस्य तिरस्करणम्, तद् (B)अनीकप्रतिनिधितुल्यत्वात् प्रत्यनीकमभिधीयते। यथाऽनीकेऽभियोज्ये तत्प्रतिनिधिभूतमपरं मूढतया केनचिदभियुज्यते, तथेह प्रतियोगिनि विजेये तदीयोऽन्यो विजीयत इत्यर्थः। उदाहरणम्—

त्वं विनिर्जितमनोभवरूपः सा च सुन्दर भवत्यनुरक्ता ।
पञ्चभिर्युगपदेव शरैस्तां ताडयत्यनुशयादिव कामः ॥५३८॥

यथा वा—

यस्य किञ्चिदपकर्त्तुमक्षमः कायनिग्रहगृहीतविग्रहः ।
कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनाऽपि बाधते ॥५३९॥

---

प्रत्यनीकालङ्कारमाह—प्रतिपक्षमिति। प्रतिपक्षं प्रतिकर्त्तुं निग्रहीतुमशक्तेन जनेन या तदीयस्यापरस्य तिरस्क्रिया तस्य प्रतिपक्षस्यैव स्तुत्यै पर्यवस्यति, सा प्रत्यनीकनामाऽलङ्कार इत्यर्थः। व्याचष्टे—न्यक्कृतीति। इदं प्रतिकरणबीजं दर्शितम्। संज्ञाव्युत्पत्तिमाह—अनीकेति। तदपि पुनर्विशदयति—यथेति।

त्वं विनिर्जितेति। नायके दूत्या उक्तिरियम्। भवत्यनुरक्ता त्वय्यनुरक्ता, अनेन तस्यास्तदीयत्वं दर्शितम्। अतोऽनुशयाद् दुःखादिव तां कामः पञ्चभिः शरैर्युगपदेव ताडयतीत्यर्थः। अत्र रूपनिर्जयात् कामस्य न्यक्कृतिपरो नायकः, तत् प्रतिकर्त्तुमशक्तेन कामेन तदनुरक्तनायिकातिरस्क्रिया नायकस्यैव (C)सौन्दर्यस्तुत्यै।

प्रपञ्चयति—यथा वा—यस्येति। विष्णुना राहुशिरःकर्त्तनाद् विष्णुस्वरूपेण कृष्णेन राहोः कायनिग्रहः कृतः, ततो गृहीतमत्सरो राहुर्यस्य कृष्णस्य किञ्चिदप-

---

(A) न्यक्कृतिपरमपीति। न्यक्कृतिपरम् अपकारपरायणम्।

(B) अनीकप्रतिनिधितुल्यत्वादिति। अनीकं सैन्यं तत्प्रतिनिधितुल्यत्वादित्यर्थः।

(C) सौन्दर्यस्तुत्यै इति, कामेनाप्यजय्यसौन्दर्य इति प्रशंसायै इत्यर्थः; कथमन्यथा साक्षादपकारिणमपहाय तत्सम्बन्धिनमभिभवतीति भावः।

इन्दोरत्र तदीयता सम्बन्धिसम्बन्धात् ।

(१६७) समेन लक्ष्मणा वस्तु वस्तुना यन्निगूह्यते ।
निजेनाऽऽगन्तुना वाऽपि तन्मीलितमिति स्मृतम् ॥१३०॥

सहजमागन्तुकं वा किमपि साधारणं यत् लक्षणं तद्द्वारेण यत् किञ्चित् केनचिद् (A)वस्तुस्थित्यैव बलीयस्तया तिरोधीयते तन्मीलितमिति द्विधा स्मरन्ति । क्रमेणोदाहरणम्—

अपाङ्गतरले दृशौ मधुरवक्रवर्णा गिरो
विलासभरमन्थरा गतिरतीव कान्तं मुखम् ।
इति स्फुरितमङ्गके मृगदृशां स्वतो लीलया
तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते(B) ॥५४०॥

---

कर्त्तुमक्षमः सन् यस्य कमनीयवक्त्रसदृशाकृतिम् इन्दुम् अधुनाऽपि बाधते, यतः कृती कार्यकुशल इत्यर्थः । (C)अत्रेन्दोः कृष्णसम्बन्धित्वं घटयति—इन्दोरत्रेति । कृष्णसम्बन्धि तद्वक्त्रं साहृश्यात्तत्सम्बन्धी इन्दुरिति सम्बन्धिसम्बन्धः ।

मीलितालङ्कारमाह—समेनेति । निगूह्यमानस्य यल्लक्ष्म चिह्नं तत्समेन निगूहकस्य लक्ष्मणा निजेन आगन्तुकेन वा वस्तु यन्निगूह्यते अपरिचेयीक्रियते, तन्निगूहनमेव निजागन्तुकत्वभेदाद् द्विविधो मीलितालङ्कार इत्यर्थः । लक्ष्मण एव द्वैविध्यमस्तीत्याह—निजेनेति । व्याचष्टे—सहजमिति । निगूहने हेतुमाह—वस्तुस्थित्यैवेति ।

अपाङ्गेति । मृगदृशामङ्गके लीलया स्वत एव इति स्फुरितम् । किन्तदित्यत्राऽऽह—अपाङ्गेति । तत्तस्मादत्रापाङ्गके मदोदयो मदिरामत्ततोदयः कृतपदोऽपि न संलक्ष्यत

---

(A) वस्तुस्थित्यैवेति । अयञ्च कारिकास्थस्य 'वस्तुने'ति पदस्य लक्ष्योऽर्थः ।

(B) अपाङ्गतरले इति । अपाङ्गस्तरलो ययोस्ते, अपाङ्गयोस्तरले चञ्चले इति वा । मधुरा वक्रा वक्रोक्तिसमर्पका वर्णा यासु [ ताः ] इत्युद्द्योते विषमपदव्याख्या ।

(C) अत्रेन्दोरिति । अत्र सुधासागरकृतः—नन्वत्र कृष्णस्य न स्वस्वामिभावः सम्बन्धः प्रतीयते, तथा च कथं तदीयत्वम्, अतदीयत्वे च कथं प्रत्यनीकत्वमिति कृष्णेन्द्वोः सम्बन्धित्वं घटयति—'यत्पदार्थस्य कृष्णस्य वक्त्रेणावयवावयविभावः सम्बन्धः, वक्त्रस्येन्दुना उपमानोपमेयभाव इति साक्षात् सम्बन्धाभावेऽपि परम्परासम्बन्धात्तदीयत्वमित्यर्थः । इति ।

अत्र दृक्तरलतादिकमङ्गस्य लिङ्गं स्वाभाविकम्, साधारणं च मदोदयेन, तत्राप्येतस्य दर्शनात्।

ये कन्दरासु निवसन्ति सदा हिमाद्रे-
स्त्वत्पातशङ्कितधियो विवशा द्विषस्ते।
अप्यङ्गमुत्पुलकमुद्वहतां सकम्पं
तेषामहो बत भियां न बुधोऽप्यभिज्ञः ॥५४१॥

अत्र तु सामर्थ्याद् अवसितस्य शैत्यस्य आगन्तुकत्वात् तत्प्रभवयोरपि कम्पपुलकयोस्ताद्रूप्यं समानता च, भयेष्वपि तयोरुपलक्षितत्वात्।

(१६८) (A)स्थाप्यतेऽपोह्यते वाऽपि यथापूर्वं परं परम्।
विशेषणतया यत्र वस्तु सैकावली द्विधा ॥ १३१ ॥

---

इत्यर्थः। अत्राङ्गस्य स्वाभाविकेन दृक्तरलत्वादिना लक्ष्मणा मदोदयसाधारणेन तत्तिरोधानं ग्राहयति—अत्रेति।

आगन्तुलक्ष्मणा निगूहनमाह—ये कन्दरास्विति। त्वत्पातशङ्किता त्वदभिपाताशङ्कायुक्ता धीर्येषां तादृशा [विवशा]स्त्रासादिना अनायत्तेन्द्रियास्ते द्विषो ये हिमालयाद्रेः कन्दरासु निवसन्ति, अहो आश्चर्यम्, भयादुत्पुलकं सकम्पं चाङ्गमुद्वहतामपि तेषां भियामभिज्ञो बुधो विचक्षणजनोऽपि नेत्यर्थः, हिमसम्बन्धेनापि पुलकादिसम्भवादिति भावः। अत्र भयस्य शैत्यस्य च साधारणौ कम्पपुलकौ आगन्तुलक्ष्मणी, ताभ्यां भयस्य तिरोधानम्। ननु कम्पपुलकयोस्तदङ्गवृत्तित्वात् कथमागन्तुकत्वम् इत्यत आह—अत्रेति। 'सामर्थ्यात्' 'हिमाद्रिपदलभ्यहिमस्य'[1], 'अवसितस्य' प्राप्तस्य। 'ताद्रूप्यम्' आगन्तुत्वम्।

एकावल्यलङ्कारमाह—स्थाप्यत इति। अपोह्यते निषिध्यते।

---

(A) स्थाप्यते इत्यादि। 'स्थापनं विधिः, अपोहो निषेधः। यथापूर्वमिति वीप्सायामव्ययीभावः, तेन पूर्वं पूर्वं वस्तु प्रत्युत्तरस्य वस्तुनो यत्र विशेषणतया बाहुल्येन विधिः, यत्र वा तथा निषेधः सा द्विधैकावली। विशेषणतया विधिरित्यस्य विधेर्विशेषणत्वमित्यर्थः, एवं विशेषणतया निषेधोऽपि। कश्चित्तु—'पूर्वकालविशेषणतया स्थितं वस्तु परं विशेष्यं कृत्वा

---

1. 'कम्पपुलकयोः' इति ग-पुस्तकपाठः

पूर्वं पूर्वं प्रति यथोत्तरस्य वस्तुनो वीप्सया विशेषणभावेन यत् स्थापनं निषेधो वा सम्भवति, सा द्विधा बुधैरेकावली भण्यते।

क्रमेणोदाहरणम्—

पुराणि यस्यां सवराङ्गनानि वराङ्गना रूपपुरस्कृताङ्गयः।

रूपं समुन्मीलितसद्विलासमस्त्रं विलासाः कुसुमायुधस्य॥५४२॥

न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद् यदलीनषट्पदम्।

न षट्पदोऽसौ [1]कलगुञ्जितो न यो न गुञ्जितं तन्न जहार यन्मनः॥५४३॥

---

पुराणीति। यस्यां नगर्यां पुराणि (A)गृहवाटिकाः वराङ्गनासहितानि, वराङ्गनाश्च रूपेत्यादयः। समुन्मीलित उद्बुद्धः सद्विलासः सल्लावण्यं यत्र, रूप तादृशम्; विलासाः कुसुमायुधस्यास्त्रमित्यन्वयः। अत्र विशेषणतया स्थापनं स्वयमग्रे ग्राहयिष्यति।

विशेषणतया(B) निषेधमाह—न तज्जलमिति। शरत्कालीनजलादिवर्णनमिदम्। श्लोकः स्पष्टार्थः। [2]अत्र सुचारुपङ्कजत्वाभावमुद्दिश्य जलत्वाभावो विधेयः पूर्वं निर्दिष्टः।

---

यत्र स्थाप्यतेऽपोह्यते वा सैकावलीति सूत्रार्थः।' इत्याह; तत्तु पूर्वं प्रति यथोत्तरस्य वस्तुन इत्यादिप्रकाशविरुद्धम्' इति प्रदीपसुधासागरकारादयः।

(A) गृहवाटिका गृहोद्यानम्। एतच्च सम्भवप्रदर्शनार्थमुक्तमिति मन्ये, पुरशब्दस्य तादृशार्थे कोषाद्यनुपलम्भात्। गृहाणीति साम्प्रतम्।

(B) विशेषणतयेति। विशेष्यतयेत्यपि बोध्यम्। यथा—

धर्मेण बुद्धिस्तव देव शुद्धा बुद्ध्या निबद्धा सहसैव लक्ष्मीः।

लक्ष्म्या च तुष्टा भुवि सर्वलोका लोकैश्च नीता भुवनेषु कीर्त्तिः॥ इति।

अत्रोत्तरोत्तरविशेषणं पूर्वं पूर्वं प्रति विशेष्यम्। इत्युद्द्योते। उक्तञ्च दर्पणे—'क्वचिद् विशेष्यमपि यथोत्तरं विशेषणतया स्थापितमपोहितञ्च दृश्यते। यथा—

वाप्यो भवन्ति विमलाः स्फुटन्ति कमलानि वापीषु।

कमलेषु पतन्त्यलयः करोति सङ्गीतमलिषु पदम्॥ एवमपोहनेऽपी'ति।

अपोहनोदाहरणञ्चोहते तर्कवागीशः—

'पुण्यक्षेत्रं न सर्वत्र पुण्यक्षेत्रे न नास्तिकाः।

नास्तिकेषु न धर्मोऽस्ति न धर्मे दुःखहेतुता॥

अत्र पूर्वपूर्वेषु विशेष्याः पुण्यक्षेत्रनास्तिकधर्माः, परपरेषु नास्तिकधर्मदुःखहेतुताश्च विशेषणत्वेनापोहिताः' इति।

---

1. 'न जुगुञ्ज यः कलम्' इत्यपि पाठः। 2. इदं ग-पुस्तके नास्ति।

पूर्वत्र पुराणां वराङ्गनाः, तासामङ्गविशेषणमुखेन रूपम्, तस्य विलासाः, तेषामप्यस्त्रमित्यमुना क्रमेण विशेषणं विधीयते; उत्तरत्र प्रतिषेधेऽप्येवं योज्यम्।

(१६६) यथानुभवमर्थस्य दृष्टे तत्सदृशे स्मृतिः।

स्मरणम्(A)——

---

तद्वृत्तेरभावस्य प्रतियोगितया सुचारुपङ्कजत्वमुक्तम्। सुचारुपङ्कजत्वञ्च सुचारु पङ्कजं यत्रेति बहुव्रीहिणा सुचारुपङ्कजमेव विशेषणमपोहितम्, एवमुत्तरत्रापि[*]। पूर्वश्लोके परपरस्य पूर्वपूर्वविशेषणतया स्थापनं दर्शयति—पूर्वत्रेति।

'ननु वराङ्गनानां विशेषणं न रूपं किन्त्वङ्गमेव। तथा च समुन्मीलितेत्यादिकं कथं पूर्वनिर्दिष्टविशेषणतया स्थापितम्? अविशेषणे रूप एव स्थापितत्वादित्यतो रूपस्यापि परम्परया विशेषणत्वमुपपादयति—[1]*तासामङ्गविशेषणमुखेनेति। रूपं न साक्षाद् वराङ्गनाविशेषणं किन्तु तासामङ्गं तस्य च परिष्कृतत्वं तस्य च रूपं विशेषणमिति परम्परया रूपं तासां विशेषणमित्यर्थः। उत्तरश्लोके तु विशेषणतया निषेधं दर्शयति—उत्तरत्रेति। जले सुचारुपङ्कजत्वं पङ्कजे लीनषट्पदत्वं षट्पदे च कलं गुञ्जितं गुञ्जिते च मनोहरणं निषेधप्रतियोगित्वेनोक्तत्वादपोहितमित्यर्थः।

स्मरणालङ्कारमाह—यथानुभवमिति। सदृशे दृष्टे ज्ञाते सति अर्थस्य यथानुभवं

---

(A) अत्रार्थस्य स्मृतिः स्मरणालङ्कार इति लक्षणम्। यथानुभवमिति स्मृत्याकारदर्शनम् [न तु लक्षणघटकम्, स्मृतावनुभवस्य कारणत्वेन सर्वत्रैव स्मृतौ तस्याऽऽवश्यकत्वात्]। दृष्टे तत्सदृशे इति तद्धेतुसंस्कारोद्बोधहेतुनिर्देशः, अदृष्टादेरप्युपलक्षणात्। यद्वा अन्यादृशस्मृते-श्चारुत्वाभावेनालङ्कारत्वाभावाद् व्यवच्छेदकतया लक्षणान्तर्गतमेवैतदिति प्रदीपः।

स्मृत्युद्भेदप्रकार उक्तो बालबोधिन्याम्—'यादृशं वस्त्वेकदाऽनुभूयते तादृशमेव तदन्यदा स्मर्यत इति नियमात् स्मृतावनुभवः कारणम्। अनुभवोऽपि न साक्षादेव कारणम्, अन्यमन-स्कस्य पथि दृष्टतृणादेरस्मरणात्; किन्तु संस्कारद्वारा, ततश्च तत्रोपेक्षया तृणादेर्दर्शनान्न संस्कारः; अनुपेक्षात्मक एवानुभवः संस्कारं जनयतीति न स्मृतिः। संस्कारश्चोद्बुद्ध एव स्मृतिं जनयति न त्वनुद्बुद्धः। अत एव संस्कारस्य सर्वदा सत्त्वेऽपि न सर्वदा स्मृतिप्रसङ्गः। उद्बोधकाश्च सम्बन्धिज्ञानादिरूपा नाना, यथा हस्तिदर्शनात् संस्कारोद्बोधद्वारा हस्तिपकस्य स्मरणमिति स्मृति-प्रणाली। एवञ्च सादृश्यसम्बन्धमूलकमेव सम्बन्धिनः स्मरणं स्मरणालङ्कार इति प्रकाशाभिप्रायः। वस्तुतो वैचित्र्यजनकं स्मरणमात्रमेव स्मरणालङ्कार इति युक्तमिति विवरणे स्पष्टम्' इति।

---

1. इदं ग-पुस्तके नास्ति।

यः पदार्थः केनचिदाकारेण (A)नियतो यदा कदाचिदनुभूतोऽभूत्, स कालान्तरे (B)स्मृतिप्रबोधाधायिनि तत्समाने वस्तुनि दृष्टे सति यत् तथैव स्मर्यते तद् भवेत् स्मरणम्। उदाहरणम्—

निम्ननाभिकुहरेषु यदम्भः प्लावितं चलदृशां लहरीभिः।

तद्भवैः कुहरुतैः सुरनार्यः स्मारिताः सुरतकण्ठरुतानाम् ॥५४४॥

यथा वा—

करजुअगहिअजसोआत्थणमुहविणिवेसिआहरपुडस्स।

संभरिअपंचजण्णस्स णमह कण्हस्स रोमञ्चम् ॥ ५४५ ॥

(२००) भ्रान्तिमानन्यसंवित् तत्तुल्यदर्शने ॥ १३२ ॥

तदिति अन्यद् अप्राकरणिकं निर्दिश्यते; तेन समानम् अर्थादिह प्राकरणिकम् आश्रीयते। तस्य तथाविधस्य दृष्टौ सत्यां यत् अप्रा-

---

स्मृतिरित्यर्थः। स्मृतिप्रबोधः स्मृत्युत्पत्तिः। तथैवेति, पूर्वानुभूतरूपेणैवेत्यर्थः। निम्ननाभीति। अप्सरसां जलक्रीडावर्णनमिदम्। लहरीभिस्तरङ्गैर्निम्ननाभिगुहासु यदम्भः प्लावितं प्रवेशितं तद्भवैः कुहरुतैः कुहेत्यव्यक्तशब्दैः सुरनार्यः सुरतकालीन-कण्ठरुतानां स्मारिताः। 'स्मृत्यर्थकर्मणि' इति कर्मणि षष्ठी। सुरतकाले स्त्रीणां (C)कण्ठे तादृशध्वनिरुच्चरतीति कविसम्प्रदायः।

प्रपञ्चयति—यथा वा, करजुअ इति—

करयुगगृहीतयशोदास्तनमुखविनिवेशिताधरपुटस्य।

संस्मृतपाञ्चजन्यस्य प्रणमत कृष्णस्य रोमाञ्चम् ॥ इति संस्कृतम्।

अत्र विनिवेशिताधरपुटस्य स्तनस्य सादृश्यात् पाञ्चजन्यस्मरणम्।

भ्रान्तिमदलङ्कारमाह—भ्रान्तिमानिति। अप्राकरणिकतुल्यस्य प्राकरणिकस्य दर्शने सत्यन्यत्वेनाप्राकरणिकत्वेन प्राकरणिकस्य संविज् ज्ञानमित्यर्थः। तत्तुल्येत्यत्र तत्पदस्याप्राकरणिकपरतां व्याचष्टे—तदितीति। 'तथाविधस्य' अप्राकरणिकतुल्यस्य

---

(A) नियतो निश्चयविषयीभूतः कृतः।

(B) स्मृतिप्रतिबोधाधायिनी'ति क्वचित् पाठे स्मृत्युद्बोधजनके इत्येवार्थः।

(C) कण्ठो योनिरूपो गर्त्तः 'कण्ठावटश्वभ्रगर्त्ताः' इति कोषादित्युद्द्योतः।

करणिकतया संवेदनं स भ्रान्तिमान्। न चैष रूपकं प्रथमातिशयोक्तिर्वा, तत्र (A)वस्तुतो भ्रमस्याभावात्, इह च अर्थानुगमेन संज्ञाया: प्रवृत्तेस्तस्य स्पष्टमेव प्रतिपन्नत्वात्। उदाहरणम्—

कपाले मार्जारः पय इति कराँल्लेढि शशिन-
स्तरुच्छिद्रप्रोतान् बिसमिति करी संकलयति।
रतान्ते तल्पस्थान् हरति वनिताऽप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो [1]विभ्रमयति(B) ॥ ५४६ ॥

---

प्राकरणिकस्य। न चेति। [2]प्राकरणिकस्याप्राकरणिकचन्द्रतुल्यत्वेन संवेदनाद् रूपकप्रसक्तिः[2]*। ननु रूपके मुखस्याऽऽरोपविषयस्य (C)पदोपस्थाप्यत्वमत्र तु नेति भेदः स्यादित्यत आह—प्रथमा वेति। 'कमलमनम्भसी'त्यादाविव उपमेयनिगरणरूपेत्यर्थः। [3]वस्तुतो भ्रमस्येति। आहार्यज्ञानविषयत्वात्तस्येत्यर्थः[3]*। [4]अर्थानुगमेनेति। विषयतासम्बन्धेन भ्रान्तिविशिष्ट इत्येवमर्थानुगमः। बाधावतारात् पूर्वं भ्रमः, बाधकालीनन्त्वाहार्यम्। तच्च भ्रमप्रमाभिन्नं तृतीयज्ञानमेवेति तत्सिद्धान्तः[4]*।

कपाले इति। अहो प्रभामत्तश्चन्द्रो जगदिदं विभ्रमयति विशेषेण भ्रान्तं करोति। भ्रान्तिं दर्शयति—कपाले इति। कपाले स्थालीकर्परे, पयः क्षीरमिति कृत्वेत्यर्थः।

---

(A) वस्तुतो भ्रमस्येति, स्वारसिकभ्रमस्येत्यर्थः। अत्र हि प्रवृत्तिनिवृत्तिकारी स्वारसिकभ्रमो विवक्षितः, रूपके निगीर्याध्यवसानरूपायां, प्रथमातिशयोक्तौ च शब्दाधीनो वैयञ्जनिको भ्रम इति तयोर्भेदः। वस्तुतस्तु यत्र 'इती'त्यादिपदेन भ्रमत्वेन निबध्यते व्यज्यते वा तत्रायमलङ्कार इति नातिप्रसङ्गशङ्केत्युद्द्योतकाराणां हृदयम्।

(B) प्रभामत्त इति। प्रभया मत्तस्तदतिशयशाली। मत्तो हि स्वयमेव भ्रमति न तु परस्य भ्रममुत्पादयतीत्याश्चर्यम् 'अहो'शब्देन बोध्यते इत्युद्द्योतः।

(C) पदोपस्थाप्यत्वमिति, आरोप्यमाणसमानविभक्तिकपदोपस्थाप्यत्वमित्यर्थः। एवञ्च 'कपाले मार्जारः पय इति कराँल्लेढि शशिनः' इत्यत्राऽऽरोप्यमाणारोपविषययोः पयःशशिकरयोः पदोपस्थाप्यत्वेऽपि न निरुक्तसमानविभक्तिकपदोपस्थाप्यत्वमिति न प्रकृते रूपकप्रसक्तिः।

---

1. 'विप्लवयति' इति क्वचित् पाठः। 2. 'चन्द्रतुल्यमुखदर्शने चन्द्रत्वेनाऽऽहार्यज्ञानं चन्द्राभेदरूपं रूपकमित्यर्थः' इति ग-पुस्तकपाठः। 3. 'तत्रेति। तत्राऽऽहार्यमेव ज्ञानं न विशेषादर्शनजन्यो भ्रम इत्यर्थः' इति ग-पुस्तकपाठः। 4. 'आहार्यज्ञानन्तु भ्रमप्रमाभिन्नं तृतीयप्रकारकज्ञानमेव तत्सिद्धान्त इति भावः। अर्थानुगमेनेति। भ्रान्तिमत्त्वमर्थस्य विषयतासम्बन्धेनेत्यर्थानुगमः' इति ग-पुस्तकपाठः।

(२०१) आक्षेप उपमानस्य प्रतीपमुपमेयता ।

तस्यैव यदि वा कल्प्या तिरस्कारनिबन्धनम् ॥ १३३ ॥

[१]अस्य धुरं सुतरामुपमेयमेव वोढुं प्रौढमिति कैमर्थ्येन यदुपमानमाक्षिप्यते, [२]यदपि तस्यैवोपमानतया प्रसिद्धस्य उपमानान्तरविवक्षयाऽनादरार्थमुपमेयभावः कल्प्यते तदुपमेयस्योपमानप्रतिकूलवर्तित्वादुभयरूपं प्रतीपम् । क्रमेणोदाहरणम्—

लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां
देव त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा ।
इन्दुः किं घटितः किमेष विहितः पूषा किमुत्पादितं
चिन्तारत्नमदो मुधैव किममी सृष्टाः कुलक्ष्माभृतः ॥ ५४७ ॥

ए एहि दाव सुन्दरि कण्णं दाऊण सुणसु वअणिज्जम् ।
तुज्झ मुहेण किसोअरि चन्दो उअमिज्जइ जणेण ॥ ५४८ ॥

---

तरुच्छिद्रं तरुदलच्छिद्रं तेन [तत्र] प्रोतान् प्रविष्टान् शशिनः करानिति सर्वत्रान्वयः । बिसं मृणालम्, सङ्कलयति गृह्णाति । वनिता चात्र रतिलग्ना ।

द्विविधं प्रतीपालङ्कारमाह—आक्षेप इति । निष्फलत्वेन कथनमत्राऽऽक्षेपः । तस्यैवोपमानस्य यदि वा तिरस्कारनिबन्धना उपमेयता कल्प्येत्यर्थः । 'निबन्धनं' निमित्तम् । व्याचष्टे—अस्येति । कैमर्थ्येन किमर्थतया वैयर्थ्येनेत्यर्थः । संज्ञाव्युत्पत्तिमाह—तदुपमेयस्येति । लावण्यौकसीति । हे देव, लावण्येत्यादिविशेषणचतुष्टयविशिष्टे त्वयि वेधसा निष्पादिते सति इन्द्वादिचतुष्टयनिर्माणवैयर्थ्यमिति समुदायवाक्यार्थः । तत्र लावण्येत्यादिविशेषणादिन्दोः, प्रतापगरिमसाहित्यात् पूष्णः सूर्यस्य, त्यागिनामग्रेसरत्वाच्चिन्तारत्नस्य अवनिभरक्षमभुजत्वात् (A)कुलक्ष्माभृतां कुलाचलानां सर्जनवैयर्थ्यं (B)यथासंख्यं बोध्यम् ।

उपमानस्योपमेयताकल्पनमाह—ए एहीति—

---

(A) कुलक्ष्माभृताम्—'महेन्द्रो मलयः सह्यः शक्तिमान् ऋक्षपर्वतः ।
बिन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ॥' इत्युक्तानाम् ।

(B) यथासंख्यमिति । एवञ्चात्र यथासंख्यालङ्कारस्य स्थितावपि आक्षेप एवाधिकचमत्कारीति प्रतीपोदाहरणताऽस्य पद्यस्येति प्रदीपकाराणामभिप्रायः ।

अत्र मुखेनोपमीयमानस्य शशिनः स्वल्पतरगुणत्वादुपमित्यनिष्पत्त्या 'वअणिज्ज'मिति वचनीयपदाभिव्यंग्यया[1] तिरस्कारः।

क्वचि[2]न्निष्पन्नैवोपमितिक्रियाऽनादरनिबन्धनम्। यथा—

गर्वमसंवाह्यमिमं लोचनयुगलेन किं वहसि मुग्धे।
सन्तीदृशानि दिशि दिशि सरःसु ननु नीलनलिनानि ॥५४९॥

(A)ए एहि तावत् सुन्दरि कर्णं दत्त्वा शृणु वचनीयम्।
तव मुखेन कृशोदरि चन्द्र उपमीयते जनेन ॥ इति संस्कृतम्।

ए इति प्राकृतसाक्षेपसम्बोधने। [3]वचनीयं परिवादम्। अत्रोपमानस्य चन्द्रस्योपमेयता। एतावतैव चन्द्रस्य तिरस्कारः, विशेषतस्तु कल्प्यमानाऽप्युपमाऽनिष्पन्नैव इत्यतोऽपि तिरस्कारः। क्वचित्तु निष्पन्नैव सा तिरस्कारहेतुरितीमं विषयविभागमाह—अत्रेति।[3]* (B)वचनीयपदव्यङ्ग्यया उपमित्यनिष्पत्त्या मुखेनोपमीयमानस्य चन्द्रस्य तिरस्कार इत्यर्थः। चन्द्रोपमेयकत्वमपि त्वन्मुखस्य वचनीयं कलङ्क इत्युक्तत्वात् उपमित्यनिष्पत्तिः। क्वचित्तूपमितिर्निष्पद्यते तयैव तिरस्कार इत्याह—क्वचिन्निष्पन्नैवेति।

गर्वमिति। हे कुवलयदललोचने, असंवाह्यं संवोढुमयोग्यमिमं गर्वं कथं वहसि। यत ईदृशानि दिशि दिशि सरःसु नीलनलिनानि सन्ति। अत्र इदं लोचनयुगलमिव दृश्यन्ते यानि तानीदृशानीत्यर्थः। नयनयुगलमुपमेयं तदुपमानानां

---

(A) अयीति संस्कृतं मुद्रितपुस्तकेषु।

(B) वचनीयपदव्यङ्ग्ययेति। उपमित्यनिष्पत्त्येत्यस्य विशेषणम्, तिरस्कारे हेतुः; तस्य वचनीयव्यङ्ग्यता चेत्थम्—जनेन चन्द्रस्तव मुखेनोपमीयते, वयन्तु न तत्र श्रद्दधीमहीति वक्तुराशयः, स एवोपमित्यनिष्पत्तिः; सा च वक्तुस्तन्मुखस्य चन्द्रोपमेयकत्वेऽश्रद्धा, मुखतोऽनुक्ताऽपि वचनीयपदेन व्यज्यते। उपमित्यनिष्पत्तेस्तिरस्कारहेतुता च व्यङ्ग्यया वक्तुस्तन्मुखचन्द्रोपमानत्वेऽश्रद्धयैवेति ज्ञेयम्। प्रदीपकाराणामपि 'अत्र मुखोपमानस्य शशिनः स्वल्पगुणत्वादुपमित्यनिष्पत्ति'र्वअणिज्ज'मिति पदेन द्योत्यते, सैव तिरस्कारहेतु'रिति लेखेनात्रैव स्वरसोऽवगम्यते। मुद्रितपुस्तकेषु तु 'वचनीयपदाभिव्यङ्ग्यस्तिरस्कार' इति पाठ उपलभ्यते। तत्र च नायिकायास्तिरस्कारवाचकेन वचनीयपदेन शशिनस्तिरस्कारो व्यज्यत इत्यर्थः। सर्वत्रोपमानत्वेन

---

1. '-व्यङ्ग्यस्तिरस्कार' इति मुद्रितपुस्तकपाठः। 2. '-त्तु निष्प-' इति पाठः क्वचित्। 3. 'अत्र मुखेनेति कल्पितोपमानभावेनेति बोध्यम्। चन्द्रस्तत्रोपमानमपि कल्पितोपमेयभावः। उपमेयता च कल्प्यमानाऽपि क्वचिन्न निष्पद्यते क्वचित्तु निष्पद्यते इतीमं प्रभेदमप्याह—अत्रेति' इति ग-पुस्तकपाठः।

इहोपमेयीकरणमेवोत्पलानामनादरः। (A)अनयैव रीत्या यदसामान्यगुणयोगात् नोपमानभावमपि अनुभूतपूर्वि, तस्य तत्कल्पनायामपि भवति प्रतीपमिति प्रत्येतव्यम्। यथा—

अहमेव गुरुः सुदारुणाना-
मिति हालाहल तात मास्म दृप्यः।
ननु सन्ति भवादृशानि भूयो
भुवनेऽस्मिन् वचनानि दुर्जनानाम्॥ ५५०॥

अत्र हालाहलस्योपमानत्वमसम्भाव्यमेवोपनिबद्धम्।

---

नीलनलिनानां कल्प्यमाना उपमेयता वचनीयादिपदाभावान्निष्पन्नैव, किन्तु तेषामुपमेयत्वकल्पनेन तिरस्कार इत्याह—इहेति।

न केवलमुपमानस्योपमेयताकल्पनमेव तिरस्कारहेतुरपि तूपमानस्याप्युपमानताकल्पनायामपि यत्र तिरस्कारः प्रतीयते अनया रीत्या तत्राप्ययमलङ्कार इत्याह—अनयेति। [1]तथा च 'तस्योपमेयता कल्प्ये'त्युपलक्षणम्, उपमानस्य तिरस्कारमात्रेऽयमलङ्कार इत्यर्थः। यदसामान्येति। असामान्यस्यासाधारणस्य गुणस्य योगाद्य उपमानभावस्तं यन्न सहत इत्यर्थः। तदसहनञ्चाधिक्षेपवशादिति बोध्यम्। 'तस्य तत्कल्पनायाम्' उपमानताकल्पनायाम्'*।

अहमेवेति। हे हालाहल, हे तात, अहमेव सुदारुणानां गुरुः प्रधानमिति दृप्यो मा स्म एतादृशदर्पं मा कुर्वित्यर्थः। कथमित्यत्राऽऽह—नन्विति। ननु भोः, अस्मिन् भुवने दुर्जनानां वचनानि भवादृशानि भूयो बहुलं यथा स्यात्तथा सन्तीत्यर्थः। क्रियाविशेषणमपि भूयस्त्वं क्रियाद्वारा वचनेष्वेवान्वेति। अत्र भवदिव दृश्यन्ते यानीत्यर्थेन सम्बोध्यमानं हालाहलमुपमानम्, तस्य चाधिकदारुणत्वरूपोऽसामान्यगुणस्तद्योगादुप-

---

प्रसिद्धस्य चन्द्रस्य नायिकामुखोपमेयभावस्तावद् दुःसहः, स च चन्द्रस्य तथात्वेऽप्यतुष्यतो वक्तुर्नायिकानिन्दार्थं प्रयुक्तेन वचनीयपदेनानिष्पन्नरूपः सुतरामेव दोषाकरं दुःखाकरोतीति भावः।

(A) अनयैवेति, प्रक्रान्तयोपमानतिरस्काररूपयेत्यर्थः। 'उक्त्वा चात्यन्तमुत्कर्षमत्युत्कृष्टस्य वस्तुनः। कल्पितेऽप्युपमानत्वे प्रतीपं केचिदूचिरे॥' इति विश्वनाथः।

---

1. 'असामान्यस्योपमेयापेक्षया विलक्षणस्य गुणस्य योगादुपमानत्वं मुखोपमानचन्द्रादौ दृष्टम्, तद्यस्य नानुभूतपूर्वमितर्थस्तद् यस्येत्यध्याहाराद् बोध्यः, यस्योपमानस्य उपमेयापेक्षया विलक्षणो गुणो नानुभूतपूर्व इति पर्यवसितोऽर्थः' इति ग-पुस्तकपाठः।

(२०२) प्रस्तुतस्य यदन्येन गुणसाम्यविवक्षया।
ऐकात्म्यं बध्यते योगात् तत् सामान्यमिति स्मृतम् ॥१३४

अताद्दशमपि ताद्दशतया विवक्षितुं यद् अप्रस्तुतार्थेन संपृक्तमपरित्यक्तनिजगुणमेव तदेकात्मतया निबध्यते, तत् समानगुणनिबन्धनात् सामान्यम्। उदाहरणम्—

मलयजरसविलिप्ततनवो नवहारलताविभूषिताः।
सिततरदन्तपत्रकृतवक्त्ररुचो रुचिरामलांशुकाः॥
शशभृति विततधाम्नि धवलयति धरामविभाव्यतां गता।
प्रियवसतिं प्रयान्ति सुखमेव निरस्तभियोऽभिसारिकाः॥५५१॥

अत्र प्रस्तुततदन्ययोरन्यूनानतिरिक्ततया निबद्धं धवलत्वमेकात्मताहेतुः, अत एव पृथग्भावेन न तयोरुपलक्षणम्। यथा वा—

---

मानत्वमनुभूतपूर्वमपि दारुणत्वांशे दर्पनिषेधादननुभूतपूर्वमेव विवक्षितम्। उपमानस्य तस्य ताद्दशमुपमानत्वं कल्प्यमानमपि दर्पनिषेधात्तिरस्कारनिबन्धनमेव।

सामान्यनामकमलङ्कारमाह—**प्रस्तुतस्येति**। अन्येन अप्रकृतेन पदार्थेन सह योगात् प्रस्तुतस्य पदार्थस्य तदैकात्म्यं तदेकात्मता बध्यते ज्ञाप्यत इत्यर्थः। तथात्वनिबन्धे हेतुमाह—**गुणसाम्येति**। एकात्मताबन्धश्च भेदेनानुपलभ्यमानतया पर्यवसित एव बोध्यः। योगं विनैकात्मताबन्धो रूपकेऽप्यस्ति तद्वारणाय—**योगादिति**, संयोगादित्यर्थः। वक्ष्यमाणे तद्गुणालङ्कारेऽपि योगादेकात्मताज्ञापनमस्ति किन्तु तत्र निजगुणत्यागः, तद्वारणाय पूरयित्वा व्याचष्टे—**अपरित्यक्तनिजगुणमेवेति**।

**मलयजेति**। विततधाम्नि शशभृति धरां धवलयति सति मलयजेत्यादिबहुविशेषणवशाद् अविभाव्यताम् अपरिचेयतां गता अभिसारिका निरस्तपरपरिचेयत्वभियः सत्यः सुखमेव प्रियवसतिं प्रयान्तीत्यन्वयः। दन्तपत्रं हस्तिदन्तकृतकर्णभूषाविशेषः। **अत्रेति**। प्रस्तुता अभिसारिकास्तदन्यश्चन्द्ररश्मिः, 'एकात्मताहेतुः' एकात्मताज्ञापकः, न तु रूपकवच्छाब्दी एकात्मतेत्यवधेयम्। (A)न चैवमेतावतैव रूपक॰

---

(A) नचैवमिति। उद्द्योतकृतस्त्वनयैव दिशा रूपकेऽतिप्रसक्तिमवारयन्, तथा च 'उपमेये उपमानतादात्म्यस्य शब्दादप्रतीते रूपकाभावा'दिति। भ्रान्तिमता चासङ्कीकुर्वते—

वेत्रत्वचा तुल्यरुचां वधूनां कर्णाग्रतो गण्डतलागतानि।
भृङ्गाः सहेलं यदि नापतिष्यन् कोऽवेदयिष्यन्नवचम्पकानि ॥५५२॥

अत्र निमित्तान्तरजनिताऽपि नानात्वप्रतीतिः प्रथमप्रतिपन्नमभेदं न व्युदसितुमुत्सहते प्रतीतत्वात्तस्य, प्रतीतेश्च बाधायोगात्।

(२०३) (A)विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिः।
एकात्मा युगपद्वृत्तिरेकस्यानेकगोचरा ॥ १३५ ॥

---

वारणसम्भवे योगादिति व्यर्थमिति वाच्यम्, लक्षणे (B)शाब्दत्वाशाब्दत्वाप्रवेशात्।

पश्चाद् भिन्नात्मताबोधसम्भवेऽपि प्राथमिकैकात्मताबोधादप्ययमलङ्कार इति वक्तुं पुनरप्युदाहरति—**यथा वा वेत्रत्वचे**ति। वेत्रविशेषः प्राच्यदेशे गौरत्वक्, तत्तुल्यरुचां गौराङ्गीणां वधूनां कर्णाग्रतो गण्डतलमागतानि नव-चम्पकानि तदा को गण्डतलभिन्नतया अवेदयिष्यत् पर्यचेष्यत्, सहेलं सलीलं यदि तत्र भृङ्गा नापतिष्यन्। **अत्रे**ति। निमित्तान्तरं भृङ्गपातः। 'व्युदसितुम्' अप्रतीतीकर्त्तुम्। **बाधायोगा**दिति, अप्रतीतीकरणायोगादित्यर्थः। (C)[1]पुनःप्रतीत्यजननरूपो बाधस्त्वस्त्येव[I]*।

त्रिविधं विशेषालङ्कारमाह—**विना प्रसिद्ध**मिति। तत्र 'प्रसिद्धे'त्यादिना

---

'तत्र स्मर्यमाणस्याऽऽरोपोऽत्रानुभूयमानस्येति विशेषादि'त्यनेन। अतिशयोक्तिं व्यवच्छिन्दन्ति—'उपमानतावच्छेदकरूपेणाप्रतीयमानत्वान्नातिशयोक्ति'रित्यनेन।

(A) विना प्रसिद्धमिति। एवमाधारान्तरगतत्वेनाऽऽधेयवर्णनेऽप्ययम्; यथा—'गतेऽपि सूर्ये दीपस्थास्तमश्छिन्दन्ति तत्कराः' इतीत्युद्द्योतकाराः।

एकात्मेति वृत्तिरित्यस्य विशेषणम्। अत्रोक्तं प्रदीपकृद्भिः—''एकात्मेत्येकेन स्वभावेनेत्यर्थः। एतच्च विशेषणम् 'एकस्त्रिधा वससि' इत्यादियथासंख्यव्यावर्त्तनाय [ तत्र हि राजरूपवस्तुनोऽनेकत्र वृत्तिस्तापादिपोषकतारूपानेकस्वभावेनेत्यतो भेदः, अत्र यथासंख्यव्यावर्त्तनायेत्यस्य यथासंख्योदाहरणे एतस्यातिप्रसक्तिवारणायेत्यर्थः। एतदुदाहरणे तु यथासंख्यस्य प्राप्तिरेव नास्तीति ध्येयम्। अत एव 'एकस्त्रिधा वससि इत्यादी'त्युक्तम्। ] युगपदिति पर्यायनिवारणाय'' इति।

(B) शाब्दत्वेत्यादि। अत एव प्रदीपकृताऽपि—'बध्यत इत्यस्य प्रत्यायनमात्रमर्थो न तु शाब्दं प्रतिपादनम्, उदाहरणे 'अविभाव्यतां गताः' इत्यादौ ऐकात्म्यस्याशाब्दत्वा'दित्युक्तम्।

(C) पुनरित्यादि। एतच्च 'प्रतीतेश्च बाधायोगा'दिति वृत्तिग्रन्थस्य अप्रतीतीकरणायोगा-

---

I. 'विषयबाधरूपो नाशरूपश्च बाधस्त्वस्त्येवेति बोध्यम्' इति ग-पुस्तकपाठः।

अन्यत् प्रकुर्वतः कार्यमशक्यस्यान्यवस्तुनः ।
तथैव(A) करणं चेति विशेषस्त्रिविधः स्मृतः ॥ १३६ ॥

प्रसिद्धाधारपरिहारेण यद् आधेयस्य विशिष्टा स्थितिरभिधीयते स प्रथमो विशेषः । उदाहरणम्—

दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः कथमिह कवयो न ते वन्द्याः ॥५५३॥

एकमपि वस्तु यद् एकेनैव स्वभावेन युगपदनेकत्र वर्तते स द्वितीयः । उदाहरणम्—

सा वसइ तुज्झ हिअए सा च्चिअ अच्छीसु साअ वअणेसु ।
अह्मारिसाण सुन्दर ओआसो कत्थ पावाणम् ॥५५४॥

---

प्रथमं विशेषं व्याख्यायोदाहरति—दिवमपीति । दिवमुपयातानामपि येषां कवीनामनल्पगुणगणा गिरो जगन्ति रमयन्ति, ते कवयः कथमिव न वन्द्या इत्यन्वयः । अत्र (B)निर्मातृत्वेन प्रसिद्धाधारान् कवीन् विनाऽपि काव्यरूपाणां गिरां स्थितिः ।

एकात्मेत्यादिद्वितीयं विशेषं 'मेकमपी'त्यादिना व्याख्यायोदाहरति—सा वसइ इति—

सा वसति तव हृदये सा चैवाक्षिषु सा च वचनेषु ।
अस्मादृशीनां सुन्दर अवकाशः कुत्र पापानाम् ॥ इति संस्कृतम् ।

---

दित्यर्थकरणे साधकम् । तथा चाग्रे भृङ्गपातेन भेदप्रतीतेः पुनरैकात्म्यप्रतीत्यभावरूपबाधसत्त्वेऽपि अप्रतीतीकरणरूपस्य बाधस्याशक्यसम्भावनत्वादित्यर्थः ।

(A) 'अत्र तथैवेति तेनैव प्रकारेणेत्यर्थः । एतच्च—'धुनोति चासिं तनुते च कीर्त्तिम्' इत्यादि समुच्चयव्यावर्त्तनाय' [ तत्र हि असेः कम्पनं कीर्त्तेस्तननमिति प्रकारभेद इत्यर्थः ]। इति प्रदीपः । अत्रापि—'इत्यादिसमुच्चयव्यावर्त्तनाये'त्यस्य इत्यादिसमुच्चयोदाहरणे एतदलङ्कारप्रसक्तिव्यावर्त्तनायेत्यर्थः । एतदुदाहरणे 'स्फुरदद्भुतरूपम्' इत्यत्र तु समुच्चयस्याऽऽशङ्कैव नास्ति । परं तत्र स्थितमपि यथासंख्यं तदंशे तात्पर्याभावात्, 'त्वत्सृष्टौ प्रयस्यता प्रजापतिना प्रयत्नान्तरं विनैव मनोभूादित्रयं सृष्टमि'त्यर्थस्य विवक्षणाच्चायमेवालङ्कारो न तु यथासंख्यमिति ज्ञेयम् ।

(B) निर्मातृत्वेनेति । न तु वस्तुतः, वस्तुत आकाशस्यैव गिरामाधारत्वेन प्रसिद्धिः । अत एवोक्तं प्रदीपकृद्भिः—'तत्र प्रसिद्धमित्यनेनेदमुक्तं यदत्र वास्तवमाधारत्वं न विवक्षितं किन्तु कविप्रसिद्धिमात्रसिद्धमिति । अत एव तथैवोदाहरणम्' इति ।

(A)यदपि किंचिद्रभसेन आरभमाणस्तेनैव यत्नेनाशक्यमपि कार्यान्तरमारभते, सोऽपरो विशेषः। उदाहरणम्—

स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजताऽनवद्यविद्यम्।
विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च ॥५५५॥

यथा वा—

गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ।
करुणाविमुखेन मृत्युना हरता त्वां बत किं न मे हृतम् ॥५५६॥

---

अस्मादृशीनां पापानामित्यन्वयः। अत्रैकेन नायकभाव्यमानत्वेन स्वभावेन हृदयाद्यनेकत्रोपनायिकायाः स्थितिः। (B)युगपत्तया च पर्यायालङ्कारतो भेदः।

'अन्यत् प्रकुर्वतः' इत्यादिकं तृतीयं विशेषं 'यदपि चे'त्यादिना व्याख्यायोदाहरति—स्फुरदिति। स्फुरदित्यादिविशेषणविशिष्टं त्वां सृजता विधिना सत्यं मनोभ्वादित्रयं ससृजे, इति समुदयवाक्यार्थः। (C)अत्र स्फुरदद्भुतरूपं त्वां सृजता नवो मनोभूः ससृजे, त्वमेव नवा मनोभूरित्यर्थः। एवमुद्गतः प्रतापज्वलनो यस्य तादृशं त्वां सृजता नवः सविता भुवि सत्यं ससृजे, त्वमेव नवः सवितेत्यर्थः। सर्वत्रैव नव इति सम्बन्धः। तथा अनवद्यविद्यं त्वां सृजता नवो बृहस्पतिः ससृजे, त्वमेव नवो बृहस्पतिरित्यर्थः।

(D)एवमेकोत्पादनादन्योत्पादनमुदाहृत्य एकहरणादन्यहरणमप्युदाहरति—यथा वा गृहिणीति। इन्दुमत्यां मृतायाम् अजस्यायं विलापः। त्वां हरता करुणाविमुखेन मृत्युना मम किं न हृतं तद् वद। गृहिण्यादिकं सर्वमेव हृतमित्याह—गृहिणीति। गृहिणी हृतेत्यादि सर्वत्रान्वयः। त्वमेव गृहिण्यादि सर्वम् इत्यर्थः। मिथो रहसि सखी समीहितकारित्वात्। ललितकलाविधिः कामकेलिः।

---

(A) यदपीत्यादि। रभसेन वेगादसमीक्ष्यकारितया, एकेनैव प्रयत्नेन कार्यद्वयं करिष्यामीति समीक्ष्यकरणे तु प्रकृतविषयोचितवैचित्र्यविरहान्नायमलङ्कार इति भावः।

(B) युगपत्तयेति। 'एकमनेकस्मिन्' इति प्रथमपर्याये क्रमेणेत्युक्तत्वादिति भावः।

(C) अत्रेति। एतच्चार्थप्रदर्शनमात्रम्, न तु वस्तुतः प्रतिविशेषणविशिष्टसृष्टौ प्रयत्नभेदः, एकप्रयत्नेनान्यनिर्वाहस्थल एवास्यालङ्कारस्य प्रवृत्तेः। विशेषणभेदाद् विशेष्यभेद इत्यभ्युपगमे तु न दोषः।

(D) एवमिति। प्रदीपकृता तु अन्यकरणस्य शाब्दत्वव्यङ्ग्यत्वभेदादुदाहरणद्वयमित्यभि-

सर्वत्र चैवंविधविषयेऽतिशयोक्तिरेव प्राणत्वेनावतिष्ठते, तां विना प्रायेणालङ्कारत्वायोगात्। अत एवोक्तम्—

सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना॥ इति।

(२०४) (A)समुत्सृज्य गुणं योगादत्युज्ज्वलगुणस्य यत्।
वस्तु तद्गुणतामेति भण्यते स तु तद्गुणः॥ १३७॥

---

ननु पूर्वापरश्लोकयोर्वस्तुतो मनोभ्वादिसृजन-सचिवादिहरणाभावाद् बाधेनाबोधकमिदं वाक्यद्वयमित्यत आह—सर्वत्र चैवमिति। 'अतिशयोक्तिः' (B)आहार्यारोपोक्तिः। 'प्राणत्वेन' शोभकत्वेन। नहीन्दुमतीमरणदिने वस्तुतः सचिवादिमरणे ईदृग्युक्तिः शोभते। प्रायेणेत्यस्य व्यावृत्तिः स्वभावोक्त्यलङ्कारे। सैषेति। 'वक्रा' आहार्या; 'विभाव्यते' शोभारूपेण विशेषेण भाव्यते ज्ञायते(C)।

तद्गुणालङ्कारमाह—समुत्सृज्येति।

'राजेन्दुरप्येष सपत्नतापी सूर्यः प्रतापी सुहृदामनुष्णः'

इति रूपकसङ्कीर्णविरोधालङ्कारेऽतिव्याप्तिवारणाय योगादित्युक्तम्, सम्पर्कादित्यर्थः।

---

प्रेयते। तथा च 'स्फुरदद्भुतरूपमि'त्याद्युदाहृत्योक्तम्—'अत्रान्यस्य करणं शाब्दम्' इति। गृहिणीत्यादेरुत्थितिबीजमुक्तम्—'क्वचित्तु व्यङ्ग्यं यथे'ति।

(A) यद्यपि 'स्वमुत्सृज्ये'ति ज्यायान् पाठो मुद्रितपुस्तकेषु, तथाऽपि टीकानुरोधात् 'समुत्सृज्ये'ति पाठो मूले गृहीतः। अस्य मीलितात् सामान्याद् भ्रान्तिमतश्च विविक्तविषयतामाहुरुद्द्योतकाराः—मीलिते धर्मिण एवाग्रहः, सामान्येऽपरित्यक्तगुणस्यैवापृथक् प्रतिभासः, इह तु गुणमात्रस्यैवाभिभवो धर्मिणः पृथग् भासश्चेति भेद इत्यर्थः। भ्रान्तिमति स्मर्यमाणस्याऽऽरोपोऽत्र गृह्यमाणस्येति भेदः; भ्रान्तेर्निबद्धत्वाभावाच्चेति। वस्तुतो मीलितादस्य भेदस्तु—'मीलिते स्वजातीयोत्कृष्टगुणेनापकृष्टगुणतिरोधानम्, अत्र तु विजातीयोत्कृष्टगुणेनापकृष्टगुणतिरोधानम्' इति साहित्यदर्पणविवृतौ रामचरणतर्कवागीशदिशैव कर्त्तुं सुकर इति मन्यामहे।

(B) आहार्यारोपोक्तिरिति। अत्र 'अतिशयोक्तिमालम्ब्ये'ति प्रदीपांशं व्याचिख्यासुनोक्तम् उद्द्योतकृता—'अतिशयोक्तिमिति अतिशयेनोक्तिमित्यर्थः। आधुनिकोक्तेरपि कम्बुक्तित्वोपचारेण हृदयादौ भावनादेव सत्त्वोपचारेण, राज्ञस्तद्रूप्येण मनोभूत्वाद्युपचारेण च तथोक्तिरिति भावः। न त्वतिशयोक्त्यलङ्कारोऽत्र विवक्षितः, तस्यात्रासम्भवादिति।

(C) 'विशेषस्त्रिविधः स्मृतः' इत्यत्र त्रिविधत्वस्योपलक्षणत्वादन्यत्रापि विशेषत्वमति-

वस्तु तिरस्कृतनिजरूपं केनापि समीपगतेन प्रगुणया स्वगुण-सम्पदोपरक्तं तत्प्रतिभासमेव यत् समासादयति स तद्गुणः, तस्या-प्रकृतस्य गुणोऽत्रास्तीति। उदाहरणम्—

विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या।
रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः॥ ५५७॥

अत्र रवितुरगापेक्षया गरुडाग्रजस्य, तदपेक्षया च हरिन्मणीनां प्रगुणवर्णता।

(२०५) तद्रूपाननुहारश्चेदस्य तत् स्यादतद्गुणः।

यदि तु तदीयं वर्णं सम्भवन्त्यामपि योग्यतायामिदं न्यूनगुणं न गृह्णीयात्तदा भवेदतद्गुणो नाम। उदाहरणम्—

धवलोसि जइ वि सुन्दर तह वि तुए मज्झ रञ्जिअं हिअअम्।
राअभरिए वि हिअए सुहअ णिहित्तो ण रत्तोसि॥ ५५८॥

---

तत्र तु राजेन्द्राद्योर्न योगः, किन्तु स्वीयशीतत्वादित्यागेन परकीयसपत्नतापित्वादिमात्र-ग्रहणम्। तद्गुणताम् उज्ज्वलगुणीयगुणवत्ताम्। **वस्तु तिरस्कृते**ति। वस्तुतः समुत्सृजनाभावात्तिरस्कार एव समुत्सृजनमिति भावः।

**विभिन्ने**ति। यत्र गिरौ सूर्यस्य रथ्या अश्वा अर्थाद् हरिद्वर्णा अपि गरुडाग्रजेन विभिन्नवर्णा अरुणीकृताः वंशकरीरनीलैः वंशाङ्कुरैरिव नीलैः रत्नैः पुनः स्वां रत्नीयाम् अर्थान्नीलां रुचमानिन्यिरे इत्यन्वयः। अत्र 'तद्गुणद्वयं ग्राहयति—**अत्रे**ति।

अतद्गुणालङ्कारमाह—**तद्रूपे**ति। परगुणाननुहारः परस्य स्वतः सिद्ध एवेति न तत्र वैचित्र्यम्, अतो वैचित्र्यार्थमाह—**सम्भवन्त्यामपी**ति। **योग्यताया**मिति, अनुहरणयोग्यतायामित्यर्थः। इदं न्यूनगुणं वस्तु कर्तृ उत्तमं गुणं न गृह्णीयादित्यन्वयः। **धवलोसी**ति—

धवलोऽसि यद्यपि सुन्दर तथाऽपि त्वया मम रञ्जितं हृदयम्।
रागभृतेऽपि हृदये सुभग निहितो न रक्तोऽसि॥ इति संस्कृतम्।

---

दिशन्त्युद्द्योतकाराः—'एवं किञ्चित् सौकर्यं दृष्ट्वा दोषस्य गुणत्वकल्पनं गुणस्य वा दोषत्व-कल्पनमपि सः (विशेषः)। यथा—नैर्गुण्यमेव साधीयो धिगस्तु गुणगौरवम्। शाखिनोऽन्ये विराजन्ते खण्ड्यन्ते चन्दनद्रुमाः॥ [इत्यत्र]' इति।

---

1. 'तद्गुणं' इति ग-पुस्तकपाठः।

अत्रातिरक्तेनापि मनसा संयुक्तो न रक्ततामुपगत इत्यतद्गुणः। किं च तदिति अप्रकृतम् अस्येति च प्रकृतमत्र निर्दिश्यते। तेन यद् अप्रकृतस्य रूपं प्रकृतेन कुतोऽपि निमित्तान्नानुविधीयते, सोऽतद्गुण इत्यपि प्रतिपत्तव्यम्। यथा—

गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः।
राजहंस तव सैव शुभ्रता चीयते न च न चापचीयते ॥५८९॥

---

अत्र श्लेषवशादनुरागरक्तिम्नोरेकत्वाध्यासादतद्गुणं ग्राहयति—अत्रेति। आहार्य एवात्र तद्गुणग्रहणयोग्यताग्रहो बोध्यते। पूर्वार्द्धे धवलेन रञ्जनं विरोधालङ्कारः। इत्थं (A)प्राकरणिकेनैव नायकेन प्राकरणिकस्य स्वहृदयस्य गुणाग्रहणमुक्तम्।

क्वचित्तु प्रकृतेनाप्रकृतगुणाग्रहणेऽपि अयमलङ्कार इत्यतः प्रकृताप्रकृतोभयपरमेव तद्रूपेत्यत्र तत्पदमित्याह—किञ्च तदितीति। अप्रकृतमिति अप्रकृतमपीत्यर्थः। (B)अस्येति तु प्रकृतपरमेवेत्याह—अस्येति चेति।

गाङ्गमिति। गाङ्गमम्बु सितं यामुनमम्बु च कज्जलाभमित्यन्वयः। अत्र प्रतिपाद्यो राजहंस एव प्रकृतः, यामुनमम्बु चाप्रकृतम्, तद्गुणस्य राजहंसेनाग्रहणम्। (C)यद्यपि स्वसंसर्गिजनगुणाग्राही जन एवात्र प्रकृतो न राजहंसः, 'येनास्यभ्युदितेन

---

(A) प्राकरणिकेनेति। प्रदीपकारास्तु—'तत्र प्रकृतं हृदयम्, संबोध्य[नायक]स्त्वप्रकृतः; स्वहृदयवृत्तान्तनिवेदनस्यैव विवक्षितत्वादि'त्याहुः। एवञ्च तैः—'गाङ्गमम्बु सितमम्बु यामुनम्' इत्याद्युदाहरणोपोद्घाते—'किं चात्र सूत्रे तत्पदेन प्रकृतमिवाप्रकृतमप्युच्यते। तथा अस्येत्यनेनाप्रकृतमिव प्रकृतमुपस्थाप्यते, सामान्यमुखप्रवृत्तत्वात्। तथा चाप्रस्तुतेन प्रस्तुतरूपाननुहरणवत् प्रस्तुतेनाप्रस्तुतरूपाननुहरणरूपोऽन्यः प्रकार' इत्युक्तम्। महेश्वरस्तु एतद्विलक्षणमतमवलम्बमानो ज्ञायते, ज्ञास्यते चोपरिष्टात्—'किंचे'त्यादिद्वितीयोदाहरणोत्थापकप्रकाशव्याख्यायां 'क्वचित्त्वि'त्यादिग्रन्थेन।

(B) अस्येतीत्यादि। प्रकाशशैलीस्वरसात्तु अस्येति पदं पूर्वमप्रकृतपरतयैव व्याचिख्यासितमासीदिति प्रतीयते। टीकाकृत् पुनरन्यथैव व्याचष्टे। वस्तुतस्तु पूर्वोदाहरणे अप्रकृतेन नायकेन प्रकृतस्य हृदयस्य गुणाग्रहणमुक्तम्, तदुक्तं प्रदीपे 'तत्र प्रकृतं हृदयम्, संबोध्यमानस्त्वप्रकृतः, स्वहृदयवृत्तान्तनिवेदनस्यैव विवक्षितत्वात्' इति। अत्र च ततो वैपरीत्येन प्रकृतेनाप्रकृतस्य गुणाग्रहणं वक्तव्यमिति प्रकृतमित्यस्यापि प्रकृतमपीत्यर्थः करणीयः। केचित्तु तदिदं-पदाभ्यां पूर्वमुज्ज्वलगुणक-न्यूनगुणकत्वं विवक्षितमासीत् इह तु प्रकृताप्रकृतत्वमिति ततो भेद इत्याहुः।

(C) यद्यपीति। 'अत्रान्यापदेशपक्षे [राजहंसत्वेन सत्पुरुषादिवर्णनपक्षे] राजहंसस्य

(२०६) यद् यथा साधितं केनाप्यपरेण तदन्यथा ॥ १३८ ॥

तथैव यद् विधीयेत स व्याघात इति स्मृतः ।

येनोपायेन यद् एकेनोपकल्पितम्, तस्यान्येन जिगीषुतया तदुपायकमेव यदन्यथाकरणम्, स साधितवस्तुव्याहतिहेतुत्वाद् व्याघातः । उदाहरणम्—

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः [1]स्तुवे वामलोचनाः ॥ ५६० ॥

(२०७) [2]सैषा संसृष्टिरेतेषां(A) भेदेन यदिह स्थितिः ॥ १३९ ॥

एतेषां समनन्तरमेवोक्तस्वरूपाणां यथासम्भवमन्योन्यनिरपेक्षतया यदेकत्र शब्दभागे एव अर्थविषये एव उभयत्रापि वा अवस्थानम्, सा एकार्थसमवायस्वभावा संसृष्टिः। तत्र शब्दालङ्कारसंसृष्टिर्यथा—

---

चन्द्र गमित' इत्यादौ चन्द्र इव, तथाऽपि यामुनाम्बुराजहंसयोर्मध्ये यामुनाम्बूपेक्षया प्रतिपाद्यत्वेन राजहंसः प्रकृत इत्यवधेयम् ।

व्याघातालङ्कारमाह—यद् यथेति । येनोपायेन केनापि साधितम् अपरेण च तथैव तेनोपायेनैव तदन्यथा विधीयेतेत्यर्थः ।

दृशा दग्धमिति । हरस्य दृशेत्यर्थः । दृशैवेति कटाक्षरूपयेत्यर्थः । इत्थं क्रियया जयमुक्त्वा रूपेणापि जयमाह—विरूपाक्षस्येति । वामलोचना मनोज्ञनयनाः, एतावताऽपि जय इत्यर्थः । अत्र दृगुपायेन साधितस्य दाहस्य दृगुपायेनान्यथाकरणम् ।

(B)इत्थमलङ्कारान् प्रत्येकमुक्त्वा तेषां परस्परसंसर्गमाह—सैषेति । 'भेदेन' संशयास्पदत्वादित्रिरूपसङ्कररहित्येन एकत्र पद्ये स्थितिरित्यर्थः । भेदेनेत्यस्य विवरणम्—अन्योन्यनिरपेक्षतयेति । त्रिरूपसङ्कररहित्यमेवान्योन्यनिरपेक्षता । 'एकार्थसमवाय' एकपद्यस्थितिः ।

---

प्राकरणिकत्वं प्राकरणिकसत्पुरुषोपमानतयोपपादनीयम् । वाच्यमात्रविश्रान्तौ तु गङ्गायमुनयोरप्रकृतयोर्गुणस्य वर्ण्यतया प्रकृतेन राजहंसेनाग्रहाद् न काचिदनुपपत्तिरिति प्रदीपोद्द्योतयोः ।

(A) एतेषामिति बहुत्वमविवक्षितम्, तेन द्वयोरपि संग्रह इत्युद्द्योतकाराः ।

(B) इत्थमिति । अत्रोक्तं प्रदीपकृद्भिः—'अस्ति पुनः कश्चिद् विषयो यत्राङ्गदादिसंबद्ध-

---

1. 'स्तुमः' इति क्वचित् पाठः । 2. 'सेष्टे'ति प्रायिकः पाठः ।

वदनसौरभलोभपरिभ्रमद्भ्रमरसंभ्रमसंभृतशोभया ।
चलितया विदधे कलमेखलाकलकलोऽलकलोलदृशाऽन्यया ॥५६१॥

अर्थालङ्कारसंसृष्टिस्तु—

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥ ५६२ ॥

पूर्वत्र परस्परनिरपेक्षौ यमकानुप्रासौ संसृष्टिं प्रयोजयतः, उत्तरत्र तु तथाविधे उपमोत्प्रेक्षे । शब्दार्थालङ्कारयोस्तु संसृष्टिः—

---

**वदनसौरभेति** । '[1]पूर्ववर्णितनायिकातोऽन्यया नायिकया चलितया [2]कलो गभीरो मेखलाकलकलः अव्यक्तताद्दृशशब्दो विदधे'* । कीदृश्या ? वदनसौरभलोभेन परिभ्रमतो भ्रमरात् सम्भ्रमेण भयेन सम्भृता उत्पन्ना शोभा यस्यास्ताद्दृश्या । इदं चलनहेतुः, अत एवालकलोलदृशा अलकेऽपि भ्रमरबुद्ध्या तत्र दृग्लोलनम् । अत्र पादत्रयेऽनुप्रासश्चतुर्थपादे यमकमिति संसृष्टिः ।

**लिम्पतीति** । गाढतमोवर्णनमिदम् । श्लोकद्वयेऽलङ्कारद्वयसंसृष्टिं स्वतन्त्वेनक्त्वाद् (A)व्युत्क्रमेणाऽऽह—**पूर्वत्रेति** । 'तथाविधे' परस्परनिरपेक्षे । **उपमोत्प्रेक्षे इति** । परार्द्धे उपमा पूर्वार्द्धे तूत्प्रेक्षा ।

---

पद्मरागप्रमुखमणिमेलकवत् प्रोक्तानामलङ्काराणां संबलन एव चमत्कारः, तस्मात् सोऽप्यलङ्कारः । तत्र द्वयी गतिः, परस्परमनपेक्ष्य व्यवस्थितेस्तदभावाच्च । तत्र प्रथमा संसृष्टिरुच्यते, द्वितीया तु संकरः । स च त्रिधेति प्रकारचतुष्टयं लक्षयति—सेष्टे'ति । ननु संसृष्टिर्न पृथक्, यथा कामिनीशरीरे कुण्डल-हार-केयूर-कङ्कणादीनां खलेकपोतिकया शोभाजनने न विशेषार्थः, समुदायिभ्यः समुदायस्य भेदाभावात्, अन्यथा लोकेऽपि भेदापत्तिः ; तद्दृष्ट्यैव काव्ये गुणालङ्कारकल्पनादिति चेत्, न; तत्र स्वाश्रयभिन्नभिन्नाङ्गोत्कर्षाधानपूर्वकं शरीरेऽवयविन्यार्थः शोभातिशयः, इह त्वेकाङ्गोत्कर्षतया संसृष्टिरेव । यथा लिम्पतीत्यादावुत्प्रेक्षया तमसः प्रसृतत्वं प्रतिपाद्योपमयाऽतिगाढत्वोपपादनेन संसृष्टिव्यवहारात् । लोकेऽपि बहूनां कण्ठाभरणानामेकोत्कर्षकत्वं तत्र संसृष्टित्वस्यैवाङ्गीकारादि'त्युद्द्योतकारैः संसृष्टेरलङ्कारत्वमपोह्य व्यवस्थापितं दृश्यते ।

(A) व्युत्क्रमश्च श्लोकद्वये प्रत्येकमलङ्कारयोर्यथावस्थानमनिर्देशः । तथा चाऽऽद्ये पूर्वमनुप्रासस्ततो यमकमित्यनुप्रासयमके इत्येव निर्देश्यम्, एवमेवोत्तरत्र उत्प्रेक्षोपमे इति ।

---

1. 'नायिकान्तरक्रियावर्णनानन्तरं भ्रमरव्याकुलिताया अन्यस्या नायिकायाः क्रियावर्णनमिदम्' इत्यधिकं ख-पुस्तके । 2. 'कलमेखलाकलो विदधे । कलो गभीरः कलकलः कलकलशब्दः' इति ग-पुस्तकपाठः ।

सो णत्थि एत्थ गामे जो एअं महमहन्तलाअण्णम् ।
तरुणाण हिअअलूडिं परिसक्कन्तीं णिवारेइ ॥ ५६३ ॥

अत्रानुप्रासो रूपकं चान्योन्यानपेक्षे। संसर्गश्च तयोरेकत्र वाक्ये छन्दसि वा समवेतत्वात् ।

(२०८) अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु सङ्करः ।

एते एव यत्राऽऽत्मनि अनासादितस्वतन्त्रभावाः परस्परमनुग्राह्यानुग्राहकतां दधति, स एषां संकीर्यमाणस्वरूपत्वात् सङ्करः ।

---

सो णत्थीति—

स नास्त्यत्र ग्रामे य एनां (A)महमहायमानलावण्याम् ।
तरुणानां (B)हृदयलुण्टाकीं (C)परिष्वक्कन्तीं निवारयति ॥ इति संस्कृतम् ।

[1]यौवनमदगर्वितायाः कस्याश्चिद् रतिविमर्देन दर्पक्षयकारक[1]*मन्विष्यतः कस्यचिदुक्तिरियम् । महमहेति, उत्सवोत्सवायमानलावण्यामित्यर्थः । परिष्वक्कन्तीं दीप्यमानाम् । निवारयतीति यौवनगर्वादिति शेषः । अत्रेति । 'णत्थि एत्थे'ति 'महमहे'ति चानुप्रासः, 'लुण्टाकी'ति रूपकश्च । निरपेक्षत्वेऽपि संसृष्टिमुपपादयति—संसर्गश्चेति । नन्वेवं लिम्पतीत्यादौ वाक्यद्वयगतयोर्न संसृष्टिः स्यादित्यत आह—छन्दसि वेति । छन्दः पद्यम्, एकपद्ये इत्यर्थः । 'समवेतत्वं' सम्बन्धः ।

अलङ्कारयोरङ्गाङ्गिभावरूपं सङ्करमाह—अविश्रान्तीति । [2]विश्रान्तिः स्वातन्त्र्यम्,

---

(A) 'महमहल्लावण्यामि'त्युद्द्योतसम्मतः पाठः, नवनवीभवल्लावण्यामिति तत्सम्मतोऽर्थश्च ।

(B) 'हृदयलुण्ठाकीमि'ति पाठः प्राय उपलभ्यते । कातन्त्रगणदर्पणे 'लुण्ट स्तेये' इति टवर्गप्रथमवर्णवान् धातुश्चुरादौ पठ्यते । टीकाकारश्च लुण्टयति लुण्टाक इत्युदाजहार । अस्ति च भ्वादावपि तन्मते लुटिधातुः स्तेयार्थकः । टवर्गद्वितीयवान् लुण्ठधातुः स्तेये नोपलभ्यते । सिद्धान्तकौमुद्यान्तु 'रुटि लुटि स्तेये, रुठि लुठीत्येक' इति लिखितं दृश्यते । कातन्त्रीयषाकविधायकसूत्रे लुण्ट एव निर्दिष्टः । तथा च—'वृञ्-भिक्षि-लुण्टि-जल्पि-कुट्टां षाक' इति ।

(C) परिष्वक्कमाणामित्युचितः पाठः, ष्वक्कतेरात्मनेपदित्वात् । परिष्वक्कमाणां स्वानुरूपरमणाभावादितस्ततो गच्छन्तीमित्युद्द्योतः ।

---

1. 'प्रौढयौवनायाः कस्याश्चिदुपभोगेन दर्पनिवारक-' इति ख-पुस्तकपाठः । 2. 'आत्मन्यविश्रान्तिजुषामित्यन्वयः । अविश्रान्तिरस्वातन्त्र्यम्' इति ग-पुस्तकपाठः ।

उदाहरणम्—

(A)आत्ते सीमन्तरत्ने मरकतिनि हृते हेमताटङ्कपत्रे
लुप्तायां मेखलायां झटिति मणितुलाकोटियुग्मे गृहीते ।
शोणं बिम्बोष्ठकान्त्या त्वदरिमृगदृशामित्वरीणामरण्ये
राजन् गुञ्जाफलानां स्रज इति शबरा नैव हारं हरन्ति ॥५६४॥

अत्र (B)[1]तद्गुणस्तमपेक्ष्य[1]* भ्रान्तिमता प्रादुर्भूतं तदाश्रयेण च तद्गुणः सचेतसां प्रभूतचमत्कृतिनिमित्तमि[2]त्येतयोरङ्गाङ्गिभावः ।

---

आत्मनि तदभावजुषामस्वतन्त्राणामित्यर्थः । सङ्कर इत्यत्र (C)एक इति शेषः, सङ्करान्तरस्य वक्ष्यमाणत्वात् ।[2]*

**आत्ते** इति । हे राजन्, अरण्ये इत्वरीणामटन्तीनां त्वदरिमृगदृशां सीमन्तरत्नादौ आत्ते गृहीतेऽपि शबराः किराता हारं नैव हरन्तीत्यन्वयः । अहरणे हेतुमाह—गुञ्जेति । गुञ्जाफलसम्भ्रमे हेतुमाह—शोणमिति । मरकतिनि मरकतयुक्ते । पूर्वापरयोर्द्वयोरेवेदं विशेषणम् । ताटङ्कपत्रं कर्णभूषणविशेषः । मणितूलाकोटिर्मणियुक्तो नूपुरः । **अत्रेति** । [3]तद्गुणो[3]* हारेण बिम्बोष्ठशोणिम[4]ग्रहणम् । [5]**तमपेक्ष्येति**, स्वकारणत्वात्तदपेक्षा । 'भ्रान्तिमता' (D)गुञ्जाफलभ्रान्तिमता'* । **तदाश्रयेण चेति** । तादृशभ्रान्त्यजनने हारशोणत्वकथनस्य चमत्कारानर्हत्वादिति भावः । **एतयो-**

---

(A) आत्ते सीमन्तरत्न इति प्रथमं तत्र दृष्टिपातात् । मरकतिनीत्यनेन झटिति विवेचनम्, शुद्धहेम्नां देहकान्त्याऽभिभवसम्भवात । बिम्बोष्ठकान्त्येति मुखस्य नम्रत्वादित्युद्द्योते साभिप्रायपदव्याख्या । अत्र मूर्द्धः पादपर्यन्तवर्त्तिनामलङ्काराणां क्रमेण हरणं निबध्नातीति द्रष्टव्यम् ।

(B) तद्गुण इति । टीकानुरोधादयं पाठः कल्पितः । एतत्कल्पे तद्गुण इति पृथङ्निर्देशश्च तस्य प्राधान्यद्योतनार्थः । यद्यपि ख-पुस्तकपाठ'स्तद्गुणमपेक्ष्ये'ति यथाश्रुतपाठमेवानुसरति, तथाऽपि दोषान्तरदर्शनात् स पाठो न गृहीतः ।

(C) एक इति अङ्गाङ्गिभावरूप इत्यर्थः । सङ्करान्तरस्येति, सन्देहरूपस्य एकाश्रयानुप्रवेशरूपस्य चेति । तदनेन सङ्करस्य त्रैविध्यं दर्शितं भवति ।

(D) गुञ्जाफलभ्रान्तिमतेति । 'अधरसान्निध्यासादितारुण्यविशिष्टमुक्ताफलानां दर्शनेन गुञ्जास्मरणाद् भ्रान्तिर्भवतीति भावः' इत्युद्द्योते स्पष्टम् ।

---

1. 'तद्गुणमपेक्ष्य' इति प्रायिकः पाठः । 2. '-मित्यनयो'रिति मुद्रितपुस्तकपाठः । 3. 'तद्गुणमिति' ख-पाठः, 'तद्गुणेति' ग-पाठः । 4. '-ग्रहणरूपतद्गुणालङ्कारस्तज्ज्ञानाधीनत्वान्मुक्ताफलभ्रान्तिमदलङ्कारस्य तदपेक्षा । प्रादुर्भूतं जातम्' इति ख-पाठः । 5. 'तदपेक्ष्ये'ति क-पुस्तकपाठः ।

यथा वा—

जटाभाभिर्भाभिः करधृतकलङ्काक्षवलयो
वियोगिव्यापत्तेरिव कलितवैराग्यविशदः ।
परिप्रेङ्खत्तारापरिकरकपालाङ्किततले
शशी भस्मापाण्डुः पितृवन इव व्योम्नि चरति(A) ॥ ५६८ ॥

---

रङ्गाङ्गिभाव इति। तद्गुणस्य भ्रान्तिजनकत्वेन भ्रान्तिमदङ्गत्वम्, भ्रान्तिमतश्च तद्गुणचमत्कारित्वजनकतया तद्गुणाङ्गत्वमित्यर्थः।

इत्थमलङ्कारद्वयस्याङ्गाङ्गिभावमुक्त्वा बहलङ्काराणामपि तथात्वमुदाहरति—**यथा वा जटाभाभि**रिति। पितृवने श्मशान इव व्योम्नि शशी चरति। व्योम्नः श्मशानतुल्यत्वे हेतुमाह—परिप्रेङ्खदिति। परिप्रेङ्खन् चलन् यस्तारासमूहः स एव कपालानि भग्नभाण्डावयवास्तदङ्किततले। तलं स्वरूपम्, तदङ्कितस्वरूपे इत्यर्थः। अत्र श्मशानतुल्यव्योमचरत्वेन शशिनः श्मशानचारिकापालिकतुल्यत्वं व्यङ्ग्यम्, अतः कापालिकतुल्यानि विशेषणानि शशिन आह—जटाभाभिरिति, जटातुल्यदीप्तिभिः। भाभी रश्मिभिर्विशिष्ट इत्यर्थः। विशेषणतृतीया। कापालिकस्यापि जटाऽस्ति। करो रश्मिः करो हस्तः, तेन धृतः कलङ्क एवाक्षवलयं येन तादृशः। कापालिकस्यापि हस्तधृताक्षवलयत्वमस्ति। तथा कलितं प्राप्तं यद् वैराग्यम् उदयकालीनं रक्तिमशून्यत्वं तदेव वैराग्यं विषयविरक्तता तेन विशदः शुभ्र एव विशदो निष्पापः। विषयवैराग्यकलने हेतुमुत्प्रेक्षते—वियोगीति। व्यापत्तिर्व्यापादनं तस्मादिव, वियोगोद्दीपकत्वेन वियोगिव्यापादनात् तत्पापेनेव वैराग्यकलनमित्यर्थः। कापालिकस्यापि विषयवैराग्यकलनमस्ति। तथा भस्मनेवाऽऽपाण्डुः। कापालिकस्यापि भस्मनापाण्डुत्वमस्ति।

---

(A) जटाभाभिरिति। अत्रालङ्काराणां साङ्कर्यं ग्राहयति प्रदीपः—'अत्र जटाभाभिर्भाभिरिति पितृवन इव व्योम्नीति चोपमा। कलङ्काक्षवलयेति तारापरिकरकपालेति च रूपकम्। वियोगिव्यापत्तेरित्युत्प्रेक्षा। वैराग्यविशद इति श्लेषः। चत्वारोऽप्येते परस्परमङ्गाङ्गिभावेन प्रतीयन्ते। तत्रोत्प्रेक्षा श्लेषाङ्गम्, तद्वशादेव वैराग्यविशद इत्यत्र द्वितीयार्थानुसन्धानात्। श्लेषश्च रूपकोपमयोरङ्गम्, तद्वशादवगतनिर्वेदमहिम्नैव जटाया अक्षवलयधारणस्य च सङ्गतेः। तारापरिकरकपालेति रूपकं पितृवन इवेत्युपमाया अङ्गम्, तद्बीजं हि सादृश्यम्। न च श्मशाने व्योम्ना सह तत् साहजिकम्, किन्तु रूपितकपालाश्रयत्वेनैवेति। सर्वत्र चाङ्गानां चारुत्वार्थम् अङ्ग्यपेक्षा

उपमा रूपकम् उत्प्रेक्षा श्लेषश्चेति चत्वारोऽत्र पूर्ववत् अङ्गाङ्गितया प्रतीयन्ते। कलङ्क एवाक्षवलयमिति रूपकपरिग्रहे करधृतत्वमेव साधकप्रमाणतां प्रतिपद्यते। अस्य हि रूपकत्वे तिरोहितकलङ्क-

---

अत्रालङ्काराणां परस्पराङ्गाङ्गिभावं ग्राहयति—उपमेति। पितृवन इवेत्यत्र जटाभाभिरित्यत्र चोपमा। तथा च शशिनि व्यङ्ग्यकापालिकोपमानिष्पत्तिस्तया च तस्याश्चमत्कारित्वम्, कापालिकोपमाऽलाभे पितृवनाद्युपमाया वैचित्र्याभावात्। एवं 'करधृते'त्यत्र 'कलङ्काक्षे'त्यत्र 'तारापरिकरकपाले'त्यत्र च रूपकं तेन च व्यङ्ग्यकापालिकोपमाचमत्कारः, कापालिकोपयुक्तत्वात्तस्य। तथा करधृतेत्यत्र हस्तरूपणेनाक्षवलयरूपणस्य, तेन च कररूपणस्य चमत्कारः। तथा वियोगीत्यत्र भस्मापाण्डुरित्यत्र चोत्प्रेक्षा। 'करे'त्यत्र 'वैराग्ये'त्यत्र 'विशद' इत्यत्र च श्लेषस्तेन च रूपकोत्प्रेक्षयोर्निष्पत्तिस्ताभ्याञ्च तस्य चमत्कारित्वमित्यर्थः।

ननु कलङ्काक्षवलय इत्यत्र कलङ्कोऽक्षवलयमिवेत्युपमासमासस्यापि सम्भवात् सन्देहसङ्कर एव, कथमनुग्राह्यानुग्राहकभावसङ्कर इत्यत्रोपमां तत्र निरस्यति—कलङ्क एवाक्षेति। करधृतत्वस्य कथं रूपकसाधकतेत्यत्राऽऽह—अस्य हीति। रूपके हि रूप्यमाणमक्षवलयमेव विशेष्यतयाऽवगम्यमानं करधृतत्वविशेषणान्वयि भवति, कलङ्करूपता च कलङ्कस्य करधृतत्वविशेषणानन्वयितयाऽपलपितस्वरूपा भवतीत्यर्थः।

---

पूर्ववदूहनीया। सर्वेषां चैषां पार्यन्तिकचारुत्वहेतुरङ्गीभूता च समासोक्तिः, चन्द्रगतत्वेन महाव्रतिवृत्तान्तप्रतीतेः। सा च व्यक्तैवेति प्रकाशकृता नोक्तेत्यवधेयम्।

ननु कलङ्काक्षवलयेति कथमेकान्ततो रूपकमुच्यते, उपमाया अपि सम्भवेन सन्देहसङ्करौचित्यादिति चेत्, न; रूपकपरिग्रहे करधृतत्वमेव साधकं प्रमाणमतः सन्देहस्याभावात्। कथमस्य साधकत्वमिति चेत्, इत्थम्—करधृतत्वरूपविशेषणस्याक्षवलय एव सार्वत्रिकी प्रसिद्धिः, न तु कलङ्के। अतः प्राधान्येनाक्षवलयप्रतीतिरेवोद्देश्या, सा च रूपकपरिग्रहेणैव सम्भवति। तत्र तिरोहितकलङ्करूपमक्षवलयत्वमेव मुख्यतयाऽवगम्यते। नन्वेवमपि विशेषणमिदमसम्यगेव, चन्द्रपक्षे किरणेन कलङ्कधारणस्याभावात्, मूर्त्यैव तेन तद्धारणादिति चेत्, न; श्लेषच्छायया हि कलङ्कस्याप्रधानस्य करधारणमसदेव प्रत्यासन्नतयोपचर्य योज्यते। तथा सति उपमापरिग्रहे को दोष इति चेत्, कलङ्कोऽक्षवलयमिवेत्युपमायां कलङ्कस्य प्रधानत्वेन प्रतीतिः। न चास्य करधृतत्वं मुख्यतोऽस्तीति मुख्येऽप्युपचार एव शरणं स्यात्। मुख्यविषयोपचारापेक्षया चामुख्योपचार एव श्रेयान् इति रूपकमेवाऽऽश्रीयते' इति।

रूपम् अक्षवलयमेव मुख्यतयाऽवगम्यते, तस्यैव च करग्रहणयोग्यतायां सार्वत्रिकी प्रसिद्धिः। श्लेषच्छायया तु कलङ्कस्य करधारणम् असदेव प्रत्यासत्त्या उपचर्य योज्यते, शशाङ्केन केवलं कलङ्कस्य मूर्त्यैव उद्वहनात्। कलङ्कोऽक्षवलयमिवेति तु उपमायां कलङ्कस्योत्कटतया प्रतिपत्तिः। न चास्य करधृतत्वं तत्त्वतोऽस्तीति मुख्येऽप्युपचार एव शरणं स्यात्। (A)एवंरूपश्च संकरः शब्दालङ्कारयोपरि परिदृश्यते।

---

[1]मुख्यतयेति। धरणक्रियान्वयितया मुख्यत[1]*। ननूपमैवाऽऽस्ताम्, तथा च कलङ्क एव विशेष्यतया करधृतत्वान्वयी स्यादित्यत आह—तस्यैव चेति। कलङ्के करधरणस्य प्रसिद्ध्यभावादित्यर्थः। ननु रूपकपक्षेऽक्षवलयस्यैव करधृतत्वान्वयित्वेन कथं कलङ्केऽपि करधरणमनुभूयत इत्यत आह—श्लेषच्छायया त्विति। रूपकनिर्वाहकत्वेन करपदश्लेषस्य न श्लेषालङ्कारत्वम्, अत आह—श्लेषच्छायया त्विति। तथा कलङ्कस्य करधरणं हस्तधरणमसदेवासत्यमेव उपचर्य योज्यत इत्यर्थः। उपचारे हेतुमाह—प्रत्यासत्त्येति। हस्तवाचककरपदवाच्यरश्मिसामानाधिकरण्यमेव प्रत्यासत्तिः।

ननु रश्मिनैव ध्रियमाणस्य कलङ्कस्य कथं करधरणोपचारः, [2]साक्षादेव रश्मिरूपकरधरणात्[2]*, इत्यत आह—शशाङ्केनेति। 'मूर्त्या' मण्डलेन न तु रश्मिना। इत्थञ्च कलङ्कस्य हस्तेन धरणप्रतीतिरुपचारादेव, अक्षवलयस्य तु साक्षादित्यतोऽत्र रूपकमेवेति भावः। ननु करे रश्मौ हस्तरूपणमास्ताम्, किन्त्वक्षवलयतुल्यस्य कलङ्कस्योपमासमासे विशेष्यतया मुख्यस्य रश्मिनैव धरणान्वयादुपमैवाऽऽस्तामित्यत आह—कलङ्कोऽक्षेति। 'उत्कटतया' विशेष्यत्वेनातिरोहितकलङ्करूपतया करधृतत्वान्वयित्वेनेत्यर्थः। नन्वेवं मदुक्तस्यैवायमनुवादः कृत इत्युपमैवाऽऽस्तामित्यत आह—न चास्येति। यदि रश्मिनाऽपि धरणं तत्त्वतः स्यात्तदा उपचारमुपेक्ष्य उपमैव गृह्येत, तदेव तु नेत्यत उपमायामप्युपचारावश्यकत्वेऽक्षवलये साक्षादन्वयबोधकं रूपकमेव प्राहामित्यर्थः। मुख्येऽपीति, अत्र मुख-शब्दाद् भाव-यणा मुख्यत्वेऽपीत्यर्थः।

---

(A) एवं रूप इति, परस्परानुग्राह्यानुग्राहकरूप इत्यर्थः। एतन्मतममृष्यमाणाः प्रदीपकृतस्त्वाहुः—'शब्दालङ्कारयोरप्येष सङ्करो दृश्यते इति प्राञ्चः, उदाहरन्ति च राजतीति। तत्र यमकनिर्वाहप्रवृत्तस्य कवेरपृथक्प्रयत्ननिर्वृत्ततया अनुलोमविलोमस्योत्पत्तौ यमकापेक्षा। यमकस्य तु चारुतातिशये तदपेक्षेति तेषामाशयः। वस्तुतस्तु यमकनिर्वाह एव कविप्रवृत्तिरिति

---

1. 'मुख्यतया विशेष्यतया' इति ग-पुस्तकपाठः। 2. इदं क-ख-पुस्तकयोर्नास्ति।

यथा—

(A)राजति तटीयमभिहतदानवरासाऽतिपाति-साराव-नदा।
गजता च यूथमविरतदानवरा साऽतिपाति सारावनदा ॥८६६॥

अत्र यमकम् अनुलोमप्रतिलोमश्च चित्रभेदः पादद्वयगते परस्परापेक्षे।

(२०९) एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः ॥१४०॥

द्वयोर्बहूनां वा अलङ्काराणामेकत्र समावेशेऽपि विरोधान्न यत्र युगपदवस्थानम्, न चैकतरस्य परिग्रहे साधकं तदितरस्य वा परिहारे बाधकमस्ति येनैकतर एव परिगृह्येत, स निश्चयाभावरूपो द्वितीयः सङ्करः, समुच्चयेन संकरस्यैवाऽऽक्षेपात्। उदाहरणम्—

---

**राजति तटीति।** अत्र विशेषणमहिम्ना तटी नदस्यैव बोध्या। तथा च इयं नदतटी राजति। कीदृशी? अभिहतदानवरासा नाशितदानवक्रीडा, तन्नाशश्च परार्द्धस्वरसाद् गजयूथेनैव बोध्यः। तथा अतिपातिसारावनदा अतिवेगशील आरावसहितो नदो यस्यास्तादृशी, नदस्याऽऽरावसाहित्यं कल्लोलस्य जलपक्षिणश्च शब्दात्। तथा सा प्रसिद्धा गजता गजसमूहश्च यूथं स्वपालनीयगजयूथम् अतिपाति अतिशयं पालयति, यतः सारावनदा सारस्य प्रधानस्यावनस्य पालनस्य दात्री। गजसमूहस्य पालनीयोऽवान्तरस्वयूथो बोध्यः। एतावतैव च दानवक्रीडानाशने गजयूथस्य कर्त्तृत्वं लभ्यते। **अत्रेति।** दानवरासेत्याद्योर्द्वितीयचतुर्थचरणयोर्यमकम्, प्रतिलोमपाठरूपोऽनुलोमप्रतिलोमाख्यश्चित्रभेदश्च। अत्रैकवर्णान्यथात्व एव चित्रस्य यमकस्यापि भङ्ग इत्यनयोः परस्परसापेक्षत्वरूपोऽनुग्रहः।

अलङ्कारयोरेकतरानिश्चयरूपसन्देहसङ्करालङ्कारमाह—**एकस्येति।** न्यायः साधकप्रमाणम्, दोषो बाधकप्रमाणम्, अनिश्चयः संशयः। व्याचष्टे—**द्वयोरिति।** 'निश्चयाभावरूपः' सन्देहरूपः। ननु निश्चय एवास्तु तस्य सङ्कररूपत्वं कथं लभ्यते इत्यत्राऽऽह—

---

निश्चायकं नास्ति। अस्तु वा तथा, तथाऽपि यमकं न चित्रहेतुः, किन्तु तत्प्रयत्नः। तस्मादेकाश्रयानुप्रवेशेनैवायं सङ्करो न त्वनुग्राह्यानुग्राहकतयेत्येव युक्तम्' इति।

(A) राजतीति। इयं तटी स्थली राजतीत्यन्वयः। किम्भूता? अभिहतोऽभिघातं प्राप्तो दानवानां रासः सिंहनादो यस्यां सा। अतिपाती वेगवान् सारावः सशब्दो नदो यस्यां सा। एवं सा प्रसिद्धा गजता गजसमूहश्च यूथं कुलमतिशयेन पाति रक्षति। कीदृशी? अविरतेन दानेन मदजलेन वरा श्रेष्ठा। सारा स्थिरा। इत्युदाहरणचन्द्रिका।

जह गंभीरो जह रअणणिब्भरो जह अ णिम्मलच्छाओ ।
तह किं विहिणा एसो सरसवाणीओ जलणिही ण किओ ॥५६७॥

अत्र समुद्रे प्रस्तुते विशेषणसाम्यादप्रस्तुतार्थप्रतीतेः किमसौ समासोक्तिः, किमब्धेरप्रस्तुतस्य मुखेन कस्यापि तत्समगुणतया प्रस्तुतस्य प्रतीतेरियम् अप्रस्तुतप्रशंसा ? इति सन्देहः । यथा वा—

नयनानन्ददायीन्दोर्बिम्बमेतत् प्रसीदति ।
अधुनाऽपि निरुद्धाशमविशीर्णमिदं तमः ॥ ५६८ ॥

अत्र किं कामस्योद्दीपकः कालो वर्त्तते इति भङ्ग्यन्तरेणाभिधानात् पर्यायोक्तम्, उत वदनस्येन्दुबिम्बतयाऽध्यवसानादतिशयोक्तिः, किं [1]च एतदिति वक्त्रं निर्दिश्य तद्रूपारोपवशाद् रूपकम्,

---

समुच्चयेनेति । एकस्य चेति चकारस्य '[2]स्वस्थानेऽनुपयोगेन अनिश्चय इत्येवंयोजनया तच्चकारलभ्यसमुच्चयेनानिश्चयश्च सङ्कर इत्यर्थलाभादित्यर्थः'* ।

जह गंभीर इति—

यथा गम्भीरो यथा रत्ननिर्भरः यथा च निर्मलच्छायः ।
तथा किं विधिना एष सरसपानीयो जलनिधिर्न कृतः ॥ इति संस्कृतम् ।

रत्ननिर्भरो रत्नबहुलः । अत्रालङ्कारयोः सन्देहं ग्राहयति—अत्रेति । प्रस्तुते प्राकरणिके । विशेषणसाम्यादिति, गम्भीरत्व-रत्नबहुलत्व-निर्मलच्छायत्वविशेषणानामप्रकृते पुरुषेऽपि सत्त्वादित्यर्थः । न च सरसपानीयत्वं पुरुषे नास्तीति वाच्यम्, तेनाऽऽश्रितस्योपकारार्हविशेषगुणत्वस्योभयवृत्तित्वात् । किमब्धेरिति । पुरुषस्य प्रक्रान्तस्य इत्यर्थः ।

बहूनामलङ्काराणामपि सन्देहसङ्करमाह—यथा वा नयनेति । इन्दोरिदं नयनानन्ददायि बिम्बं प्रसीदति प्रसन्नं भवति । अधुनाऽपीदं निरुद्धाशं निरुद्धदिगन्तं तमोऽविशीर्णमनष्टम्, काकुवशात् कथमविशीर्णमित्यर्थः । भङ्ग्यन्तरेणेति, इन्दुबिम्बप्रसादलभ्यकामोद्दीपकत्वकस्य वर्त्तमानकालस्य व्यङ्ग्यस्यापि अधुनापदेनाधिकरणतया वाच्यत्वरूपभङ्ग्यन्तरेणेत्यर्थः । अतिशयोक्तिरिति, मानिनीवदनस्य प्रकृतस्यानिर्देशेन तदुपमानेन्दुबिम्बतया तदध्यासात् । 'कमलमनम्भसी'तिवदुपमानेनोपमेयनिगरणरूपेत्यर्थः । किञ्चैतदिति, बिम्बमेतदित्यत्रैतत्पदेन नेन्दुबिम्बनिर्देशः किन्त्वेतन्मुखमेवेन्दुबिम्बमिति रूपकमित्यर्थः । अत्र पूर्वत्र च मानहेतुभूत-

---

1. 'वा' इति मुद्रितपुस्तकपाठः । 2. 'अनिश्चयश्चेत्यन्वयेन सङ्करस्यैव समुच्चितत्वादित्यर्थः' इति ख-पुस्तकपाठः ।

[1]अथवैतयोः समुच्चयविवक्षायां दीपकम्, अथ वा तुल्ययोगिता, किमुत प्रदोषसमये विशेषणसाम्यादाननस्यावगतौ समासोक्तिः, आहोस्विन्मुखनैर्मल्यप्रस्तावादप्रस्तुतप्रशंसा ? इति बहूनां सन्देहादयमेव सङ्करः।

यत्र तु न्यायदोषयोरन्यतरस्यावतारः, तत्रैकतरस्य निश्चयान्न संशयः। न्यायश्च साधकत्वम् अनुकूलता, दोषोऽपि बाधकत्वं प्रतिकूलता। तत्र—

'सौभाग्यं वितनोति वक्त्रशशिनो ज्योत्स्नेव हासद्युतिः'।८६९॥

इत्यत्र मुख्यतयाऽवगम्यमाना हासद्युतिर्वक्त्र एवाऽऽनुकूल्यं भजते इत्युपमायाः साधकम्, शशिनि तु न तथा प्रतिकूलेति रूपकं प्रति तस्या अबाधकता।

---

स्तमोगुणः स्तमःपदार्थः। निरुद्धाशं निरुद्धकामिप्रत्याशमित्यर्थः। **अथवैतयो**रिति, रूप्यरूपकं विना इन्दुबिम्ब-वदनयोरप्रकृत-प्रकृतयोः प्रसादरूपैकधर्मान्वयरूपसमुच्चय-विवक्षायामित्यर्थः। **अथवा तुल्ययोगिते**ति, इन्दुबिम्बवदनयोर्द्वयोरपि प्रकृतत्वेऽप्रकृतत्वे वा तुल्ययोगितेत्यर्थः। दीपकतुल्ययोगितयोरेतन्मात्रभेदात् पूर्वत्रात्र च बिम्बमित्यत्र बिम्बश्चेत्यर्थो बोध्यः। **किमुते**ति, प्रदोषकालीनचन्द्रस्य प्रकान्तत्वे इत्यर्थः। **विशेषणसाम्या**दिति, प्रसादरूपस्य विशेषणस्य। **आहोस्वि**दिति, पदमिदं पक्षान्तरवाचि। स्पष्टमपरम्। **अयमेवे**ति। अनिश्चय एव सङ्करः, निश्चयसत्त्वे तु न सङ्कर इत्यर्थः। तदेवाह—**यत्र त्वि**ति। ननु न्याय एवापरकोटेर्दोषः, एवं दोष एवापरकोटेर्न्यायस्तत् कथमिदं त्वया उक्तमित्यत आह—**न्यायश्चे**ति। एकस्य साधकं नान्यस्य बाधकम्, किन्तु तदंशे उत्कटत्वरूपाऽनुकूलतैव तस्य, न त्वपरांशे सर्वथा बाधकत्वमित्यर्थः। एवं दोषेऽपि बोध्यम्।

**सौभाग्य**मिति। ज्योत्स्नातुल्या हासद्युतिर्वक्त्रशशिनः सौभाग्यं वितनोतीत्यर्थः। वक्त्रमेव शशी वक्त्रं शशीवेति वा रूपकोपमयोः सन्देहे 'मुख्यतया' विशेष्यतयाऽवगम्यमाना हासद्युतिर्वक्त्र एवाऽऽनुकूल्यं भजते, वक्त्रं शशीवेत्युपमालब्धप्राधान्ये वक्त्र एव साक्षात्सम्बन्धेन प्रतीतिविषयत्वादुपमायामानुकूल्यं भजत इत्यर्थः। **शशिनि त्वि**ति। वक्त्रमेव शशीति रूपकलब्धप्राधान्ये शशिनि

---

1. 'अथवा तयो' इति पाठान्तरम्। 2. 'किमु' इति पाठः क्वचित्।

'वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्यतः' ॥ ५७० ॥

इत्यत्रापरत्वमिन्दोरनुगुणं न तु वक्त्रस्य प्रतिकूलमिति रूपकस्य साधकतां प्रतिपद्यते, न तूपमाया बाधकताम् ।

'राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम् ॥ ५७१ ॥

इत्यत्र पुनरालिङ्गनमुपमां निरस्यति, सदृशं प्रति परप्रेयसी-प्रयुक्तस्याऽऽलिङ्गनस्यासम्भवात् ।

(A)पादाम्बुजं भवतु वो विजयाय मञ्जु
मञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥ ५७२ ॥

---

तु न तथा प्रतिकूला, वक्त्राभिन्नतया प्रतीयमाने शशिन्यपि वक्त्रधर्मस्य हासद्युतेः परम्परयाऽन्वयसम्भवादिति भावः । किन्तु परम्परापेक्षया साक्षात्त्वे आनुकूल्यमिति भावः ।

इत्थमुपमायाम् आनुकूल्यं दर्शयित्वा रूपके आनुकूल्यं दर्शयति—**वक्त्रेन्दाविति** । यदपर इत्यत्र तद् वृथेति शेषो बोध्यः । **अपरत्वमिन्दोरनुगुणमिति**, वक्त्रमेवेन्दुरिति रूपकलब्धप्राधान्यस्य इन्दोरनुगुणमित्यर्थः । 'अयमपरः पण्डितः' इत्यत्र यथा पण्डितान्तरापेक्षयैवापरत्वं प्रतीयते न घटाद्यपेक्षया, तथा [1]'अयमपरः शीतांशुरि'त्युक्तावपि वक्त्रात्मकेन्द्वपेक्षयैवापरत्वप्रतीतिः, न त्विन्दुतुल्यवक्त्रापेक्षयेत्यर्थः[1]* । वक्त्रमिन्दुरिवेत्युपमायान्तु तस्य नैकान्तं प्रातिकूल्यमित्याह—**न तु वक्त्रस्येति**, वक्त्रमिन्दुरिवेत्युपमालब्धप्राधान्यस्य वक्त्रस्य तु न प्रतिकूलमित्यर्थः, वक्त्रापेक्षया परत्वस्याबाधितत्वादिति भावः । इन्द्वपेक्षया परत्वन्तु पुरस्फूर्त्तिकमिति तदानुकूल्यमिति भावः ।

इदानीं दोषस्यैवैकत्र प्रातिकूल्योत्कटत्वरूपं बाधकं दर्शयति—**राजनारायणमिति** । राजैव नारायणः, राजा नारायण इवेति रूपकोपमयोः सन्देहे आलिङ्गनस्यौत्कट्यात् तां निरस्यतीत्यर्थः । प्रातिकूल्यं ग्राहयति—**सदृशं प्रतीति** । प्रेयसी नारायणस्य, नारायणसदृशे तस्या आलिङ्गनबाधादित्यर्थः ।

रूपके प्रातिकूल्यौत्कट्यं दर्शयति—**पादाम्बुजमिति** । पादोऽम्बुजमिव, पाद

---

(A) पादाम्बुजमिति—'आनन्दमन्थरपुरन्दरमुक्तमाल्यं मौलौ हठेन निहितं महिषासुरस्य ।' इति पूर्वार्द्धम् । क्वचिन्मुद्रितपुस्तके सम्पूर्णमेव पद्यं मुद्रापितं दृश्यते ।

---

1. 'इन्द्वपेक्षयैवापरत्वप्रतीते रूपकानुकूल्यमित्यर्थः' इति ग-पुस्तकपाठः ।

इत्यत्र मञ्जीरशिञ्जितम् अम्बुजे प्रतिकूलम् असम्भवादिति रूपकस्य बाधकम्, (A)न तु पादेऽनुकूलमित्युपमायाः साधकमभिधीयते, विध्युपमर्दिनो बाधकस्य तदपेक्षयोत्कटत्वेन प्रतिपत्तेः। (B)एवमन्यत्रापि सुधीभिः परीक्ष्यम्।

(२१०) स्फुटमेकत्र विषये (C)शब्दार्थालङ्कृतिद्वयम्।
व्यवस्थितं च

---

एवाम्बुजमिति च सन्देहः। अम्बुजे प्रतिकूलमिति, रूपकलब्धप्राधान्ये अम्बुज इत्यर्थः। प्रातिकूल्यं चाम्बुजे मञ्जीरबाधात्। न च मञ्जीरस्य भ्रमररूपणं व्यङ्ग्यमिति वाच्यम्, उपमासमाससम्भवे वाच्यमञ्जीरेणैवोपपत्तेर्व्यङ्ग्यबोधानुदयात्। 'गुणसिन्धु'रित्यादौ तु वाच्यस्य गुणस्य सिन्धावनुपपत्त्या गुणे जलरूपणव्यञ्जनोदय इत्यवधेयम्। न तु पादेऽनुकूलमिति। पादोऽम्बुजमिवेत्युपमालब्धप्राधान्ये पादे मञ्जीरस्याऽऽनुकूल्येऽपि तदपेक्षया अम्बुजे मञ्जीरबाधस्य पुरस्फूर्त्तिकतया उत्कटत्वाद् रूपकप्रातिकूल्यस्यैवोपमाग्राहकत्वं नोपमानुकूल्यं तद्ग्राहकमित्यर्थः। रूपकप्रातिकूल्यमेवाह—विध्युपमर्दिन इति। रूपकविध्युपमर्दिन इत्यर्थः।

इदानीमलङ्कारयोरेकपदप्रतिपाद्यत्वरूपं सङ्करमाह—स्फुटमिति। एकपदरूपे विषये

---

(A) न तु पादेऽनुकूलमिति। अत्राऽऽहुः प्रदीपकाराः—नन्वेतदुपमासाधकमपि भवति पादेऽनुकूलत्वात्, तत् कथं रूपकबाधकतामात्रत्वमस्योच्यते न तूपमासाधकत्वमपीति। एवमन्यत्रापि यदेकत्रानुकूलं तद् बाहुल्येन परत्र प्रतिकूलम्; यच्चैकत्र प्रतिकूलं तत् तत एवान्यत्रानुकूलम्। अन्यथा तथात्वस्यैवासम्भवादिति चेत्? सत्यम्, किन्तु यस्य यथात्वमुत्कटं प्रतीयते तत्र तस्य तथात्वव्यपदेशः। अत्र तु विध्युपमर्दिबाधकं साधकापेक्षयोत्कटत्वेन प्रतीयत इति तेनैव व्यपदेशो युक्तः। तदेतदुक्तम्—विध्युपमर्दि[नो]बाधकस्य तदपेक्षयोत्कटत्वेन प्रतिपत्तेरिति। अन्ये तु तदन्यथा व्याचक्षते—विधीयते अनेनेति विधिः साधकम्, तदुपमर्दि तस्माद् बलीयः। एतदुक्तं भवति—मञ्जीरशिञ्जितस्य पादे सम्भवमात्रेण न तावदुपमासाधकत्वं निर्वहति, यावदम्बुजे तद्विरहो न निश्चीयते। तथा च तद्बाधकस्यैव प्राथमिकत्वात्तन्मुखेनैव व्यपदेशः, एवमन्यत्रापि साधकबाधकपरत्वं सुधीभिः परिभावनीयम् इति।

(B) एवमन्यत्रापीति—'यस्यानिशं दिविषदश्चरणारविन्दमुत्तंसयन्त्यमितभक्तिभरावनम्राः' इत्यादौ उत्तंसनमुपमाबाधकमिति बोध्यमि'त्युद्द्योतः।

(C) शब्दार्थालङ्कृतीति। अत्र प्रदीपः—'शब्दार्थालङ्कृतीति प्रायोवादः, शब्दालङ्कारयोरप्येतद्दर्शनात्। यथा—'कलकलोऽलकलोलदृशाऽन्यया' इत्यादावनुप्रास-यमकयो'रिति। अयमपि

अभिन्ने एव पदे स्फुटतया यद्उभावपि शब्दार्थालङ्कारौ व्यवस्थां समासादयतः सोऽप्यपरः सङ्करः। उदाहरणम्—

स्पष्टोल्लसत्किरणकेशरसूर्यबिम्ब-
विस्तीर्णकर्णिकमथो दिवसारविन्दम्।
श्लिष्टाष्टदिग्दलकलापमुषावतार-
बद्धान्धकारमधुपावलि सञ्चुकोच ॥५७३॥

अत्रैकपदानुप्रविष्टौ रूपकानुप्रासौ।

(२११)—तेनासौ त्रिरूपः परिकीर्त्तितः ॥ १४१ ॥

व्यवस्थितश्चेति च-कारलब्धं सङ्करत्वमाह—

वस्तुनीत्यर्थः। व्यवस्थाम् असन्देहेन सत्ताम्।

सोऽप्यपर इति।

स्पष्टोल्लसदिति। सन्ध्यावर्णनमिदम्। अथोऽनन्तरं दिवसरूपमरविन्दं सञ्चुकोच सङ्कुचितं बभूव, सन्ध्याऽभूदित्यर्थः। अरविन्दधर्मान् रूपयति—स्पष्टेति। स्पष्टं यथा स्यात्तथा उल्लसन्तो दीप्यमानाः किरणा एव केशराणि यत्र तादृशी सूर्यबिम्बस्वरूपा विस्तीर्णा कर्णिका यत्र तादृशम्। तथा श्लिष्टः परस्परसम्बद्धोऽष्टदिगात्मको दलकलापो यत्र तादृशम्। दिशां भेदानुपलम्भेन श्लिष्टता। तथा (A)उषावतारे प्रभाते गुहाबद्धान्धकारा एव मधुपावलिर्यत्र तादृशम्। अत्रेति, सुगमम्।

यथा—

प्रायोवादः, न्यायसाम्यादर्थालङ्कारयोरपि सङ्करस्य बाधानौचित्यात्।

'वक्त्रारविन्दमधुलुब्धमधुव्रताश्च धावन्त्यमी वकुलवञ्जुलकुञ्जमध्ये'

इत्यादौ रूपकातिशयोक्त्योः। एवञ्च—शब्दार्थालङ्कृतिद्वयमित्यत्र शब्दश्च अर्थश्च शब्दार्थौ च तेषामलङ्कृतिरिति विग्राह्यम्, ततश्च शब्दालङ्कारयोरर्थालङ्कारयोः शब्दार्थालङ्कारयोरयं सङ्कर इति न काचिदनुपपत्तिः। एवं रीत्या शब्दार्थालङ्कारौ पुनरुक्तवदाभास-परम्परितरूपके अप्यत्रान्तर्भाव्य तयोरुदाहरणं स्वयमूहनीयम्। प्रकाशकृता तु 'आनन्त्यात् तत्प्रभेदानां' त उपेक्षिता इति ज्ञेयम्।

(A) उषावतार इति। पञ्चमस्वरादिरिकारान्त उषशब्दोऽप्यस्ति। अत्र 'मुखावतार' इत्युद्द्योतसम्मतः पाठः, 'मुखावतार' इत्युदाहरणचन्द्रिकासम्मतः। मुखावतार इति पक्षे—'[ श्लिष्टा ] मिथः संबद्धा अष्टौ दिश एव दलसमूहा यस्य तच्च तन्मुखं रात्रेरारम्भस्तदवतारेण बद्धा अन्धकारमधुपावलिर्यत्रे'त्युद्द्योतः। 'सुखावतार' इति पक्षे—'श्लिष्टाः प्रकाशाभावेन परस्परं मिलिता अष्ट दिश एव दलानां कलापं समूहस्तत्र सुखेनावतारो यस्य स चासौ बद्धान्धकारश्च स एव मधुपावलिर्यत्र तादृशम्' इत्युदाहरणचन्द्रिका।

तदयमनुग्राह्यानुग्राहकतया सन्देहेन (A)एकपदप्रतिपाद्यतया च व्यवस्थितत्वात् त्रिप्रकार एव सङ्करो व्याकृतः। प्रकारान्तरेण तु न शक्यो व्याकर्तुम् (B)आनन्त्यात् तत्प्रभेदानामिति। प्रतिपादिताः शब्दार्थोभयगतत्वेन त्रैविध्यजुषोऽलङ्काराः।

कुतः पुनरेष नियमो यदेतेषां तुल्येऽपि काव्यशोभातिशय-हेतुत्वे कश्चिदलङ्कारः शब्दस्य कश्चिदर्थस्य कश्चिच्चोभयस्येति चेत्, न; उक्तमत्र यथा काव्ये दोषगुणालङ्काराणां शब्दार्थोभयगतत्वेन व्यवस्थायामन्वयव्यतिरेकावेव प्रभवतः, निमित्तान्तरस्याभावात्। ततश्च योऽलङ्कारो यदीयान्वयव्यतिरेकावनुविधत्ते स तदलङ्कारो व्यवस्थाप्यते इति। (C)एवं च यथा पुनरुक्तवदाभासः परम्परित-रूपकं चोभयोर्भावाभावानुविधायितया उभयाऽलङ्कारौ, तथा शब्द-

---

प्रकारान्तरेण त्विति, एकोऽनुग्राहकः अपरोऽनुग्राह्यस्तयोर्वैपरीत्यञ्च परस्परानुग्राह्यानुग्राहकता च। अनुग्रहोऽपि जनकता चमत्कारिता च इत्यादि-प्रकारान्तरेणेत्यर्थः। त्रैविध्येति। शब्दतदर्थतदुभयगतत्वेन त्रैविध्यम्। उक्त-मत्रेति। श्लेषालङ्कारप्रसङ्गेनान्वयव्यतिरेकयोरेव तन्नियामकत्वमित्युक्तमित्यर्थः। तदेव पुनः स्मारयति—यथेति। तथा शब्दहेतुकार्थान्तरन्यासेति। 'क्षणदाऽसावक्षणदे'(४र्थ ८२)त्यादौ शब्दहेतुकार्थान्तरन्यासः। आदिग्रहणा'च्चक्रनिरशनिश्चे'-त्यादिषु विरोधस्य 'स्वयञ्च पल्लवाताम्रे'त्यादावुपमायाश्च परिग्रहः। ननु तर्हीते

---

(A) एकपदप्रतिपाद्यतयेति। 'एकपदाश्रितत्वेन गम्यमानतयेत्यर्थः, यथाश्रुते शब्दालङ्कारे पदप्रतिपाद्यत्वस्य असम्भवादि'ति प्रभा।

(B) आनन्त्यादिति, शब्दगतत्वेनार्थगतत्वेन चानुगतीकृत्योक्तम्। उपमारूपकादीन् विशिष्योपादाय त्वनन्तत्वात्तत्सङ्करो वक्तुं न शक्यत इत्युद्द्योतः।

(C) एवञ्चेति। योऽलङ्कार इत्याद्युक्तरीत्या शब्दार्थालङ्कारत्वव्यवस्थाभ्युपगम इत्यर्थः। तनुवपुरित्यादिपुनरुक्तवदाभासे तनुशब्दस्य परिवृत्त्यसहत्वाच्छब्दान्वयव्यतिरेकौ, वपुःशब्दस्य परिवृत्तिसहतया चार्थान्वयव्यतिरेकौ इत्युभयालङ्कारत्वम्। तथा विद्वन्मानसेत्यादिपरम्परित-रूपके मानसपदस्य श्लिष्टतया परिवृत्त्यसहत्वाद् हंसादिपदानाञ्च तत्सहत्वादुभयालङ्कारता, एवं 'क्षणदासावक्षणदा' इत्यत्रार्थान्तरन्यासेऽपि श्लेषमूलकतया शब्दान्वयव्यतिरेकानुविधानम्, उत्तरार्द्धे त्वर्थस्येत्युभयालङ्कारत्वम् इति प्रभा।

हेतुकार्थान्तरन्यासप्रभृतयोऽपि द्रष्टव्याः। अर्थस्य तु तत्र वैचित्र्यम् उत्कटतया प्रतिभासते इति वाच्यालङ्कारमध्ये वस्तुस्थितिमनपेक्ष्यैव लक्षिताः। योऽलङ्कारो यदाश्रितः स तदलङ्कार इत्यपि कल्पनायाम् अन्वयव्यतिरेकावेव समाश्रयितव्यौ तदाश्रयणमन्तरेण विशिष्टस्याऽऽश्रयाश्रयिभावस्याभावादित्यलङ्काराणां (A)यथोक्तनिमित्त एव परस्परव्यतिरेको ज्यायान्।

(२१२) एषां दोषा यथायोगं सम्भवन्तोऽपि केचन।
उक्तेष्वन्तर्भवन्तीति न पृथक् प्रतिपादिताः॥ १४२॥

तथा हि अनुप्रासस्य प्रसिद्ध्यभावो वैफल्यं वृत्तिविरोध इति ये त्रयो दोषाः, ते प्रसिद्धिविरुद्धताम् अपुष्टार्थत्वं प्रतिकूलवर्णतां च यथाक्रमं न व्यतिक्रामन्ति, तत्स्वभावत्वात्।

---

अलङ्काराः कथमर्थालङ्कारमध्ये लक्षिता इत्यत आह—अर्थस्येति। नन्वलङ्काराणां शब्दतदनुरूपाश्रयभेद एव शब्दतदर्थालङ्कारत्वे नियामकोऽस्त्वित्यतस्तस्याप्युक्तरूपानतिरिक्तत्वमित्याह—योऽलङ्कार इति।

इदानीं सम्भवतामप्यलङ्कारदोषाणामुक्तदोषान्तर्गतत्वमेवाह—एषामिति। यथायोगं यथासम्भवम्, तेन सर्वत्रालङ्कारे न दोषसम्भव इत्युक्तम्। प्रसिद्ध्यभाव इति। अनुप्रासितपदार्थयोर्विवक्षितेऽन्वये लोकतः शास्त्रतो वा प्रसिद्ध्यभाव इत्यर्थः। वैफल्यमिति, अनुप्रासितशब्दानुरूपस्य विशेषणस्य विशेष्यप्रकर्षानाधायकत्वाद् वैफल्यमित्यर्थः। वृत्तिविरोध इति। अनुप्रासघटकवर्णानां रसविशेषवति काव्ये स्थित्यनौचित्यमित्यर्थः। प्रतिकूलतां (B)प्रतिकूलवर्णदोषताम्।

---

(A) यथोक्तनिमित्त इति, अन्वयव्यतिरेकनिबन्धन इत्यर्थः। ज्यायान् इति। 'साक्षाच्छब्दाश्रितत्वस्य यमक-खड्गबन्धादौ, साक्षादर्थाश्रितत्वस्य उत्प्रेक्षा-समासोक्त्यादौ असम्भवात् कथञ्चित् तदाश्रितत्वस्यातिप्रसक्तत्वात् परिवृत्त्यसहशब्दाश्रितत्वं तत्सहशब्दार्थाश्रितत्वं वाच्यम्, तथा च कथञ्चिदाश्रितत्वांशप्रवेशो विफल इत्याशयः' इत्युद्द्योतकाराः।

(B) प्रतिकूलेति। व्याकृतमिदमुद्द्योते—'माधुर्यव्यञ्जिकायां वृत्तौ शब्दत एव टवर्गादेः, ओजोव्यञ्जिकायामुद्धतगुम्फविधानमुखेन शिथिलबन्धस्यार्थतः पर्युदासादिति भावः' इति।

क्रमेणोदाहरणम्—

चक्री चक्रारपङ्क्तिं हरिरपि च हरीन् धूर्जटिर्धूर्ध्वजान्तान्
अक्षं नक्षत्रनाथोऽरुणमपि वरुणः कूबराग्रं कुबेरः ।
रंहः संघः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य
स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात् स्यन्दनो वः ॥५७४॥

अत्र कर्तृकर्मप्रतिनियमेन स्तुतिरनुप्रासानुरोधेनैव कृता न पुराणेतिहासादिषु तथा प्रतीतेति प्रसिद्धिविरोधः ।

(A)भण तरुणि रमणमन्दिरमानन्दस्यन्दिसुन्दरेन्दुमुखि ।
यदि सल्लीलो[1]ल्लापिनि गच्छसि तत् किं त्वदीयं मे ॥ ५७५ ॥

---

चक्रीति । अहिमरुचेः सूर्यस्य स स्यन्दनो वो युष्मान् अवतात् पायात् । जगदुपकृतये नित्ययुक्तस्य सततं धावितस्य यस्य चक्रारपङ्क्तिं चक्राग्रभागश्रेणीं चक्री विष्णुः स्तौति । हरिरिन्द्रो हरीन् अश्वान् स्तौतीत्यन्वयः । एवमुत्तरोत्तरत्राऽपि । [2]धूर्ध्वजान्तान् संमुखस्थध्वजप्रान्तान् । 'धूः स्त्री यानमुखम्' इति कोषः । धूर्ध्वजाग्रानिति क्वचित् पाठः । अत्र चाग्रपदस्य पुंलिङ्गत्वं न दृष्टचरम् । अक्षं चक्रम्, नक्षत्रनाथश्चन्द्रः[2]*, अरुणं सूर्यस्यैव सारथिम् । कूबराग्रं युगन्धराग्रं 'कूबरोऽस्त्री युगन्धरः' इत्यमरः । रंहो वेगम्, सुराणां संघः समूहः । प्रीतिप्रसन्न इति सर्वेषामेव कर्तॄणां विशेषणम् । [3]अत्र प्रसिद्धिविरोधं दर्शयति—अत्रेति ।

वैफल्यं दर्शयति—भण तरुणीति । (B) रमणगृहगमनपथमनासाद्य व्याकुलामभिसारिकां प्रति वर्त्म दिदर्शयिषोः कस्यचिदुक्तिरियम् । हे तरुणि, यदि रमण-

---

(A) भण तरुणीति । श्लोकद्वयमेकान्वयीत्युदाहरणचन्द्रिका-सुधासागरकारादयः । उद्द्योतकारप्रदीपकारयोरप्यत्रैव सम्मतिरित्यनुमीयते । निर्णयसागरमुद्रिते काव्यमालायाश्चतुर्विंशभागरूपे काव्यप्रदीपे त्वस्मद्गृहीतव्याख्यायामिव 'यथा वे'त्युपक्रम्य द्वितीयश्लोकोत्थापनं कृतमिति दृश्यते । अन्यत्र मुद्रिते प्रदीपे तु 'यथा वे'त्यंशो नास्ति । सल्लीलोल्लापिनीति । सतीभिर्लीलाभिरुल्लपितुं शीलं यस्या इत्यर्थः । उल्लासिनीति पाठे—सतीर्लीला उल्लासयितुं शीलं यस्याः ।

(B) 'स्वोभाविगमनां प्रति जारस्य वच' इत्युद्द्योतः ।

---

1. '-ल्लासिनी'ति क्वचित् पाठः । 2. 'धूः स्त्री यानमुखमि'ति कोषः । तथा च यानमुखस्थध्वजाग्रा-नित्यर्थः । अग्रशब्दः पुंलिङ्गोऽपि' इति ग-पुस्तकपाठः । 3. अतः परं ग-पुस्तके 'प्रीतिप्रसन्नः सकलं स्तौतीत्यन्वयः' ।

यथा वा—

(A)अनणुरणन्मणिमेखलमविरतशिञ्जानमञ्जुमञ्जीरम् ।

परिसरणमरुणचरणे रणरणकमकारणं कुरुते ॥ ८७६ ॥

अत्र वाच्यस्य विचिन्त्यमानं न किंचिदपि चारुत्वं प्रतीयते इत्यपुष्टार्थतैवानुप्रासस्य वैफल्यम् ।

अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि माम् ।

कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्त्तिमुद्धर ॥ ८७७ ॥ इति ।

अत्र शृङ्गारे परुषवर्णाडम्बरः पूर्वोक्तरीत्या विरुध्यत इति परुषानुप्रासोऽत्र प्रतिकूलवर्णतैव वृत्तिविरोधः ।

यमकस्य पादत्रयगतत्वेन यमनमप्रयुक्तत्वं दोषः । यथा—

भुजङ्गमस्येव मणिः सदम्भा ग्राहावतीर्णेव नदी सदम्भाः ।
दुरन्ततां निर्णयतोऽपि जन्तोः कर्षन्ति चेतः प्रसभं सदम्भाः ॥८७८॥

मन्दिरं गच्छसि, तदा त्वदीयं किं वस्तु मे मम स्यात्, त्वं किं मह्यं दास्यसीत्यर्थः । अत्र बहुसम्बोधनमनुप्रासायैव न तु वर्त्मप्रदर्शनवेतनप्रार्थनोपयोगीत्यपुष्टार्थत्वम् ।

प्रपञ्चयति—यथा वा अनणुरणदिति । वेश्यां प्रति शान्तपुरुषस्योक्तिरियम् । हे अरुणचरणे, तव परिसरणं गमनं पुंसां रणरणकं कामचिन्ताम् अकारणं कुरुते, 'चिन्ता रणरणकश्च तदि'ति कोषः । परिसरणं कीदृशम् ? अनणु अनल्पं रणन्ती मणियुक्ता मेखला यत्र । अविरतशिञ्जानं शब्दायमानं मञ्जु मञ्जीरं यत्र तादृशम् । अत्र शान्तपुरुषस्योक्तौ तत्सौन्दर्यबोधकं सम्बोधनं न चारुतावहमित्याह—अत्रेति । कामचिन्ताजननस्य निष्फलत्वकथनाद् वैराग्यवतः पुरुषस्यैवेयमुक्तिः, तत्र च तस्यां भावबोधकतच्चरणतद्गमनविशेषणवैयर्थ्यमिति भावः ।

वृत्तिविरोधमुदाहरति—अकुण्ठेति । व्याख्यातमिदं दोषोल्लासे (३२९ पृ० ) । अत्र शृङ्गारप्रतिकूलाष्टवर्गवर्णा अनुप्रासार्थमेवोपात्ताः ।

भुजङ्गमस्येवेति । सदम्भा दाम्भिका जनास्तदीयां दुरन्ततां निर्णयतोऽपि जन्तोर्जनस्य चेतः प्रमुखे आपाततः कर्षन्ति । सदम्भाः सजलो भुजङ्गमस्य मणिरिव ।

---

(A) अनणुरणदिति पञ्चमस्वरघटन्त्यनकारवान् पाठ उद्द्योतसम्मतः, न अनुरणन्ती शब्दायमाना मणिमेखला यत्र, शब्दरहितमणिमेखलमित्यर्थः ।

उपमायामुपमानस्य जातिप्रमाणगतन्यूनत्वम् अधिकता वा [1]तादृशि(A) अनुचितार्थत्वं दोषः। धर्माश्रये तु न्यूनाधिकत्वे यथाक्रमं हीनपदत्वमधिकपदत्वं च न व्यभिचरतः। क्रमेणोदाहरणम्—

चण्डालैरिव युष्माभिः साहसं परमं कृतम् ॥ ५७९ ॥

वह्निस्फुलिङ्ग इव भानुरयं चकास्ति ॥ ५८० ॥

अयं पद्मासनासीनश्चक्रवाको विराजते।
युगादौ भगवान् वेधा विनिर्मित्सुरिव प्रजाः ॥ ५८१ ॥

पातालमिव ते नाभिः स्तनौ क्षितिधरोपमौ।
वेणीदण्डः पुनरयं कालिन्दीपातसन्निभः ॥ ५८२ ॥

---

(B) जलमत्र स्वच्छताहेतुरन्तर्गतं पानीयम्। भुजङ्गमसम्बन्धात्तस्य दुरन्तता, ग्राहावकीर्णनद्याश्च ग्राहसम्बन्धादेव दुरन्तता। सज्जलत्वेनाऽऽपाततश्चेतःकर्षणम्। अत्र चरणत्रयेऽन्त्ययमकं कविभिरप्रयुक्तम्।

उपमायामिति। उपमेयजात्यपेक्षया उपमानजातेर्न्यूनत्वमधिकत्वं वेत्यर्थः। एवमुपमेयप्रमाणापेक्षया उपमानप्रमाणस्य न्यूनत्वमभ्यधिकत्वं वेत्यर्थः। तादृशीति, तादृशकाव्य इत्यर्थः। धर्माश्रये त्विति, उपमेये निर्दिष्टो यो धर्म उपमानस्य तदाश्रितं न्यूनत्वमधिकत्वं वेत्यर्थः।

तत्रोपमानजातेर्न्यूनत्वमाह—चण्डालैरिति[2]। अत्र चण्डालत्वं जातिर्न्यूना।

प्रमाणगतं न्यूनत्वमाह—वह्नीति। अत्र स्फुलिङ्गपरिमाणं न्यूनम्।

[3]उपमानस्य[3]* जातिगतमभ्यधिकत्वमाह—अयमिति। अत्र ब्रह्मत्वजातिरभ्यधिका। ब्रह्मणामप्यनेकत्वात् '[4]सृष्टिजनकतावच्छेदकं[4]* ब्रह्मत्वं जातिः।

परिमाणगतमभ्यधिकत्वमाह--पातालमिवेति। कालिन्दीपातः कालिन्दीप्रवाहः।

---

(A) 'तादृशी' इत्यधिकतेत्यस्य विशेषणरूपः प्रथमान्तपाठ एव ज्यायान्। यथा न्यूनत्वं जातिप्रमाणगतम् एवमधिकताऽपि जातिप्रमाणगतेति तदर्थः।

(B) जलमत्रेति। अत्र मणिपक्षे। सदम्भाः सत्कान्तिः कान्तेरम्भःपदवाच्यत्वाद्विद्युद्द्योतः। अम्भस्तेजोविशेष इत्युदाहरणचन्द्रिका।

---

1. 'तादृशी' इति पाठो बहुषु पुस्तकेषु। 2. 'युष्माभिर्ब्राह्मणैः' इत्यधिकः पाठः क-पुस्तके। 3. अयमंशो ग-पुस्तके नास्ति। 4. अयमंशो ग-पुस्तके नास्ति।

अत्र चण्डालादिभिरुपमानैः प्रस्तुतोऽर्थोऽत्यर्थमेव (A)कदर्थित इत्यनुचितार्थता।

स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन्।
व्यराजन्नीलजीमूतभागाश्लिष्ट इवांशुमान्॥ ५८३॥

अत्रोपमानस्य मौञ्जीस्थानीयस्तडिल्लक्षणो धर्मः केनापि पदेन न प्रतिपादित इति हीनपदत्वम्।

स पीतवासाः प्रगृहीतशार्ङ्गो मनोज्ञभीमं वपुराप कृष्णः।
शतह्रदेन्द्रायुधवान् निशायां संसृज्यमानः शशिनेव मेघः॥५८४॥

अत्रोपमेयस्य शङ्खादेरनिर्देशे शशिनो ग्रहणमतिरिच्यते इत्यधिकपदत्वम्।

---

अत्र पातालक्षितिधरकालिन्दीपातानां परिमाणस्यात्याधिक्यम्। यद्यपि प्रौढोक्तावधिकत्वं शोभत एव तथाऽप्यत्यधिकत्वमनुचितमित्यभिप्रायः। 'अद्यापि स्तनशैलदुर्गविषमे' (३५० पृ०) इत्यादौ तु रूपकमेव नोपमा। तत्राभेदस्यैवात्यधिकस्याप्याहार्यारोपोऽनुगुण एव। एवं नाभिह्रद इत्यादावपि बोध्यम्।

धर्माश्रयं न्यूनत्वमुदाहरति—स मुनिरिति। स मुनिर्नारदः मौञ्ज्या मेखलया लाञ्छितः कृष्णाजिनरूपं पटं वहंश्च व्यराजत्। नीलजीमूतस्य भागेनैकदेशेन श्लिष्टोऽंशुमान् सूर्य इव। अत्र धर्मन्यूनत्वं दर्शयति—अत्रेति। तडिल्लक्षण इति। मौञ्ज्या अपि पिङ्गत्वात्। कृष्णाजिनस्थाने मेघैकदेश एवेति भावः।

धर्माश्रयमाधिक्यं दर्शयति—स पीतेति। स कृष्णः मनोज्ञं भीमञ्च वपुराप। शार्ङ्गं विष्णोर्धनुः। वपुषः पीतवासस्त्वेन मनोज्ञत्वम्, शार्ङ्गग्रहणेन भीमत्वम्। शतह्रदा विद्युत्, इन्द्रायुधं शक्रधनुः, शशिना संसृज्यमानः संसर्गं प्राप्नुवन्। अत्र धर्माधिकत्वं दर्शयति—अत्रेति। शशिनो ग्रहणं निर्देशः। पीतवासःस्थाने शतह्रदा, शार्ङ्गधनुःस्थाने इन्द्रायुधम्, शङ्खानिर्देशात् शशिसंसर्गोऽतिरिच्यत इत्यर्थः।

उपमानोपमेययोर्लिङ्गवचनभेदो बोद्धृणामुद्वेगाभावे सति न दोष इति, दण्डिना—

---

(A) कदर्थित इति, निन्दोपहासादिप्रतीतेरिति प्रदीपकृतः। व्याख्यातञ्चोद्द्योते—अत्युत्कृष्टत्वप्रख्यातोपमानकत्वम् अपकृष्टोपमेयस्यासत्यतापर्यवसायितया उपहासाय भवतीति भावः।

(A)लिङ्गवचनभेदोऽपि उपमानोपमेययोः साधारणं चेद् धर्ममन्यरूपं कुर्यात् [1]तदेकतरस्यैव तद्धर्मसमन्वयावगतेः सविशेषणस्यैव तस्योपमानत्वमुपमेयत्वं वा प्रतीयमानेन धर्मेण प्रतीयते इति प्रक्रान्तस्यार्थस्य स्फुटमनिर्वाहादस्य भग्नप्रक्रमरूपत्वम्। यथा—

न लिङ्गवचने भिन्ने न हीनाधिकताऽपि वा।
उपमादूषणायालं यत्रोद्वेगो न धीमताम्॥ (काव्यादर्शे २।५१)

इत्यनेनोक्तम्। तत्रोद्वेगकारणसत्त्वे दोष इति लभ्यते। अत उद्वेगकारणं दर्शयन् लिङ्गवचनभेदस्य तत्सत्त्वे दोषत्वं भग्नप्रक्रमान्तर्गतमित्याह—लिङ्गेति। अन्यरूपमिति। विभिन्नलिङ्गवचनयोरुपमानोपमेययोः समन्वये तत्तल्लिङ्गवचनवशादन्यरूपमित्यर्थः। कुर्यादित्यत्र लिङ्गवचनभेदः कर्त्ता। उद्वेगश्चैतादृशस्थल एवेति बोध्यम्। तत्रोद्वेगहेतुत्वबीजं दर्शयति—तदेकतरस्यैवेति। यदेकतरसमानलिङ्गवचनः साधारणधर्मस्तदेकतरस्यैवेत्यर्थः। तथा च तद्धर्मस्यैकत्रान्वयान्न तस्य साधारणधर्मत्वम्, ततस्तद्विशेषणविशिष्टस्यैवोपमानत्वमुपमेयत्वं वा प्रतीयमानेन व्यङ्ग्येन (B)धर्मान्तरेण प्रतीयत इत्यर्थः। प्रक्रान्तस्येति। निर्दिष्टधर्मेणैवोपमायाः

(A) लिङ्गवचनभेदोऽपीति। 'लिङ्गवचनयोर्भेदे यद्युपमानोपमेययोः साधारणधर्मवाचकं पदम् अन्यतरघटितलिङ्गं कुर्यात्तदा एकतरस्यैव तद्धर्मसमन्वयावगतेः कथमुपमानिर्वाहः। अथ प्रतीयमानं साधर्म्यमाश्रित्येयं स्यात्, तथाऽप्युपात्तधर्मविशिष्टस्यैवोपमानत्वमुपमेयत्वं वा प्रतीयते, न च तथा प्रस्तुतम्; अतः प्रक्रान्तस्याभावाद् भग्नप्रक्रमत्वमेव दोष' इति प्रदीपः। व्याख्यातमिदमुद्द्योते—प्रतीयमानमिति। उपात्तधर्मातिरिक्तधर्ममित्यर्थः। न च तथेति, किन्तु उपमाप्रस्तुतेरित्यर्थः। प्रक्रान्तस्य उपमालङ्कारस्य। अभावात् असम्भवात्। इवादिना धर्मत्वेनाप्युपात्तधर्म एव बोध्यते, तस्य निरुक्तोभयनिष्ठत्वे उपमानिर्वाहो नान्यथेति भावः। अपरत्र लिङ्गविपरिणामेन यथा कथञ्चिदन्वयेऽपि स्फुटत्वाभावेन चमत्कारापकर्ष इति तत्त्वम्' इति।

(B) धर्मान्तरेणेति। इयञ्च 'धर्मेणे'ति प्रकाशांशस्य व्याख्या। यद्यपि—'प्रतीयमान'मिति प्रदीपांशम् 'उपात्तधर्मातिरिक्तधर्म'मित्यनेन व्याचक्षाणानामुद्द्योतकृतामप्यत्रैव सम्मतिः संलक्ष्यते, तथाऽपि प्रकाशकाराभिप्रायप्रतिकूलतया 'ननु समानमुच्चरितं प्रतीयमानं वा' (६२८ पृ०) इत्यादिवक्ष्यमाणप्रकाशासङ्गत्या च सा सम्मतिर्नास्माकं श्रद्धामादधाति। तथा हि—यद्यत्र प्रतीयमानेनेत्यस्य प्रतीयमानधर्मान्तरेणेत्यर्थः स्यात्तदा परत्रापि 'प्रतीयमानं धर्मान्तरमुपादाय' दोषक्षालनयत्नः प्रकाशकृतां विशेषणरूपतया विफलः सम्पद्यते। अतो द्विरुल्लिखितयोः 'प्रतीयमानपदयोर्द्विधे-

1. 'तदेकतरस्ये'ति क्वचित् पाठः।

चिन्तारत्नमिव [1]च्युताऽसि करतो धिङ् मन्दभाग्यस्य मे ॥५८५॥
सक्तवो भक्षिता देव शुद्धाः कुलवधूरिव ॥ ५८६ ॥

---

प्रक्रान्तत्वात्। [2]तथा हि लिङ्गवचनभेदे साधारणधर्मस्तावदुपमेयोपमानयोरेकतरस्य समलिङ्गवचनतयैव निर्दिष्टो भवति, अतः स लिङ्गवचनभेदो यदि साधारणधर्ममन्यरूपमेकतरस्यैवान्वययोग्यं कुर्यात्तदा स धर्मो यदन्वययोग्यस्तत्रैव तद्धर्मान्वयावगमात्तद्धर्मविशिष्टस्यैव उपमेयत्वमुपमानत्वं वा प्रतीयमानेन व्यङ्ग्येन धर्मान्तरेणैव प्रतीयत इत्यत उपक्रान्तेन धर्मेण उपमारूपस्यार्थस्य स्फुटमनिर्वाहादस्य भग्नप्रक्रमत्वमित्यर्थः[3]*।

[4]तत्र लिङ्गभेदे उदाहरति[4]—चिन्तारत्नमिवेति। [5]अत्र च्युतिधर्मेणोपक्रान्ता उपमा न निर्वहति, च्युतेति स्त्रीलिङ्गनिर्दिष्टस्य उपमेयायां नायिकायामेवान्वयात्, अतः[5]* [6]च्युतेति साधारणधर्मस्य रत्नान्वये च्युतमित्यन्यरूपता। अत उपादेयत्वेन व्यङ्ग्येनैव धर्मान्तरेणेयमुपमा भग्नप्रक्रमा। "वचनन्तु समानम्"*।

वचनभेदे उदाहरति—सक्तव इति। अत्र शुद्धा इति बहुवचनान्तस्य साधारणधर्मस्य कुलवध्वामन्वये शुद्धेत्यन्यरूपता। तथा च तत्राऽप्युपादेयत्वेन व्यङ्ग्येनैव धर्मेणोपमेति प्रक्रमभङ्गः। [7]लिङ्गन्तु समानम्[7]*।

---

वार्थः करणीयः। एवञ्च वक्ष्यमाणे 'धर्मान्तर'मिति विशेष्यपदश्रवणादिह तद्विपरीतः प्रकान्त एक एव धर्मो विशेष्यतयाऽवलम्बनीयः। तथा च प्रतीयमानेन धर्मेणेत्यस्य भावस्त्वयम्—'चिन्तारत्नमिव च्युताऽसि करत' इत्यत्र च्युतिः साधारणधर्मत्वेनाभिप्रेताऽपि स्त्रीलिङ्गावरुद्धे उपमेये वाच्यविधयाऽन्वेति न तु क्लीबावरुद्धे उपमाने, तत्र तु सा लिङ्गविपरिणामेन व्यङ्ग्यतया प्रतीयमानैव। इयमेवात्र चोपमाया भग्नप्रक्रमता यदेकत्र वाच्यविधया साधारणधर्मस्यान्वयोऽन्यत्र व्यङ्ग्यविधयेति। एवञ्च धर्मेणेत्यस्य प्रकृते च्युतिरूपेणेत्यर्थः। अनुगतार्थस्तु—लिङ्गवचनादिवशादुपमानोपमेययोरेकत्र वाच्यविधया सम्बद्धेनापि विपरिणमितलिङ्गवचनादितयाऽवाच्येनापि व्यङ्ग्यविधयाऽन्वितेनेति दिशा करणीयः। तथा च एकत्रावरोधनिबन्धन एवायं दोष इति। उक्तञ्चोद्द्योते—अत एव यत्रानुपात्तसाधारणधर्मस्तत्र न दोषः। कल्प्यमानस्य लिङ्गरहितस्यैव कल्पनेनोभयसाधारणत्वात्। एवं यत्र लिङ्गरहितार्थोपस्थापकतिङन्तेन साधारणधर्मोपस्थितिस्तत्रापि न दोषः। यथा—स्त्रीव गच्छति षण्ढोऽयमित्यादाविति। यथाश्रुतार्थादरे तु प्रकरणभेदस्वीकारेण प्रकाशीय'प्रतीयमान'पदयोः सामञ्जस्यं द्रष्टव्यम्। तथा हि—अत्र यदुक्तं तल्लिङ्गवचनादिविषये ज्ञातव्यम्, वक्ष्यमाणे तु कालादिभेदविषये, अत एव 'न कश्चित् कालादिभेदः' इति प्रकाशकृता स्वयमेव तत्र वक्ष्यते। कालादयश्च कालपुरुषविध्यादयः प्रक्रान्ताः।

---

1. 'च्युतोऽसी'ति क्वचित् पाठः। 2. अयमंशो ग-पुस्तके नास्ति। 3. अयमंशो ग-पुस्तके नास्ति। 4. अयमंशो ग-पुस्तके नास्ति। 5. 'च्युत इति' इति ग-पुस्तकपाठः। 6. अयमंशो ग-पुस्तके नास्ति। 7. अयमंशो ग-पुस्तके नास्ति।

यत्र तु नानात्वेऽपि लिङ्गवचनयोः सामान्याभिधायि पदं स्वरूपभेदं नापद्यते न तत्रैतद्दूषणावतारः, (A)उभयथाऽपि अस्यानुगमक्षमस्वभावत्वात्। यथा—

गुणैरनर्घैः प्रथितो रत्नैरिव महार्णवः ॥ ५८७ ॥

तद्वेषोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः।
दधते स्म परां शोभां तदीया विभ्रमा इव ॥ ५८८ ॥

कालपुरुषविध्यादिभेदेऽपि न तथा प्रतीतिरस्खलितरूपतया(B) विश्रान्तिमासादयतीत्यसावपि भग्नप्रक्रमतयैव व्याप्तः। यथा—

---

[1]इत्थमुद्वेगकारणं दर्शयित्वा[1]* ईदृशोद्वेगाभावे तु न दोष इत्याह—यत्र तु नानात्व इति। [2]अत्र लिङ्गभेदे दर्शयति—[2]* गुणैरनर्घैरिति। अत्र गुणरत्नयोरुपमेयोपमानयोः पुंनपुंसकलिङ्गपदार्थयोर्धर्मबोधकस्यानर्घैरित्यस्य उभयत्रैकरूपत्वाददोषता।

वचनभेदस्याप्यन्यरूपत्वाभावेऽदोषत्वमाह—तद्वेष इति। मधुरतया भृतः पूरितस्तद्वेषोऽन्याभिः स्त्रीभिरसदृशोऽन्यस्त्र्यसाधारणः परां शोभां दधते स्म दधाति स्मेत्यर्थः। अत्र दध धारणे आत्मनेपदी। वेषः कीदृशः, तदीया विभ्रमा इव। अत्रापि परां शोभां दधते इत्यन्वयः। अत्र धातो बहुवचनम्। विभ्रमाः कीदृशाः? अन्याभिः स्त्रीभिरसदृशो मधुरतां बिभ्रतश्च। अत्र सदृश-भृत्पदे क्विबन्त-दृश-भृञ्-धातुभ्यां साधिते बहुवचनान्ते। उभयथाऽप्येकरूपता।

कालपुरुष इति। कालोऽतीतवर्तमानादिः, पुरुषा नामयुष्मदस्मद्योगयोग्याः प्रथममध्यमोत्तमाः, विधिरप्रवृत्तप्रवर्तनात्मकः (C)सप्तम्यादिः, उपमानोपमेययोस्तद्भेद इत्यर्थः। अस्खलितेति। तेन किञ्चित् स्खलनादल्पदोष एवायं काव्येषु प्रायस्तिष्ठतीति सूचितम्। 'विश्रान्तिं' निराकाङ्क्षताम्।

---

(A) उभयथाऽपीति। उपमानलिङ्गवचनविशिष्टत्वेन उपमेयलिङ्गवचनविशिष्टत्वेन वा। अनुगमक्षमस्वभावत्वादिति उभयत्रान्वययोग्यस्वरूपत्वात्।

(B) अस्खलितरूपतया अविपरिणमितस्वाभाव्येन।

(C) सप्तम्यादिरिति। कलापमते विधिलिङः सप्तमीसंज्ञा। आदिना लोट्तव्यादीनां ग्रहणम्।

---

1. अयमंशो ग-पुस्तके नास्ति। 2. अयमंशो ग-पुस्तके नास्ति।

अतिथिं नाम काकुत्स्थात् पुत्रमाप कुमुद्वती ।
पश्चिमाद् यामिनीयामात् प्रसादमिव चेतना ॥ ७८९ ॥

अत्र चेतना प्रसादमाप्नोति न पुनरापेति कालभेदः ।

प्रत्यग्रमज्जनविशेषविविक्तमूर्त्तिः
कौसुम्भरागरुचिरस्फुरदंशुकान्ता ।

---

[1]अत्र कालभेदे उदाहरति[1]* अतिथिमिति। काकुत्स्थात् कुशात्। न पुनरापेति। (A)अतीतप्राप्तिमात्रस्य तात्पर्याविषयत्वादिति भावः।

पुरुषभेदमाह—प्रत्यग्रेति। अशोके कामदेवमर्चयन्तीं [2]स्नातां[2]* वासवदत्तां प्रति वत्सराजस्योक्तिरियम्। मकरकेतनं कामदेवमर्चयन्ती त्वं विभ्राजसे, (B)नवीनोत्थितस्य समुद्रे वृत्ताकारप्रवालस्य विद्रुमस्य विटपजा लतेव। तद्विटपे लताभावेऽपि विटपान्तरे सम्भाविता सा उपमानम् अतो न वक्ष्यमाण उपमानासम्भवः। सम्भावनाऽसम्भव एव तत्त्वात्। साऽपि हि मकरकेतनं समुद्रमर्चयन्ती स्वशोभया पूज्यं कुर्वती। द्वयोरन्यद् विशेषणद्वयमाह—प्रत्यग्रेति कौसुम्भेति च। त्वं प्रत्यग्रेण तत्कालीनेन मज्जनविशेषेण स्नानविशेषेण विविक्तमूर्त्ति(C)र्निर्णिक्तमूर्त्तिः। लता तु मज्जनविशेषाज्जलतलीभावात् प्रत्यग्रं तत्कालं विविक्तमूर्त्ति(D)रुत्थितमूर्त्तिः। तथा त्वं कौसुम्भ-

---

(A) अतीतप्राप्तिमात्रस्येति। अयमाशयः—यद्यप्यतीतपश्चिमरात्रयामाच्चेतना प्रसादमापैव तथाऽपि न तन्मात्रं वक्तुराशयः परमद्याप्याप्नोतीति कालभेद एवेति।

(B) नवीनोत्थितस्येति। विद्रुमस्वरूपमुक्तम्—

श्वेतसागरमध्ये तु जायते वल्लरी तु या।
विद्रुमा नाम रत्नाख्या दुर्लभा वज्ररूपिणी॥

इति शब्दकल्पद्रुमधृत-युक्तिकल्पतरौ। उदाहरणचन्द्रिकाकारादयस्तु प्रवालपदस्य किशलयपरतामादायैव व्याख्यां रचयाम्बभूवुः, प्रथमपादस्य चोभयसाधारणीकरणाय मज्जनस्य लतापक्षे सेकार्थतां विवव्रुः, मकरकेतनमर्चयन्तीत्यस्य तु उपमानलतान्वयित्वं दूरत एवोत्ससृजुरिति ज्ञेयम्। महेश्वरस्तूपमानस्यार्थान्तरकल्पनेन सर्वाण्येव विशेषणान्युभयत्र योजयन् विजयते।

(C) निर्णिक्तमूर्त्तिः शोधितमूर्त्तिः।

(D) उत्थितमूर्त्तिरिति। अत्र पक्षे विविक्ता पृथग्भूता समुद्रादिति शेषः, तत एवोत्थानात्, मूर्त्तिर्यस्या इत्यर्थः। 'विविक्तं त्रिष्वसंपृक्ते रहःपूतविवेकिषु' इति मेदिनी।

---

1. अयमंशो ग-पुस्तके नास्ति। 2. 'स्नानयुक्ताम्' इति ख-पाठः; नास्ति ग।

विभ्राजसे मकरकेतनमर्चयन्ती
बालप्रवालविटपप्रभवा लतेव ॥ ५९० ॥

अत्र लता विभ्राजते न तु विभ्राजसे इति सम्बोध्यमाननिष्ठस्य परभागस्य असम्बोध्यमानविषयतया व्यत्यासात् पुरुषभेदः ।

'गङ्गेव प्रवहतु ते सदैव कीर्त्तिः'

इत्यादौ च गङ्गा प्रवहति न तु प्रवहतु इति (A)अप्रवृत्तप्रवर्त्तनात्मनो विधेः । [1]एवंजातीयकस्यान्यस्याप्यर्थस्य उपमानगतस्यासम्भवाद् विध्यादिभेदः ।

ननु समानमुच्चारितं प्रतीयमानं वा धर्मान्तरमुपादाय पर्यवसितायामुपमायामुपमेयस्य प्रकृतधर्माभिसम्बन्धान्न कश्चित् कालादिभेदोऽस्ति । यत्राप्युपात्तेनैव सामान्यधर्मेण उपमाऽवगम्यते यथा

रागेण रुचिरं स्फुरन् अंशुकस्यान्तो यस्यास्तादृशी, लता तु कौसुम्भरागेण रुचिरं स्फुरताऽंशुना रश्मिना कान्ता कमनीया । अत्र पुरुषभेदं ग्राहयति—अत्र लतेति । व्यत्यासादिति । अनेन व्यत्यासे किञ्चिद्विलम्बनमल्पदोष इति सूचितम् ।

विधिभेदमाह—गङ्गेवेति । विधेरित्यत्र भेद इत्यन्वयः । अन्यस्याप्यर्थस्येति । मान्धातेव पुत्रो भविष्यतीत्यत्र मान्धातरि भविष्यत्त्वानन्वयः ।

नन्वेषूदाहरणेषु विभिन्नकालादिकेन धर्मेण नोपमा, किन्तु कालादिभेदरहितेनैव धर्मान्तरेण ; स च धर्मः क्वचिदुच्चारितः क्वचित्तु व्यङ्ग्य इत्यतो न दोष इत्याशङ्कते—ननु समानमिति, [2]समानं साधारणं धर्मान्तरमुच्चारितं वा प्रतीयमानं व्यङ्ग्यं वा उपादाय पर्यवसितायामुपमायामित्यर्थः । उपमेयस्येति, उपमेयस्यैवेत्यर्थः । 'प्रकृतधर्मः' उपमानान्वितकालादिरूपः[2]* । ननु यत्राविभिन्नकालादिकेनैव धर्मेणोपमायां तात्पर्यं तत्र का गतिरित्यत्राऽऽह—यत्रापीति । [3]उपात्तेनैवेति, विभिन्नकालादिकेनेति

(A) अप्रवृत्तेति । आशीर्विहितलोट्प्रत्ययस्यानागतेष्टविषयार्थकत्वात् कीर्त्तावेवान्वयो न तु विद्यमाने गङ्गाप्रवाहे । एवं यथा गङ्गा प्रवहति तथा कीर्त्तिः प्रवहतु इत्यर्थे विधेर्भेदः । यद्यपि विधेरेकमात्रान्वयिनो न भेदस्तथाऽपि व्यत्यास एवात्र भेदपदार्थ इत्युद्द्योतः ।

1. 'एवंजातीयकस्य चान्यस्यार्थस्य' इति पाठः क्वचित् । 2. अयमंशो नास्ति ग । 3. ग-पुस्तके अयमंशो नास्ति ।

'युधिष्ठिर इवायं सत्यं वदती'ति, तत्र युधिष्ठिर इव सत्यवाद्ययं सत्यं वदतीति प्रतिपत्स्यामहे। सत्यवादी सत्यं वदतीति च न पौनरुक्त्यमाशङ्कनीयम् 'रैपोषं पुष्णाती'तिवद् युधिष्ठिरसत्यवदनेन सत्यवाद्ययमित्यर्थावगमात्। सत्यमेतत्, किन्तु स्थितेषु प्रयोगेषु समर्थनमिदम्, न तु सर्वथा निरवद्यम्, प्रस्तुतवस्तुप्रतीतिव्याघातादिति स[...]स एवात्र प्रमाणम्।

असादृश्यासम्भवावप्युपमायामनुचितार्थायामेव पर्यवस्यतः। यथा—

ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम् ॥ ५९१ ॥

---

शेषः। तादृशं स्थलं दर्शयति—**यथा*** **युधिष्ठिर इवे**ति। युधिष्ठिरे वर्तमानसत्यवदनबाधात्। कालभेदेऽपि यत्र तेनैवोपमा गम्यते तत्रापि समाधानमाह—**तत्रे**ति। सत्यवादित्वेन तदात्विमेन समानधर्मेणात्रोपमेत्यर्थः। तदा च सत्यं वदतीत्यस्य पौनरुक्त्यमाशङ्क्य निषेधति—**रैपोषमिति**। धनपोषमित्यर्थः। (A)णमन्तमिदम्। णमन्तधात्वर्थस्य च अनुप्रयुक्तधात्वर्थकारणताऽवगम्यते, तथा च धनपोषेण पुष्यतीत्यर्थः। पोषणसामान्ये च पोषणविशेषस्य हेतुत्वान्नाऽऽत्माश्रयः। तद्वद् युधिष्ठिरतुल्यसत्यवदनेन सत्यं वदतीत्यर्थः। शिक्षितो नृत्यतीत्यादौ कर्तृविशेषणस्य शिक्षितत्वादेरिव कर्तृविशेषणस्य सत्यवादित्वस्य क्रियायां हेतुत्वावगमाद् युधिष्ठिरतुल्यसत्यवदनेनेति लभ्यते इति बोध्यम्। **सत्यमित्या**दिनाऽस्याल्पदोषत्वं न सर्वथा काव्ये हेयत्वप्रयोजकत्वमिति प्रतिपादितम्।

**असादृश्येति**। सादृश्यराहित्यमुपमानासम्भवश्चेत्यर्थः। **ग्रथ्नामीति**। काव्यं शशीवेत्युपमा। (B)यद्यपि रूपकमपीदं सम्भवति तथाऽपि तत्राप्युपमानोपमेय-

---

(A) णम् इति कालापिकानां संज्ञा णमुल् इति पाणिनीयं नाम।

(B) यद्यपीति। यथा काव्यं शशीवेति उपमापक्षे उपमानस्य प्रकृतक्रियायामन्वयाभावाद् मुखचन्द्रं चुम्बतीत्यादिवद् दोषोऽपरिहार्यः, एवं काव्यमेव शशीति रूपकपक्षेऽपि ग्रथ्नामीत्यनेनान्वयाभावादयोग्यमिदं पदकदम्बकम्, तथाऽपि तत्सर्वमनालोच्यैव सादृश्यगतदोषप्रदर्शनार्थमिदमुदाहृतमिति ज्ञेयम्। एवञ्च—'न च काव्यमेव शशीत्यादिरीत्या रूपकसमास एवास्तु, रूपकस्यापि सादृश्यमूलकत्वात् तत्राप्ययं दोषः सम्भवतीति वाच्यम्, ग्रथ्नामीति बाधकावतारादिति' यत् केनचिदुक्तम् तदनादेयमेवेति बोध्यम्, दोषसाम्ये एकतरस्य हानोपादानानौचित्यात्।

अत्र काव्यस्य शशिना अर्थानां च रश्मिभिः साधर्म्यं कुत्रापि न प्रतीतमित्यनुचितार्थत्वम् ।

निष्पेतुरास्यादिव तस्य दीप्ताः शरा धनुर्मण्डलमध्यभाजः ।
जाज्वल्यमाना इव वारिधारा दिनार्धभाजः परिवेषिणोऽर्कात् ॥५९२॥

अत्रापि ज्वलन्त्योऽम्बुधाराः सूर्यमण्डलान्निष्पतन्त्यो न सम्भवन्तीत्युपनिबध्यमानोऽर्थोऽनौचित्यमेव पुष्णाति ।

उत्प्रेक्षायामपि सम्भावनं ध्रुवेवादय एव शब्दा वक्तुं सहन्ते न यथा-शब्दोऽपि, केवलस्यास्य साधर्म्यमेव प्रतिपादयितुं पर्याप्तत्वात्, तस्य चास्यामविवक्षितत्वादिति तत्राशक्तिरस्यावाचकत्वं दोषः ।

---

भावस्यैव प्रयोजकत्वात् तत्राप्यसादृश्यं दोष इति बोध्यम् । [1]अत्र काव्यशशिनोरर्थरश्म्योश्च उपमायामसादृश्यं ग्राहयति—अत्रेति[1]* ।

उपमानासम्भवमुदाहरति—निष्पेतुरिति । [2]आकर्णकृष्टाद्धनुषो वीरेण मुच्यमानानां शराणां वर्णनमिदम्[2]* । धनुर्मण्डलमध्यभाज आस्यादिव तस्य शराः निष्पेतुः । आकर्णधनुःकर्षणेन धनुर्मण्डलमध्ये आस्यदर्शनात् । परिवेषिणः परिवेषवेष्टिताद् दिनार्द्धभाजो मध्याह्नीयादर्काज्जाज्वल्यमाना वारिधारा इव । धनुर्मण्डलस्थाने परिवेषः । [3]न चात्राभूतोपमेति वाच्यम्, सम्भावनयाऽपि प्रसिद्धिसम्भव एव तथात्वादिति व्याख्यातं 'जङ्घाकाण्डोरुनाल' (२६१ पृ०) इत्यादिश्लोकव्याख्यावसरे[3]* । असम्भवं ग्राहयति—अत्रापीति । न केवलं वाच्यार्थस्य निन्दाव्यञ्जनादेवानौचित्यम्, अपि तु वाच्यार्थस्यासम्भवोऽप्यनौचित्यमित्यपि-[4]कारार्थः ।

यथा-शब्दस्योत्प्रेक्षावाचकत्वाभावादुत्प्रेक्षायां तस्यावाचकत्वमेवं दोष इत्याह—उत्प्रेक्षायामपीति । [5]केवलस्यास्येति असमासस्थस्येत्यर्थः । समासे तु साधर्म्यार्थकत्वमस्य नास्तीति भावः । यथासम्भवम्, यथायोगम्, यथार्थम्, यथासंख्यम्, यथानामगोत्रस्येत्यादिषु[5]* । तस्य चास्यामिति । तस्य साधर्म्यस्य अस्यामुत्प्रेक्षायामित्यर्थः ।

---

1. अयमंशो ग-पुस्तके नास्ति । 2. अयमंशो ग-पुस्तके नास्ति । 3. अयमंशो ग-पुस्तके नास्ति ।
4. 'वाक्यार्थः' इति ग-पुस्तकपाठः । 5. ग-पुस्तकेऽयमंशो नास्ति ।

यथा—

उदूययौ दीर्घिकागर्भान्मुकुलं मेचकोत्पलम् ।
नारीलोचनचातुर्यशङ्कासङ्कुचितं यथा ॥ ५९३ ॥

उत्प्रेक्षितमपि तात्त्विकेन रूपेण परिवर्जितत्वाद् निरुपाख्य-प्रख्यम्, तत्समर्थनाय यदर्थान्तरन्यासोपादानं तद् आलेख्यमिव गगनतलेऽत्यन्तमसमीचीनमिति निर्विषयत्वमेतस्यानुचितार्थतैव दोषः। यथा—

दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैःशिरसामतीव ॥ ५९४ ॥

अत्राचेतनस्य तमसो दिवाकरात् त्रास एव न सम्भवतीति कुत

उदूययाविति। मेचकम् उत्पलं पुष्पं यस्मात् तादृशं मुकुलं दीर्घिका-गर्भादुद्ययौ इत्यर्थः। अत्रोत्प्रेक्षते—नारीलोचनेति। शङ्का पराजयभयम्। अत्र यथा-शब्द उत्प्रेक्षाऽवाचकः। इव-शब्दतुल्यपर्यायकत्वमत्र शक्तिभ्रमबीजम्।

उत्प्रेक्षितार्थस्यालीकत्वात् तत्समर्थनायार्थान्तरन्यासोऽप्यनुचितार्थान्तर्गत इत्याह—उत्प्रेक्षितमपीति। तात्त्विकेन यथार्थेन ; निरुपाख्यमुपाख्यारहितमलीकमित्यर्थः। उपाख्या संज्ञा। संसर्गालीकत्वेऽपि पदार्थानलीकत्वात् तत्प्रख्यं तत्तुल्यमित्यर्थः। आलेख्यं चित्रम्। 'निर्विषयत्वम्' अर्थान्तरन्यासस्य तादृशविषयराहित्यम्, अमिथ्या-करणरूपस्य समर्थनस्य अलीकार्थाविषयत्वादिति भावः।

दिवाकरादिति। यो हिमालयो गुहासु लीनमन्धकारं दिवाकराद् रक्षति। तत्रोत्-प्रेक्षते—दिवेति। दिवा दिवसे भीतमिव सूर्यादिति शेषः। दिवा दिवसे रक्षतीति वाऽन्वयः। तादृशभीतरक्षणं सामान्येन समर्थयति—क्षुद्रेऽपीति। [1]न केवलं शरणापन्ने महति जन एव उच्चैःशिरसां विभुत्वाद्युन्नतशिरसाम् उच्चशिखराणाञ्च रक्षणप्रयोजकं ममत्वम् अपि तु क्षुद्रेऽपीत्यर्थः। अत्र वक्ष्यमाणशरणागतसामान्येन वक्ष्यमाणविशेषस्य तमसः समर्थनम्[1]*। उच्चैःशिरसां महताम्। अनौचित्यं ग्राहयति—अत्रेति। [2]ननु यद्यलीकार्थसमर्थनायार्थान्तरन्यासोऽनुचितस्तत् कथं 'सुसितवसना-

1. अयमंशो ग-पुस्तके नास्ति। 2. 'एवञ्च समर्थितस्यार्थस्यासम्भवोऽपि अनौचित्यमेवेति भावः' महतोऽस्य ग्रन्थस्य स्थाने एतावन्मात्रः पाठो ग-पुस्तके।

एव तत्प्रयोजितमद्रिणा परित्राणम्; सम्भावितेन तु रूपेण प्रतिभासमानस्यास्य न काचिदनुपपत्तिरवतरतीति व्यर्थ एव तत्समर्थनायां यत्नः।

साधारणविशेषणवशादेव समासोक्तिरनुक्तमपि उपमानविशेषं प्रकाशयतीति तस्यात्र पुनरुपादाने प्रयोजनाभावाद् अनुपादेयत्वं यत् तद् अपुष्टार्थत्वं [1]पुनरुक्तता वा[1]* दोषः। यथा—

स्पृशति तिग्मरुचौ ककुभः करैर्दयितयेव विजृम्भिततापया।
अतनुमानपरिग्रहया स्थितं रुचिरया चिरयाऽपि दिनश्रिया ॥२९९॥

---

लङ्कारायाः'-(५४१ पृ०)मित्यत्र श्रूयमाणकीर्त्या वस्तुतोऽप्रकाशिकयाऽप्यभिसारिकाया निःशङ्कप्रियगृहगमनमलीकं 'क्व नासी'त्यनेन समर्थितम्, इत्यत आह—सम्भावितेनेति। तत्र हि नोत्प्रेक्षा, किन्त्वलीकमपि कीर्त्या सुखेन प्रियगृहगमनं प्रौढोक्तिवशादाहार्यं निश्चितम्। अतस्तत्रानुपपत्त्यभावे तन्निराकरणाय तस्यार्थस्य सत्यताप्रतिपादनरूपं समर्थनमर्थान्तरन्यासेन कृतम्। प्रकृते उत्प्रेक्षया सम्भावितमेव गिरिणा तमसो मोक्षणमलीकत्वेनैव प्रतिभासमानम् अप्रौढोक्तिसिद्धत्वेनाऽऽहार्यज्ञानस्याप्यविषयः। अर्थान्तरनिरसनीयानुपपत्तिस्तत्र नावतरत्येवेत्यर्थः*।

समासोक्तिलभ्यार्थस्य शब्देन कथनमपुष्टार्थत्वे पुनरुक्तत्वदोषे वा [2]विनिविशते इत्याह—साधारणेति। प्रकृतसाधारणविशेषणवशादनुक्तमप्युपमानविशेषं समासोक्तिः प्रकाशयतीत्यतस्तस्योपमानस्य शब्देन पुनः प्रतिपादने प्रयोजनाभावादनुपादेयतायां सत्यां यत् तदुपादानं तदत्रापुष्टार्थत्वं पुनरुक्तं वा दोष इत्यर्थः। [3]तदपुष्टार्थत्वमिति। ननु विवक्षितार्थस्य शब्दवाच्यतैव पुष्टिरिति नापुष्टार्थत्वमत आह—[3]* पुनरुक्तता वेति।

स्पृशतीति। दीर्घतरदिवसश्रीवर्णनमिदम्। तिग्मरुचौ सूर्ये करैः ककुभः स्पृशति सति चिरया दीर्घयाऽपि दिवसश्रिया अतनोरनल्पस्य मानस्य प्रतिग्रहो यस्यास्तादृश्या स्थितम्। अतनुना अनङ्गेन यो मानः क्रोधस्तत्परिग्रहया दयितयेव। दिनश्रीदयितयोर्द्वयोरपि विशेषणान्तरद्वयमाह—विजृम्भितेति। चण्डकराधीनो दिनश्रियः, मानाधीनश्च दयितायास्तापः। रुचिरयेति मेघशिशिराद्यभावाद्दिनश्रियः, सौन्दर्याच्च दयिताया

---

1. पुनरुक्तं वे'ति पाठः क्वचित्। 2. 'अभिनिविशते' इति क-ग-पुस्तकयोः पाठः। 3. 'विशेषणपदस्यैवापुष्टार्थत्वं समासोक्तिलभ्यार्थस्य तु विशेष्यत्वेनापुष्टार्थत्वं न सम्भवतीत्याह—' इति ख-पुस्तकपाठः।

अत्र तिग्मरुचेः ककुभां च यथा सदृशविशेषणवशेन व्यक्तिविशेषपरिग्रहेण च नायकतया नायिकात्वेन च व्यक्तिः, तथा ग्रीष्मदिवसश्रियोऽपि प्रतिनायिकात्वेन भविष्यतीति किं दयितयेति स्वशब्दोपादानेन।

श्लेषोपमायास्तु स विषयो यत्रोपमानस्योपादानमन्तरेण साधारणेष्वपि विशेषणेषु (A)न तथा प्रतीतिः। यथा—

स्वयं च पल्लवाताम्रभास्वत्करविराजिता।
प्रभातसन्ध्येवास्वापफललुब्धेहितप्रदा॥ ५९६॥ इति

अप्रस्तुतप्रशंसायामपि उपमेयमनयैव रीत्या प्रतीतं न पुनः प्रयोगेण कदर्थतां नेयम्।

---

रुचिरता। अत्र तिग्मरुचेर्नायकत्वस्य ककुभः प्रतिनायिकात्वस्य च यथाऽशाब्दत्वेऽपि व्यञ्जनया लाभस्तथा दिवसश्रियोऽपि नायिकात्वलाभसम्भवे दयितयेवेत्यस्य पुनरुक्तत्वमेवेति ग्राहयति—अत्रेति। 'सदृशविशेषणं' तिग्मरुचिनायकयोः करैः प्रतिनायिकास्पर्शित्वम् ककुप्प्रतिनायिकयोश्च तत्स्पृश्यमानत्वम् दिवसश्रीनायिकयोश्चातनुमानपरिग्रहो विजृम्भिततापत्वं रुचिरत्वञ्च बोध्यम्। व्यक्तिविशेषौ स्त्रीपुंलिङ्गे।

ननु श्लेषोपमैवेयमित्यत आह—श्लेषोपमाया इति। स्वयं चेत्यादिकं व्याख्यातं प्राक् (४५६ पृ०)। अत्र प्रभातसन्ध्यापदेनैवोपमानप्रतीतिः।

समासोक्तौ यथा प्रस्तुतकथनादेवाप्रस्तुतप्रतीत्या अप्रस्तुतं न वाच्यतां नेयम्, तथा अप्रस्तुतप्रशंसायामपि अप्रस्तुतकथनादेव प्रस्तुतप्रतीत्या अप्रस्तुतं न वाच्यतां नेयम्। तद्वाचकशब्दोपादाने तु पुनरुक्तत्वमेव दोष इत्यत आह—अप्रस्तुतप्रशंसायामपीति।

---

(A) न तथा प्रतीतिरिति। 'अयमाशयः—यत्रोपमानस्य स्वपदोपादानेऽपि न समासोक्तित्यागस्तत्राऽऽवश्यकसमासोक्त्यैव निर्वाहे उपमानपदोपादानं व्यर्थम्। यथा स्पृशतीत्यादौ। अत्र दयितयेत्युपादानेऽपि रवेर्नायकत्वं ककुभां नायिकात्वञ्च समासोक्त्यैवेति तस्या आवश्यकत्वम्। यत्र तूपमानपदोपादाने समासोक्तिनिवृत्तिस्तदनुपादाने च यत्रोपमानाप्रतीतिरुपात्तसाधारणधर्माणामुपमेयमात्रान्विततयैव प्रतीतेः, तत्रोपमाया एव चमत्कारित्वाय देयं तत्पदम्। यथा स्वयञ्चेत्यादौ, अत्रोपमानपदोपादाने समासोक्तित्यागादितीत्युद्द्योतः।

यथा—

आहूतेषु विहङ्गमेषु मशको नायान् पुरो वार्यते
मध्ये वा धुरि वा वसंस्तृणमणिर्धत्ते मणीनां रुचम् ।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक् सामान्य[1]मचेतसं प्रभुमिवाना(A)मृष्टतत्त्वान्तरम् ॥ ५९७ ॥

[2]अत्राचेतसः प्रभोरप्रस्तुतविशिष्टसामान्यद्वारेणाभिव्यक्तौ न युक्तमेव पुनः कथनम् ।

तदेतेऽलङ्कारदोषा यथासम्भविनोऽन्येऽप्येवंजातीयकाः पूर्वोक्तयैव दोषजात्याऽन्तर्भाविता न पृथक् प्रतिपादनमर्हन्तीति सम्पूर्णमिदं काव्यलक्षणम् ॥

---

आहूतेष्विति। अचेतसम् विवेचनारहितं सामान्यं निकृष्टं जनं धिक्। अचेतस्त्वं धिग्हेतुः। अनामृष्टम् अपरिभावितं तत्त्वं यथार्थवस्तु यत्र तादृशमान्तरं चेतो यस्य तादृशं प्रभुमिव। सामान्यस्याचेतस्त्वं कथमित्यत्राऽऽह—आहूतेष्विति। विहङ्गमेषु विहायसा गच्छत्सु आहूतेषु सत्सु विहायसा गामित्वान्मशकोऽपि पुरः आयान् आगच्छन् न वार्यते, अवारणे तु आयात्येवेत्यतो मशकोऽप्यायातीत्येव विवक्षितार्थः, वारणस्य प्रकृते विधेयत्वानुपयोगात्। मध्ये अर्थादुपस्थितस्य यानस्य मध्ये वा धुरि यानमुखे वा वसन् तृणमणिस्तृणापकर्षकोऽल्पमूल्यमणिः रथशोभाकरमहामूल्यमणीनां रुचं धत्ते। 'मध्येवारिधि वा वसन्नि'ति क्वचित् पाठः। तथा वारिधेर्मध्ये पुनः पुनर्वसन्नित्यर्थः। 'धूः स्त्री यानमुखम्' इति कोषः। न कम्पते न बिभेति। प्रचलितुं गन्तुम्। मध्येऽपीत्यपि-कारस्य तेजस्विनामपीति योजना। अत्र प्रभुमिवेत्यस्याप्रस्तुतमशकादिसामान्यकथनादेव लाभे तद्वाच्यत्वं पुनरुक्तिरेवेत्याह—अत्राचेतसः प्रभोरिति।

उक्तेष्वन्तर्भवन्तीत्युपसंहृत्य दर्शयति—तदेत इति। सम्पूर्णमिदं काव्य-

---

(A) अनामृष्टतत्त्वान्तरम् अविचारितपदार्थगतविशेषमित्युद्द्योतः।

---

1. '-मचेतनम्' इति क्वचित् पाठः। 2. 'अत्राचेतनस्य' इति पाठः क्वचित्।

इत्येष मार्गो विदुषां विभिन्नोऽप्यभिन्नरूपः प्रतिभासते यत्।
न तद्विचित्रं यदमुत्र सम्यग् विनिर्मिता संघटनैव हेतुः॥

इति काव्यप्रकाशेऽर्थालङ्कारनिर्णयो नाम दशम उल्लासः।

समाप्तश्चायं काव्यप्रकाशः॥

---

लक्षणमिति। तददोषौ शब्दार्थाविति (१७ पृ०) यत् काव्यलक्षणं तदुत्थापिताकाङ्क्षया शब्दतदर्थ-तद्द्वयदोष-तद्द्वयगुण-तद्द्वयालङ्काराणामुक्त्या सम्पूर्णमित्यर्थः।

---

इत्येष इति। इत्येष आश्चर्यरूपो मार्गः काव्यज्ञानौपयिकत्वात् काव्यस्य पन्थाः, विभिन्नोऽपि अनेकालङ्कारग्रन्थगतत्वेन भिन्नरूपोऽपि यदभिन्नरूप एकरूपः प्रतिभासते विदुषां समीप इति शेषः, तद्विचित्रं न तत्र न विस्मेतव्यमित्यर्थः। यद् यस्माद् अमुत्र अभिन्नतया प्रतिभासने सम्यग् विनिर्मिता प्रकृतैककाव्यज्ञानप्रयोजकतया विहिता संघटना विक्षिप्तस्यैकत्र योजनैव हेतुः कारणम्, यथा हि घटनाविशेषवशान्मालाघटककुसुमानां सन्धिर्न दृश्यते, तथा नानाग्रन्थगतत्वेन भिन्नोऽप्ययं मार्गो रचनावशेनाभिन्न इव प्रतीयते इति नात्र विस्मयावकाशः।

यद्वा, ननु सत्सु प्राचीनप्रबन्धेषु काव्यप्रकाशे किमित्यादरः प्रामाण्यबुद्धिर्वा क्रियताम् इत्याह—इत्येष इति। अपिरत्र भिन्नक्रमः। तथा च अभिन्नरूपोऽपि दण्डिभामहप्रभृतिप्राचीनोक्तविषयजातमवलम्ब्य रचितत्वात् तदेकरूपोऽप्ययं मार्गः काव्यप्रकाशरूपो यद् विभिन्नः प्रतिभासते नूतनवस्तुसम्भृततया प्रतीयते तत्र सम्यग् विनिर्मिता यथास्थानसन्निवेशितदोषगुणालङ्कारादितया सुसंस्कृता संघटना रचनापरिपाट्येव हेतुः। तथा च प्राचीनालङ्कारिकसम्मत एव पदार्थोऽत्र मया सन्निवेशित इति नात्राप्रामाण्यबुद्धिः करणीया। न वार्वाचीनेऽप्यस्मिन् प्राचीनशास्त्रातिशायिनी बोधसौकर्याधायिनी सङ्घटनेत्यनादरो विधेयः सुधीभिरिति भावः।

"व्याख्यातश्चायं श्लोको निदर्शनकारैरपि—विदुषां ध्वनिकृत्प्रभृतीनां य एष मार्गः स्वसिद्धान्तस्तद्ग्रन्थगतः, तेन पृथगवस्थितोऽपि (यत्) एकरूपतया प्रतिभाति। तत्र सङ्घटनैव निमित्तम्। विक्षिप्तस्य सुखबोधायैकत्र संग्रहणं सङ्घटना तद्वशादेकात्मताप्रतिभासात्। एतेन च महामतीनां प्रसरणहेतुरेष ग्रन्थो ग्रन्थकृताऽनेन (मम्मटेन) कथमप्यसमाप्तत्वाद् अपरेण (अल्लटसूरिणा) च पूरितशेषत्वाद् द्विखण्डोऽप्यखण्डतया यदवभासते तत्र संघटनैव हेतुः। न हि सुघटितस्य सन्धिबन्धः कदाचिदपि विलक्ष्यते इत्यर्थशक्त्या ध्वन्यते। यदुक्तम्—'कृतः श्रीमम्मटाचार्यवर्यैः परिकरावधिः। प्रबन्धः पूरितः शेषो विधायाल्लटसूरिणा॥' इति। अन्येनाप्युक्तम्—

'काव्यप्रकाश इह कोऽपि निबन्धकृद्भ्यां द्वाभ्यां कृतेऽपि कृतिनां रसतत्त्वलाभः।
लोकेऽस्ति विश्रुतमिदं नितरां रसालं बन्धप्रकाररचितस्य तरोः फलं यत्॥'

इति बालबोधिनाकाराः।

[1]वैषम्योद्भटनक्रचक्रसतताक्रान्ताद्शक्तात्मनां
दुष्प्रापैः प्रचितात् समर्थनिचयैः काव्यप्रकाशार्णवात् ।
प्राप्तार्थात्मकमौक्तिकालिघटिता हारावलीयं सतां
भट्टाचार्यमहेश्वरेण रचिता काव्यप्रकाशोपरि ॥(A)

ये काव्यप्रतिदूषणैकनिरतास्ते केऽपि तेभ्यो नमो
ये तर्कैकरसाः कृतोऽञ्जलिरयं तेभ्योऽपि दूरान्मया ।
ये शब्दानुभवैकसंस्कृतहृदः काव्यार्थमर्मस्पृशो
छित्रास्ते जगतीति तान् प्रति मयैतावान् प्रयासः कृतः ॥(B)

काव्यप्रकाशस्य कृता गृहे गृहे टीका तथाऽप्येष तथैव दुर्गमः ।
सुखेन विज्ञातुमिमं य ईहते धीरः स एतां निपुणं विलोकताम्[1]* ॥

इति श्रीमम्मटभट्टविरचितस्य काव्यप्रकाशस्य टीकारूपे श्रीमहेश्वरन्यायालङ्कार-
भट्टाचार्यकृते आदर्शे ग्रन्थसमापकोऽर्थालङ्कारस्य
दशमः प्रतिबिम्बः ॥ १० ॥

---

(A) वैषम्येति । वैषम्यम् असम्बद्धार्थता तदेवोद्भटं प्रचण्डं नक्रचक्रं ग्राहसमूहस्तेन सतताक्रान्तात् निरन्तरं व्याप्तात्, अशक्तात्मनां समीपे तथात्वेन प्रतीयमानादित्यर्थः, अशक्तात्मानः समुद्रे रत्नसत्तां जानन्तोऽपि ग्राहादिभयात् तत्र नावतरन्त्येवेति भावः । उद्भटः क्रूरो वा । एवमपि शक्तात्मानस्तत् सर्वमविगणय्य रत्नसान्निध्यहृतहृदयास्तत्र प्रवर्त्तन्त इत्याह—दुष्प्रापैरिति । दुष्प्रापैर्दुर्लभैः समर्थनिचयैः सुसम्बद्धार्थसमूहैः प्रचितादाकीर्णात् काव्यप्रकाशार्णवात् काव्यप्रकाशरूपात् समुद्रात् प्राप्ता समाहृता, अर्थोऽभिधेयं तदात्मिका या मौक्तिकालिर्मौक्तिक-श्रेणिस्तया घटिता रचिता तदुपादानकेत्यर्थः, इयं हारावली व्याख्यारूपा हारश्रेणी महेश्वर-भट्टाचार्येण काव्यप्रकाशमधिकृत्य रचिता इत्यर्थः । यद्यपि समुद्रे ग्राहसत्तेव काव्यप्रकाशे वैषम्यदोषसत्ता न तात्त्विकीति साम्यविरहान्न रूपकस्याऽऽत्मलाभः सम्भवति, तथाऽप्यशक्तात्मभिः सम्भाव्यमानामेव तामुपादाय कथञ्चित् साम्यनिर्वाह इति ज्ञेयम् ।

(B) नित्यं यागाद्यनुशीलनेन कठोरमतयो जरन्मीमांसकादिसधर्माणः केचन काव्यालापांश्च वर्जयेदिति निषेधशास्त्रस्य सङ्कोचवृत्तितामनङ्गीकुर्वन्तः सर्वमेव काव्यं हेयमित्युपदिशन्ति । तेभ्यस्तु काव्यमेव न रोचते दूरे च तद्गुणदोषादिप्रतिपादकमलङ्कारशास्त्रमिति स्वप्रबन्धे तेषां दर्वीकर्कशकरावमर्शमसहमान आह—ये काव्यप्रतिदूषणैकनिरता इति । काव्यस्य दोषोद्भावन एव नियतं व्यासक्ता न तु गुणोद्भावनेऽपीत्यर्थः । ते केऽपि मादृशानां काव्यप्रकाशादि-टीकाकर्तॄणामज्ञेयस्वरूपाः, अतस्तेभ्यो नमस्तान् वैसर्जनिकं नमस्कारमावेदयामः, तेऽस्मात् काव्यमार्गादपसरन्त्वित्यर्थः । लोके हि विषयान्तरं प्रत्युन्मुखः पूज्यो जनः प्रणामादिभिः संवर्ध्यते

---

1. एते श्लोकाः क-ग-पुस्तकयोर्न सन्ति ।

इति शिष्टाचारः। पूज्याश्च काव्यप्रतिदूषणैकनिरता दुर्जनत्वात्, दुर्जनानाञ्च शिरःस्थाप्यत्वस्य नीतिकृत्सम्मतत्वात्। तर्कैकरसाः, तर्के न्यायविद्यायाम् एकः केवलो रसोऽनुरागो येषां ते न्यायमात्रानुरक्तहृदया इत्यर्थः। यद्यपि न ते काव्यप्रतिदूषणैकनिरतास्तथाऽपि तर्कव्याक्षिप्तचित्ता विषयान्तरमपि तर्कजलधौतमेव बहुमन्यमानाः शास्त्रान्तरस्य स्वाधीनसत्ताकत्वमवलुम्पन्तीति भावः। अतस्तेभ्योऽपि मया दूरादयमञ्जलिः कृतः। अञ्जलिरत्र प्रणामोपलक्षकः। तथा च यथा ह्यवश्यनमस्कार्यो मात्रादिर्गुरुजनः कथञ्चिदशुचित्वादिनाऽस्पृश्योऽपि दूरादेव नमस्क्रियते नमस्कृत्य च प्रस्थीयते तद्वदित्यर्थः। अत्र शास्त्रशिरोमणौ तर्के कृतप्रवेशतया पूज्यास्तर्कैकरसाः। एवमपि कौपमाण्डूक्यभावाद् विद्यान्तरमवज्ञया पश्यन्तस्तेऽशुचय इव विविधशास्त्रसारवेदिभिरस्पृश्या एव। ततश्च दूरत एव नमस्कार्याः। तेषामपसारणमनुचितमिति साकं टीकया स्वयं तेभ्योऽन्तर्धत्त इत्यर्थः। नन्वेवं नेति नेतीति न्यायेन सर्वनिरासप्रसङ्गस्ततश्च बोद्धव्याभावेन विफलादस्मादारम्भाद्विराम एव काममुचितत्वेन प्रतिभातीति चेत्तत्राऽऽह—ये इति। शब्दानामनुभवो ज्ञानं तेनैकसंस्कृतं प्राधान्येनाहितगुणान्तरं शोधितमिति यावत्, हृद् हृदयं येषां ते व्याकरणशास्त्रपर्यालोचनयाऽपनीतकाव्यज्ञानप्रतिबन्धकीभूतसंस्कृतभाषाऽपाटवा इति पर्यवसितोऽर्थः। एवमपि वासनाद्यभावेन रसास्वादविमुखतया तेऽपि कदाचिदनधिकारिणः स्युरित्यत आह—काव्यार्थ इति, काव्यार्थस्य मर्म रहस्यं तत् स्पृशन्ति ज्ञेयतया अवलम्बन्त इति काव्यार्थमर्मस्पृशः काव्यरसास्वादपटव इत्यर्थः। अत्र च शब्दानुभव-काव्यार्थमर्मस्पृक्त्वयोः परस्परमुपकार्योपकारकभावो लवणव्यञ्जनयोरिवानुसन्धेयः। ते चाल्प एवेत्याह—द्वित्रा इति। एवञ्चाल्पफलोऽपि न विफलोऽयमारम्भो वक्तुं युज्यते; फलतारतम्यञ्च न विवेचनमर्हति तस्यापेक्षाबुद्धिविशेषविषयत्वेन सर्वत्रैव सत्त्वात्। वरमेकोऽपि सहृदयो बोद्धव्यो न त्वहृदयाः सहस्रमिति भाव

मूलं मम्मटसूरिणां पुनरियं वृत्तिश्च तैर्निर्मिता<br>
सैषा विज्ञजनप्रमोदजननी टीकाऽपि माहेश्वरी।<br>
टिप्पण्यप्यरचि प्रदीपहृदयादेवं सुधासागराद्<br>
उद्द्योतादथ वैद्यनाथकृतितश्चाऽऽहृत्य सारं मया॥

एवं यद्यपि नास्ति किञ्चिदिह मे यन्नूतनं कथ्यतां<br>
त्यक्त्वा संघटनां तथाऽपि सुधियः सन्त्वत्र बद्धादराः।<br>
सञ्चिन्वन् कुसुमान्मधूनि सरघाव्रातः प्रयत्याऽनिशं<br>
क्षौद्रं यत् पटलं करोति कृतिनः के तन्न संगृह्णते॥

विबुधेनामरेन्द्रेण यदपूर्णतया कृतम्।<br>
तत् पूरितमुपेन्द्रेण केनापि द्विजसूनुना॥

समाप्तोऽयं ग्रन्थः



## काव्यप्रकाशस्थ-विशेषशब्दानां सूची

# काव्यप्रकाशोदाहृतश्लोकसूची

—:o:—

श्लोकाङ्काः पत्राङ्काः